KÂVYAMÂLÂ. 53.



THE

# VÂNÎBHÛSHANA

OF

# DÂMODARA MIS'RA.



EDITED BY

PAṆḌIT S'IVADATTA

Head Pandit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PAṆḌURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGAR" PRESS.

BOMBAY.

1895.

*Price 6 Annas.*

काव्यमाला. ५३.

श्रीदामोदरमिश्रविरचितं

# वाणीभूषणम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-शर्मणा च संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतम् ।

१८९५



मूल्यं ६ आणकाः ।

# वाणीभूषणस्यानुक्रमणिका ।

# काव्यमाला।

## श्रीदामोदरमिश्रविरचितं[1]

## वाणीभूषणम्[2]।

### प्रथमः परिच्छेदः।

राजत्कुञ्जरराजकृत्ति विमलोदञ्चद्दुकूलाकृति
भ्राजद्भोगिफणामणि[3] प्रविलसन्मुक्तामणिग्रामणि[4]।
पादाम्भोजभुजङ्गफूत्कृति रणन्मञ्जीरमञ्जुद्युति
श्रेयो वः शिवशैलराजसुतयोर्देयादभिन्नं[5] वपुः॥ १॥

सन्तीह यद्यपि महाकविसंप्रणीत-
ग्रन्थास्तथापि मम बालिशताविलासः।
संपूर्णशारदविधावुदयं प्रपन्ने
किं नाम नाभ्युदयमञ्चति तारकापि॥ २॥

अलसधियः प्राकृतमधि सुधियः केचिद्भवन्तीह।
कृतिरेषा मम तेषामातनुतादीषदपि तोषम्॥ ३॥

[6]दीर्घदोषकुलोद्भूतदामोदर इति श्रुतः।
छन्दसां लक्षणं तेन सोदाहरणमुच्यते॥ ४॥

---

१. अयं च दामोदरमिश्रो मैथिलज इति समाप्तिलेखतोऽवगम्यते. तत्रापि दीर्घघोषकुलोत्पन्न इति चतुर्थश्लोकतोऽवगम्यते. समयश्च प्राकृतपिङ्गलव्याख्यात्रा लक्ष्मीनाथेन १६५७ संवत्सरे निर्मितायां व्याख्यायामस्योल्लेखात्ततः प्राचीन इत्यवसीयते. २. अस्य ग्रन्थस्य पुस्तकचतुष्टयमस्माभिः समासादितम्. तत्र क-संज्ञकं २३ पत्रात्मकं संवत् १८३२ मध्ये लिखितं जयपुरराजगुरुभट्टश्रीलक्ष्मीदत्तानाम्, ख-संज्ञकं १५ पत्रात्मकं जयपुरराजगुरुभट्टश्रीश्रीनारायणपर्वणीकराणाम्, ग-संज्ञकं २६ पत्रात्मकं १७६२ संवत्सरे लिखितम्, घ-संज्ञकं २९ पत्रात्मकं महामहोपाध्यायपण्डितदुर्गाप्रसादशर्मणां संग्रहात्समासादितम्. ३. 'शश्व' क. ४. 'ग्रामणी' घ. ५. 'मभि' घ. ६. अयं श्लोको द्वितीयत्वेन लिखितो घ-पुस्तके.

[1]संयोगिपूर्वं सविसर्गकं च दीर्घस्वरैः संगतमन्त्यगं वा ।
विद्यादनुस्वारसमन्वितं च गुर्वक्षरं वक्रमिह द्विमात्रम् ॥ ५ ॥
संयुक्तपूर्वोऽपि [2]लघुः क्वचित्स्याद्वर्णस्तु [3]प्रह्लादिगतो विभाषा ।
[4]ऐं ओ क्वचित्प्राकृतके [5]लघू स्त इही तथा बिन्दुयुते पठित्वा ॥ ६ ॥

[7]टठडढणेति गणाः स्युः षट्पञ्चचतुस्त्रि[6]युग्ममात्राणाम् ।
तेषां त्रयोदशाष्टकपञ्च[8]त्रिद्विभेदाः स्युः ॥ ७ ॥

(मात्राप्रस्ताररीतिः—)

प्रथमगुरोरधरे लघु दत्त्वा शेषं समानमितरेण ।
उद्धृत्तं गुरुलघु वा प्रस्तारः सर्वलघु यावत् ॥ ८ ॥

(षट्कलभेदनामानि—)

शिवशशिदिनपतिसुरपतिशेषाहिसरोजधातृकलिचन्द्राः ।
ध्रुवधर्मौ [9]शालिकरः षण्मात्रे स्युस्त्रयोदश विभेदाः ॥ ९ ॥

(पञ्चकलभेदनामानि—)

इन्द्रासनमथ शूरश्चापो हीरश्च शेखरं कुसुमम् ।
अहिगणपापगणाविति पञ्चकलानां च नामानि ॥ १० ॥
सुनरेन्द्राधिपकुञ्जरपर्यायो [10]मेघदन्तयोश्चापि ।
ऐरावततारापतिरित्यादिलघोश्च पञ्चमात्रस्य ॥ ११ ॥
[11]पक्षी विराण्मृगेन्द्रामृतवीणायक्षगरुडाख्याः ।
जोहलकमिति संज्ञा मध्यलघोः पञ्चमात्रस्य ॥ १२ ॥

---

१. 'संयोग' ख-घ. २. 'क्वचिल्लघुः स्या' ख. ३. 'प्रह्लादेः प्राक्क्वचित्' इति छन्दः-पीयूषसूत्रानुसारेण तु 'प्रह्लादिपरः' इत्येव पाठो भवेत्। अतएव तत्र "आदिशब्दात् 'अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति' इत्यत्र रीकारस्य, 'भ्रमति भ्रमरनारी कानने विप्रयुक्ता' इत्यत्र तीकारस्य च लघुत्वादिष्टसिद्धिर्बोध्या" इत्याद्युक्तम्. ४. 'एतत्' क-ग; 'एवं' ख. ५. 'लघूक्त' ग. ६. 'युगे' ग. ७. षट्कलष्टगणस्त्रयोदशविधः । पञ्चकलष्ठगणोऽष्टविधः । चतुष्कलो डगणः पञ्चविधः । त्रिकलो ढगणस्त्रिविधः । द्विकलो णगणो द्विविधः' इति समुदितार्थः. ८. 'द्वित्रि' ग. ९. 'शालिकरौ' घ. १०. 'दन्तमेघयो' क-ख-घ. ११. 'पक्षिविराडमृ' क-ख-ग; 'पक्षिविडालमृ' घ.

[1]विविधप्रहरणनामा पञ्चकलः पिङ्गलेनोक्तः ।
गजरथतुरगपदातिसंज्ञकः स्याच्चतुर्मात्रः ॥ १३ ॥

(चतुष्कलप्रस्तारे पञ्चानां गणानां नामानि—)

कर्णः स्याद्गुरुयुगलं गुर्वन्तः करतलो भवति ।
गुरुमध्यमः पयोधर इति विख्यातस्तृतीयोऽसौ ।
आदिगुरुर्वसुचरणं चतुर्लघुर्द्विजवरो ज्ञेयः ॥ १४ ॥

(अन्तगुरुचतुष्कलनामानि—)

करबाह्वोः पर्यायाः प्रहरणभुजयोरलंकाराः ।
वज्रं रत्नमिति स्युर्गुर्वन्तचतुष्कले संज्ञाः ॥ १५ ॥

(मध्यगुरुनामानि—)

अश्वगजमनुजपतयो वसुधापतिचक्रवर्तिगोपालाः ।
नायकपवनपयोधररज्जव इति **मध्यगुरुसंज्ञाः** ॥ १६ ॥

(आदिगुरुनामानि—)

तातपितामहदहनाः पदपर्यायाश्च गण्डबलभद्रौ ।
[2]जङ्घायुगलं रतिरित्यादिगुरोश्चतुष्कले संज्ञाः ॥ १७ ॥

(त्रिकलप्रस्तारे गणत्रयनामानि—)

ध्वजचिह्नचिरचिरालयतोमरतुम्बुरुक[3]चूतमाला च ।
[4]रसवासपवनवलया **लघ्वादित्रिकलनामानि** ॥ १८ ॥

(गुर्वादित्रिकलनामानि—)

तालपटहकरतालाः सुरपतिरानन्दतूर्यपर्यायाः ।
निर्वाणसमुद्रावपि **गुर्वादित्रिकलनामानि** ॥ १९ ॥

(त्रिलघुगणनामानि—)

ताण्डवसात्त्विकभावा नारी च **त्रिकलनामानि** ॥ २० ॥

---

१. अयं श्लोक एकादशत्वेनाङ्गीकृतः क-ग-घ-पुस्तकेषु. २. 'फणिपतिनृपतिभणितमित्यादिगुरोः स्युश्चतुःकले संज्ञाः' ख; 'इत्यादि चतुष्कलसंज्ञा फणिराजनिर्दिष्टाः' घ. ३. 'चूढ' घ. ४. 'वसुवासवपवन' घ.

(गुरुनामानि—)

नूपुररसनाचामरकङ्कणमञ्जीरताटङ्काः ।
कुण्डलहारौ वलयं **गुरुनामानी**ति कथितानि ॥ २१ ॥

(लघुनामानि—)

शरमेरुदण्डकनकं शङ्खरवौ रूपगन्धकुसुमानि ।
स्पर्शरसाविति संज्ञा **मात्रामात्रस्य** पिङ्गलेनोक्ताः ॥ २२ ॥

(गणानां नामरूपाणि—)

मगणस्त्रिगुरुस्त्रिलघुर्नगणो भगणादिगुरुर्यगणादिलघुः ।
गुरुमध्यगजो लघुमध्यगरः सगणोऽन्तगुरुस्तगणोऽन्तलघुः ॥ २३ ॥

(गणानां देवताः—)

महीजलानलान्तकाः स्वरर्यमेन्दुपन्नगाः ।
फणीश्वरेण कीर्तिता गणाष्टकेऽष्ट देवताः ॥ २४ ॥

(गणानां फलानि—)

मः संपदं वितनुते नगणो यशांसि
श्रेयः करोति भगणो यगणो जयं च ।
देशाद्विवासयति जो रगणो निहन्ति
राष्ट्रं विनाशयति सस्तगणोऽर्थहन्ता ॥ २५ ॥

मैत्र्यं मगणनगणयोर्यगणभगणयोश्च भृत्यता भवति ।
औदास्यं जतगणयोररिभावः सगणरगणयोरुदितः ॥ २६ ॥

मित्रयोरुदिता सिद्धिर्जयः स्यान्मित्रभृत्ययोः ।
मित्रोदासीनयोर्न श्रीः स्यात्पीडा मित्रवैरिणोः ॥ २७ ॥

कार्यं स्यान्मित्रभृत्याभ्यां भृत्याभ्यां सर्वशासनम् ।
भृत्योदासीनयोर्हानिर्हाकारो भृत्यवैरिणोः ॥ २८ ॥

उदासीनवयस्याभ्यां क्षेम साधारणं फलम् ।
स्यादुदासीनभृत्याभ्या[1]मस्वायत्तिस्तु सर्वशः ॥ २९ ॥

---

१. 'भ्यां तस्यापत्ति' घ.

उदास्ताभ्यां फलाभावः परारत्योर्विरोधिता ।
शत्रुमित्रे फलं शून्यं स्त्रीनाशः शत्रुभृत्ययोः ॥
शत्रूदासीनयोर्हानिः शत्रुभ्यां नायकक्षयः ॥ ३० ॥

(मात्राणामुद्दिष्टम्—)

दत्त्वा पूर्वयुगाङ्कं गुरु शीर्षाङ्कं विलुप्य शेषाङ्के ।
अङ्कैरितोऽवशिष्टैः शिष्टैरुद्दिष्टमुद्दिष्टम् ॥ ३१ ॥

(मात्राणां नष्टम्—)

नष्टे कृत्वा कलाः सर्वाः पूर्वयुग्माङ्कयोजिताः ।
पृष्टाङ्कहीनशेषाङ्कं येन येनैव पूर्यते ॥ ३२ ॥
परां कलामुपादाय तत्र तत्र गुरुर्भवेत् ।
मात्राया नष्टमेतत्तु फणिराजेन भाषितम् ॥ ३३ ॥

(वर्णोद्दिष्टम्—)

उद्दिष्टे वर्णोपरि दत्त्वा द्विगुणक्रमेणाङ्कम् ।
एकं लघुवर्णाङ्के दत्त्वोद्दिष्टं विजानीत ॥ ३४ ॥

(वर्णनष्टम्—)

नष्टे तु कल्पयेद्भागं समभागे लघुर्भवेत् ।
दत्त्वैकं[1] विषमे भागे[2] कार्यस्तत्र गुरुर्भवेत् ॥ ३५ ॥

(वर्णमेरुः—)

कोष्ठमक्षरसंख्यातमन्त्याद्योरेकचिह्नितम् ।
शीर्षकोष्ठद्वयाङ्केन शून्यं कोष्ठं प्रपूरयेत् ॥ ३६ ॥

(मात्रामेरुः—)

द्वयं द्वयं समं कोष्ठं कृत्वान्त्येष्वेकमर्पयेत्[3] ।
एकद्विकत्रिकचतुः[4]क्रमेण प्रथमेष्वपि ॥ ३७ ॥
शीर्षाङ्कात्तपराङ्काभ्यां शेषकोष्ठान्प्रपूरयेत् ।
मात्रामेरुरयं दुर्गः सर्वेषामतिदुर्गमः[5] ॥ ३८ ॥

---

१. 'एकं विषमभागे तु दत्त्वार्धं गुरु कल्पयेत्' ग. २. 'भागः' क-ख-ग. ३. 'तेष्वे' घ. ४. 'एकद्व्येकत्र्येकचतुः' क-ख-ग. ५. 'मपि' ग.

(वर्णपताका—)

अङ्कमुद्दिष्टवद्दत्त्वा शेषे पूर्वानपासयेत् ।
एकैरेकगुरु ज्ञेयं द्वयं द्वाभ्यां त्रिभिस्त्रयम् ॥ ३९ ॥

एषा वर्णपताका कीर्तिपताकाहिराजस्य ।
एकैकमत्र मुक्त्वा ज्ञेया [1]मात्रापताकापि ॥ ४० ॥

अथ वृत्तानि—

आदि तृतीये द्वादशदशाष्टमात्रा द्वितीयचरणे च ।
तुर्ये पञ्चदश स्युर्गाथेयं पिङ्गलेनोक्ता ॥ ४१ ॥
सप्त तुरगाः सदीर्घाः षष्ठे जगणो द्विजोऽथवा भवति ।
षष्ठं लघूत्तरदले विषमे जगणो न गाथायाः ॥ ४२ ॥

यथा—

उदितेऽर्धचन्द्रनिकरे प्रसरन्ति समन्ततोऽन्धकाराणि ।
घनपवनेऽपि लताया निस्पन्दत्वं सुमुखि चित्रम् ॥ ४३ ॥

इति गाथा ।

गाथोत्तरदलतुल्यं पूर्वदलं भवति यदि बाले ।
तामिह फणपतिभणितामुपगीतिं वर्णयन्ति जनाः ॥ ४४ ॥

यथा—

त्वद्[2]दर्शनेदिवसावधि सावधि नो बाधते मदनः ।
क्षणमपि यामति, यामो दिवसति, दिवसास्तु कल्पन्ति ॥ ४५ ॥

इत्युपगीतिः ।

गाथा द्वितीयतुर्यौ पादौ [3]भवतस्तु विपरीतौ ।
सेयं भवति **विगाथा** फणिनायकपिङ्गलेन संप्रोक्ता ॥ ४६ ॥

यथा—

वृन्दारण्यविहारी बल्लवनारीममोहारी ।
गोपालीकरतालीन[4]र्तनशाली पुनाति वनमाली ॥ ४७ ॥

इति विगाथा ।

१. 'मात्र' ख-घ; 'मेव' ग. २. 'नदर्शावधि' ग. ३. 'भवतो यथा च' ग; 'भवतो यदा च' ख. ४. 'वर्तन' क.

गाथाद्वितीयतुर्यावष्टादशमात्रकौ [1]यदा भवतः ।
मात्राषष्टिशरीरा प्रोक्ता सा गीतिरिह हि फणिपतिना ॥ ४८ ॥

यथा—

अयि धृतिमोचन लोचन वद कथमुपयासि सविधमेणदृशः ।
निष्क्रान्तायामस्यां तव दुश्चरितेन भावि हृदि शल्यम् ॥ ४९ ॥

इति गीतिः ।

[2]यदि गाथातुर्यपदं विंशतिमात्रं च गाथिनी भवति ।
फणिपतिपिङ्गलभणितं तद्विपरीतं तु सिंहिनीवृत्तम् ॥ ५० ॥

यथा—

वन्दे रवीन्दुनयनं नवजलधररुचिमन्दिरारमणम् ।
नन्दानन्दनिदानं वृन्दारकवृन्दवन्दितपदाम्भोजम् ॥ ५१ ॥

इति गाथिनी ।

[3]पर्याप्ता जलधारा विरमति न च हन्त लोचने जलधारा ।
जग्मुः प्रसादमाशास्तदपि न मे जीवितस्याशा ॥ ५२ ॥

इति सिंहिनी ।

स्कन्धकमिति तत्कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात् ।
तत्तुल्यमग्रिमदलं भवति चतुःषष्टिमात्रकशरीरमिदम् ॥ ५३ ॥

यथा—

अयमेति विमलविद्युत्करालकरवालवि[4]मलजलधरकालः ।
उद्यन्नवघनगर्जिततर्जितपथिकाङ्गनानिवहहृदयतलः ॥ ५४ ॥

इति स्कन्धकम् ।

षट्कलतुरगौ त्रिकलमपि विषमपदे विनिधेहि ।
समपादान्ते चै[5]कैकलमिति दोहामवधेहि ॥ ५५ ॥

---

१. 'यथा' घ. २. प्राकृतपिङ्गलसूत्रे तु गाथिन्यां पूर्वार्धस्य त्रिंशन्मात्रत्वम्, उत्तरार्धस्य द्वात्रिंशन्मात्रत्वमभिधाय तद्विपरीतत्वं सिंहिन्यामुक्तम्. ३. अयमुदाहरणश्लोकः क-ग-पुस्तकयोस्त्रुटितः. ४. 'ललित' ख-घ. ५. त्रिकलस्य स्थाने एककलमिति विषमे त्रयोदश, समे एकादश मात्रा दोहायां भवन्ति.

यथा—

चरणसरोरुहमस्तु हृदि[1] मे वदने तव नाम।
चक्षुषि रूपं यावदसु रमय मनो मम राम॥ ५६॥

इति दोहा।

द्विजवरयुगमिह रचय, त्रिलघुकगणमथ कलय,।
सुललितकलितरसपदि, सरसिजमुखि भवति यदि।
जगति विदितललितमिति, वरफणिपतिरिति वदति॥ ५७॥

यथा—

प्रविचलकुवलयनयन, जलनिधिकृतवरशयन,।
दितितनयनिवहदमन, शमनविविधभयशमन।
मयि वरमुपनय सुचिर, मभिनवजलधररुचिर॥ ५८॥

इति ललितम्।

रोलावृत्तमवेहि नागपिङ्गल[2]कविभणितं
प्रतिपदमिह चतुरधिककलविंशतिपरिगणितम्।
एकादशमधि विरतिरखिलजनचित्ताहरणं
सुललितपदमदकारिविमलकविकण्ठाभरणम्॥ ५९॥

यथा—

तरति पयोनिधिसलिलमयति[3] गिरिशिखरशिखोपरि
विशति रसातलमटति यशस्तव सकलदिशः परि।
गगनगमनमभिनयति समं शशिना श्रियमञ्चति
चित्रमिदं न तथापि भवन्तं भूप विमुञ्चति॥ ६०॥

इति रोला।

दशसप्तवर्णमिह रचय प्रथमचरणं
द्वितीयमष्टादशकलितमतिहृदयहरणम्।
ईदृशमुत्तरदलमपि हृदयसंधानकं
नागपतिपिङ्गलभणितमिति शृणु गन्धानकम्॥ ६१॥

---

१. 'मद्वदने' क; 'मद्वचने' ख-घ. २. 'पतिपिङ्गलभ' क-ख-घ. ३. 'मटति' घ.

यथा—

गर्जति जलधरः परिनृत्यति शिखिनिवहो
नीपवनीमवधूय वहति दक्षिणगन्धवहः ।
दूरे दयितः कथय सखि किमिह हि करवै
प्रज्वालय दहनं झटिति शलभमनुकरवै ॥ १२ ॥

इति गन्धानकम् ।

**चौपैयावृत्तं** त्रिशन्मात्रं फणिपतिपिङ्गलगीतं
कुरु सप्ततुरङ्गममतिहृदयंगममन्ते गुरुमुपनीतम् ।
यदि दशवसुरविभिश्छन्दोविद्भिः क्रियते यतिरभिरामं
सपदि श्रवणसमये नृपतिः कवये वितरति संसदि कामम् ॥१३॥

यथा—

कालियकुलगञ्जनदुरितविभञ्जनसज्जनरञ्जनकारी
गोवर्धनधारी गोपविहारी वृन्दावनसंचारी ।
हतदुर्जयदानवपालितमानवमुदिताखण्डलपाली
गोपालीनिधुवनसुखरसशाली भवतु मुदे वनमाली ॥ १४ ॥

इति चौपैया ।

इह सप्तचतुष्कलगणनिर्मितपदं त्रिल[घु]विरामं भवति यदि ।
नागाधिपपिङ्गलभणितसुमङ्गल**घत्ता**वृत्तमिति द्विपदि ॥ १५ ॥

यथा—

हृदि तावदनेकः स्फुरति विवेकस्तपसि मनो नियतं भवति ।
यावन्नवहरिणीनयनातरुणीस्मितसुभगं न विलोकयति ॥ १६ ॥

इति घत्ता ।

एतद्भेद एव—

एकादशविश्रामि तुरगविरामि यदि घत्तावृत्तं भवति ।
छन्दो **घत्तानन्द**मिदमानन्दकारि नागपतिरिति वदति ॥ १७ ॥

---

१. 'यति' ख. २. 'त्रिलविरामं' इत्येव भवेत्.

यथा—

मधुरस्मितलवशालि[1] यदि वनमालिवदनकमलमवलोकये।
अधरसुधारसधाम परमभिराममवलम्बे जीवितमये॥ ६८॥

इति घत्तानन्दः।

प्रथममुपनय रामकलत्रयमहिगणेन सह दण्डमिति पदानि विषमानि संचिनु
समपदे च षट्पञ्चवसुषट्कलकमिहैदातनु।
एवं पञ्च पदानि कुरु दोहामग्रे देहि
भुजगराजपिङ्गलभणितनवपदमेतदवेहि॥ ६९॥

यथा—

विहर मानिनि मानमपहाय रमय रमणमतिशयितकपटकलहरति किमु विनश्यसि
यौवनमिदमतिचपलं नदीजलगतिसमं न पश्यसि।
अनुभव हरिपरिरम्भसुखमिति वक्ता वद कोऽपि
मुग्धे माधवमधि सपदि कुरु कारुण्यमितोऽपि॥ ७०॥

इति नवपदम्।

चत्वारि चतुष्कलकानि धेहि तत्रापि जगणमन्ते निधेहि।
भणिता फणिनायकपिङ्गलेन प्रज्झटिकेयं षोडशकलेन॥ ७१॥

यथा—

रमते न मनः परितापधारि न मनागपि विरमति नयनवारि।
यदवधि हरिणीदृक्पथमगामि तदवधि बाधाशतमनुभवामि॥ ७२॥

इति प्रज्झटिका।

छन्दसि षोडशकले विलासिनि प्रतिपदमन्ते यमकविलासिनि।
अरिला नाम पयोधरधारिणि शेषे नियतलघुद्वयधारिणि॥ ७३॥

---

१. 'शशि' ख. २. 'त्रितय' ग-घ. ३. 'पादानि' क-ग. ४. 'शयितम्' क-घ. ५. 'रीति विधुमुखि' ख. ६. 'चपलमचलनदीजलगतिनसि' ख. ७. 'देहि' क. ८. 'विधेहि' क. ९. 'हरिणा' क. १०. 'अग कुटिलायां गतौ' इत्यस्य धातो रूपमेतत्. ११. 'अलिला' क-ख-ग.

यथा—

किं कीनाश पाशधर गर्जसि मामुपगम्य [1]दास(?)भरम[2]र्जसि ।
हरिचरणं शरणं न हि पश्यसि यन्नामश्रवणादपि नश्यसि ॥ ७४ ॥

इत्यरिला ।

अक्षरगुरुलघुनियमविरहितं भुजगराजपिङ्गलपरि[3]गैणितम् ।
भवति सुगुम्फितषोडशकलकं वाणी[4]भूषणपादाकुलकम् ॥ ७५ ॥

यथा—

मलयपवनहृतकुसुमपरागः परभृतनिभृतरणितवनभागः ।
चिरतरसंचितमानदुरन्तः कस्य न मुदमुपनयति वसन्तः ॥ ७६ ॥

इति पादाकुलकम् ।

षट्कलमादौ तदनु चतुस्तुरगं परिसंतनु
शेषे द्विकलं कलय चतुष्पदमेवं संचिनु ।
छन्दः षट्पदनाम भवति फणिनायकगीतं
रुद्रे विरतिमुपैति नृपतिसुखकरमुपनीतम् ।
उल्लालयुगलमत्र च भवेदष्टाविंशतिकलमितं
शृणु पञ्चदशे विरति[5]स्थितपठनादपि [6]पण्डितजनहितम् ॥ ७७ ॥

यथा—

[7]वामकरोदरकलितकमलसोदररुचिवदना
गुरुपुरतोऽपि तवैव नाम जल्पति गुरुमदना ।
भवदभिर्लिखन[9]विशेषरभसपरिशेषितदिवसा
मुञ्चति चन्द्रभयेन रजनिमधि [10]जीवितमपि सा ।

---

१. 'हासभरतर्जसि' घ. २. 'भर्जसि' ग. ३. 'लपितम्' क-ग; 'गणितम्' घ. ४. 'भूषा' क-ख-ग. ५. 'स्थितं' क. ६. 'गुणिगणहितम्' क-ग. ७. 'राम' क. ८. 'लषण' क. ९. 'निवेश' ग. १०. 'जीवन' क-ख-ग.

हृदि विनिहितभवदभि[1]शरणरसरङ्गतरङ्गदनङ्गवति
भवदीयविलोकनमन्तरा न म[2]नोरथसुखमनुभवति ॥ ७८ ॥

इति षट्पदम् ।

यद्यष्टचतुष्कलगणनिर्मितपदकरपदकर्णद्विजविहिता
सा **पद्मावतिका** वि[3]बुधसुमहिता जगणविरहिता सुकविहिता ।
इह द[4]शवसुभुवनैर्भवति विरामः सकलाभिमतफलाय तदा
फणिनायकपिङ्गलभणितसुमङ्गलरसिकमनःसंविहितमदा ॥ ७९ ॥

यथा—

विधुरेव विधुरयति मर्म निकृन्तति जनयति शर्म न नर्मसदः
चन्दनवनपवनो विकलयति मनो दलयति मदनो हृदयमदः ।
प्रियसखि मम नयनं पङ्कजनयनं कीर्तिसिंहधरणीरमणं
यदि मिलति विशालं भवति तदालं विरहपयोनिधिसंतरणम् ॥ ८० ॥

इति पद्मावती ।

**कुण्डलिका** सा क[5]थ्यते प्रथमं दोहा यत्र
रोलाचरणचतुष्टयं प्रभवति वि[6]मलं तत्र ।
प्रभवति वि[6]मलं तत्र पदं प्रति सुललितयमकम्
अष्टपदी सा भवति [7]विविधकविकौशलगमकम् ।
अष्टपदी सा भवति सुखितपण्डितमण्डलिका
कुण्डलिनायक[8]भणिता विबुधक[9]र्णकुण्डलिका ॥ ८१ ॥

यथा—

तरणी भवसि निमज्जतो दुरितपयोनिधिवारि
दिशि दिशि विलसति तव यशो नवहिमरुचिरुचिधारि ।
नवहिमरुचिरुचिधारि म[10]होऽपि न यस्य समानं
परवारण बलसिंह विदुषि वितरसि ब[11]हु दानम् ।

---

१. 'शरणे सारंगत' घ. २. 'मतौ सुख' घ. ३. 'विविध' ग. ४. 'दशभुवन' ग. ५. 'कथिता' ग. ६. 'नियतं' क. ७. 'विमल' घ. ८. 'भणित' क-ख-ग. ९. 'कर्णे' क-ख-ग. १०. 'महौहिमोऽपि' घ. ११. 'गुरु' क-ग.

परवारण बलसिंह जयसि भुवि जगदेकरणी[1]
कीर्तिसिंह नृप जीव यावदमृतद्युतितरणी ॥ ८२ ॥

इति कुण्डलिका ।

षट्कलमादौ विरचय शेषे रगणविभूषितं
मध्ये नियमविहीनं द्वादशके यतिसंगतम् ।
फणिपतिपिङ्गलवर्णितं[2] कविकुलहृदयरञ्जनं
पञ्चाधिकविंशतिकलवृत्तमिदं[3] **गगनाङ्गनम्** ॥ ८३ ॥

यथा—

गिरिवरतनयाकुचरसपातविमुद्रितलोचने[4]
निद्राश्वसितसमीरणदूरदुरितभयमोचने ।
अतिबलविचलदसुरबलतारितसुरवरनायके
अनुगतजनतातारिणि मम नतिरस्तु[5] विनायके ॥ ८४ ॥

इति गगनाङ्गनम् ।

आदौ षट्कलसंगतमेतत्तदनु पञ्चचतुष्कलम् ।
गुर्वन्तं **द्विपदी** भवतीह हि विंशत्यष्टकलं दलम् ॥ ८५ ॥

यथा—

क्षणमपि मयि विनिधेहि विलासिनि मधुकरमदविमोचने[6] ।
विषमायुधविषमायुधशासनविकले सुमुखि लोचने ॥ ८६ ॥

इति द्विपदी ।

द्विजवरनवगणमुपनय तदनु च विमल कमलदलमृदुलसुतनु[7] रगणमिह[8] हि **खञ्जके** ।
द्विदलममलदलमिदमिति[9] फणिवरनरपतिगदितमिदमतिशयगुणसुहृदय-सुरञ्जके ॥ ८७ ॥

---

१. 'जयदे' ग. २. 'वर्णितक' ग-घ. ३. 'पञ्चविंशतिकल' ख. ४. 'कुंज' ग. ५. 'रति' ग. ६. 'विलोचने' घ. ७. 'कमलसुत' घ. ८. 'नगणमिह ललितखञ्जके' घ. ९. 'ममलमति' क; 'ममलमिति' ग.

यथा—

गुरुतमसि मम मनसि घनरामय लघु शमय मनसिशयविशिखचय[1]जनि-
तरुजमायताम्।

अतिसुरभिकुटजमभिनिगदघनमदुपवनमुपनयतु हरिमिह तु स हृदि
मलयजायताम्॥ ८८॥

इति खञ्जकम्।

द्विजवरमिह हि रसगुणितमुपनयतु तदनु जगणमवधेहि।
[2]स्वरगुणित[3]मपरदलमपि कुरु वर फणिपतिमुखभणितरुचिरशिखे[4]हिं॥८९॥

यथा—

नकुलवनमृदुपवनरयनि[5]हतविरहिशतसुरभिरयमेति।
दयिततमविरहि मम हृदयमतिपतति सखि यदि हतविधुरयमुदेति॥९०॥

इति शिखा।

द्विजवर[6]नवगणमतिशयसुरुचिरमिह कुरु
तदनु रगणमपि कलय कमलमुखि कर्णवच्छेषे।
[7]अपरदलं गाथाया मालावृत्तं विचित्रं तत्॥ ९१॥

यथा—

खरनखरमुखदलितदितितनयकठिनहृदय-
रुधिरनिवहभवदभिषवसुखितमानसो हन्यात्।
भवदंहो नरसिंहो दिवि[8]षत्संघोपसंयातः॥ ९२॥

इति माला।

दोहादलशेषे यदा पञ्चकलो विमलो हि विराजति।
फणिपतिनृपतिः किल तदा चुलिआलामिह तामनुगायति॥ ९३॥

---

१. 'जनितहृदयज' घ; 'जहृदयरुज' इति यथाकथंचित्संभवति. २. 'मुनि' क-ग. ३. 'मवर' घ. ४. शिखेहि' घ; 'शिखाहि' क. ५. 'निवह' ख; 'मिहर' घ. ६. 'नव-गणमिह' ख-ग-घ. ७. 'मालावृत्ते दादूटललितमपि करर्षे' इत्यधिकं घ-पुस्तके. ८. 'षत्सु महोपसंपातः' ख-घ; 'दिविषत्संगाहोपसंपातः' ग.

यथा—

स्मितपटुकपटविलोकितैरपहृतमानस पङ्कजलोचन ।

दृष्टिपथे भवितासि मम गोपवधूजनशोकविमोचन ॥ ९४ ॥

इति चुलिआला ।

तत्सोरठावृत्तममलमुरगपतिरिति वदति ।

तद्दोहाविपरीतमिह जनहृदि मुदमुपनयति ॥ ९५ ॥

यथा—

अभिनवजलधरनीलममलकमलदललोचनम् ।

सखि पश्यामि[1] कदापि मधुमथनं भवमोचनम् ॥ ९६ ॥

इति सोरठा ।

द्विजगणसगणभगणकलिता भवति चतुर्दशकलकलिता[2] ।

अन्तगुरुमुपधाय यदा[3] हाकलिरेषा भवति तदा ॥ ९७ ॥

यथा—

कौमुदकुमुदबन्धुवदना स्मितपीयूषजनितमदना ।

चपलविलोचनजितहरिणी हरति न कस्य मनस्तरुणी ॥ ९८ ॥

इति हाकलि ।

सगणं निधाय जगणं विधाय ।

श्रुतिसौख्यधाम मधुभारनाम ॥ ९९ ॥

यथा—

अपि मुञ्च मानमवटौ बधान ।

भुजपाशकेन भयनाशकेन ॥ १०० ॥

इति मधुभार ।

एकादशकलधारि कविकुलमानसहारि ।

इदमाभीरमवेहि जगणमन्तमधिधेहि[4] ॥ १०१ ॥

यथा—

तरलनयनवलितेन मदमन्थरचलितेन ।

सुमुखि हृदयमभिलाषि सपदि न कस्य विलासि ॥ १०२ ॥

इत्याभीरम् ।

---

१. 'पश्येम' क-ख. २. 'ललिता' क-ग. ३. 'सदा' क. ४. 'मनु' ख.

द्वात्रिंशन्मात्रं भवति पवित्रं फणिपतिजल्पितवृत्तवरं
दशवसुभुवनैर्यतिरत्र प्रभवति कविकुलहृदयानन्दकरम् ।
यद्यष्टचतुष्कलकलितसकलपदमिति दुर्मिलकानामधरं
नरपतिवरतोषण बन्दिविभूषण भुवनविदितसंतापहरम् ॥ १०३ ॥

यथा—

यमुनाजलकेलिविलोलविलोचनगोपीजनहृतवसनवरं
तटजातविशालतमालतरुणतरुदुर्गमशाखारोहपरम् ।
निजभुजमदमत्तभोजपतिमानससंभृतदम्भविनाशकरं
करचरणमयूखमुषितकमलं नम लीलामानुषवेषधरम् ॥ १०४ ॥

इति दुर्मिला ।

सप्तचतुष्कलकलितदलसकलमत्यहितकुण्डलरुचिरा ।
न कुरु पयोधरमिह फणिपतिवरभणितमिदं वृत्तं रुचिरा ॥१०५॥

यथा—

कस्य तनुर्मनुजस्य सितासितसंगममधिविधितः पतिता ।
यस्य कृते करभोरु विषीदसि मिहिरातपनिहितेव लता ॥ १०६ ॥

इति रुचिरा ।

तुरगैकमुपधाय सुनरेन्द्रमवधाय ।
इह दीपकमवेहि लघुमन्तमधिधेहि ॥ १०७ ॥

यथा—

क्षणमात्रमति वल्गु जगदेतदति फल्गु ।
धनलोभमपहाय नम पद्मनयनाय ॥ १०८ ॥

इति दीपकम् ।

शृणु सिंहविलोकितवृत्तवरं वरयमकमनोहरचरणधरम् ।
धरणीपतिमानसमधिकलितं किल वेद चतुष्कलगणललितम् ॥ १०९ ॥

---

१. 'सकलदलसंमोहित' ख-घ. २. 'निहतेव' ग. ३. 'देहि' ख. ४. 'मन्तिके' ग.

यथा—

दिवसाद्यवसादिततिमिरवनं वनजावलिबोधनिसर्गधनम् ।
धनदेन्द्रकृतान्तपाशिनमितं मितभुवनतलं नम दिवसकृतम् ॥ ११० ॥

इति सिंहविलोकितम् ।

षट्कलमादिगुरुं प्रथमं कुरु संततं
पञ्चकलं च ततोऽपि चतुष्कलसंगतम् ।
नायकमत्र चतुर्थमितो गुरुर्[1]मन्तके
एकाधिकविंशतिः प्लवङ्गमवृत्तके ॥ १११ ॥

यथा—

विष्णुविरञ्चिविभाकरवासववन्दितं
विस्मृतविषयविषादकमुनिजननन्दितम् ।
चञ्चलया तुलितं सुसुखं न हि कामये
शंकरपादसरोजरजः परिभावये ॥ ११२ ॥

इति प्लवङ्गमम् ।

लघुगुरुवर्णनियमविरहितमिह हि सुकलय चतुष्कलमष्टगणं
द्वात्रिंशत्कलविरचितमिदमतिशयसहृदयहृदयदुःखहरणम् ।
**लीलावतिका** भवति च करकर्णद्विजगणभगणजगणकलिता
फणिनायकपिङ्गलविरचितमद्भुतवृत्तममलगुम्फनललिता ॥ ११३ ॥

यथा—

धेनुसहस्रमनुदिनमिह वितरसि द्विजनिवहे [2]मुदमातनुषे
विश्व[3]तिमिरदि[4]नकर सपदि करकमलमपि लक्ष्मीवसतिं तनुषे ।
दो[5]षापनयनलब्धनिजसमुदयराजसुवलमप्यवलयसि रणे
त्वयि चलति चलति वसुधा वसुधाधिप कीर्तिसिंह धरणीरमणे ॥ ११४ ॥

इति लीलावती ।

---

१. 'मन्तिके' ग. २. 'मिद' ग. ३. 'रिपु' ख-घ. ४. 'दलनकरहस्तकुशेशयमपि' ख-घ. ५. 'दुरितविलयमिलितस्वजनोदयनृपराजवलयमवलयसि' घ.

इन्द्रासनं प्रथमं विसर्जय तदनु संचिनु[1] षट्कलं
ननु तदनु पञ्चकलत्रयं[2] किल कुरु विरामे कुण्डलम्।
अष्टाधिकामिह विंशतिं च कलाः कलावति सुन्दरं
**हरिगीत**मिति हरिगीतकं वर वृत्तमतिरसमन्दिरम्॥ ११५॥

यथा—

सखि बंभ्रमीति मनो भृशं जगदेव शून्यमवेक्ष्यते
परिभिद्यते मम हृदयमर्म न शर्म संप्रति वीक्ष्यते।
परिहीयते वपुषा भृशं नलिनीव हिमततिसंगता[3]
रुदती परं वदतीति सा सुदती रतीशवशं गता॥ ११६॥

इति हरिगीता।

प्रथमं यदि दशमं वदति विरामं तदनु निकामं वसु वसुकं
वसु विमलतुरङ्गममतिहृदयंगमहृषितभुजंगमनृपतिलकम्।
त्रिंशद्विकला संविहितविलासं सततनिवासं हृदयमुदो
मदमुदितभुजंगीमोहनरङ्गी वदति **त्रिभङ्गी**वृत्तमदः॥ ११७॥

यथा—

विविधायुधमण्डितसंगरपण्डितरणदण्डितपाखण्डभटे
चण्डासुरखण्डिनि पुरहरमण्डिनि शशधरखण्डिनि[4] बद्धजटे।
भवसागरतारिणि दुर्गतिहारिणि मङ्गलकारिणि मयि सुचिरं
गिरिराजसुवासिनि शैलनिवासिनि शंभुविलासिनि देहि वरम्॥ ११८॥

इति त्रिभङ्गी।

वह्निटगणमन्त्यरगणमेव चरणशोभितं
पश्य सुदति नागनृपतिरत्र वदति नो हितम्।
राजभजनकालपठन एव रटनरञ्जनं
**हीरक** इति नाम भवति काममवति सज्जनम्॥ ११९॥

यथा—

ध्यानमटत साम पठत नाम रटत केशवं
धर्ममयत शर्म भजत कर्म सृजत शैशवम्।

---

१. 'संतनु' घ. २. 'त्रितयं' घ. ३. 'हिमकरसंगता' घ. ४. 'मण्डिनि' ग.

द्वारभवनदाररमणसारचयनवासना
तावद्दयति[1] नावतरति कालनृपतिशासना ॥ १२० ॥

इति हीरम् ।

लघुगुरुकनियमगतमिह फणिमणिमतमवगतमतिसुखनिगदपदं
दशवसुभवनैर्यतिरिह हि यदि भवति रसिकजनहृदयविहितमदम् ।
वसुविमलचतुष्कलगणहृत[2]गुणिगणचरणविरामाहितसगणं
क्वचिदपि गुरुसहितं भवति कविहितं छन्दः सुन्दरि **जनहरणम्**॥१२१॥

यथा—

उपगम्य निभृततरमभिनवजलधरसुभगसुदर्शनचक्रधरं
सखि कथय हृदयरुजमुरगराजभुजममलकमलदलनयनवरम् ।
अतिकुटिलकठिनहठमपनय मयि शठ दर्शनमपि न ददासि चिरा-
दचिरांशुलतासदृशी[3] नवयौवनकान्तिरचिरमिह रुचिरतरा ॥१२२॥

इति जनहरणम् ।

प्रथमं कुरु षट्कलमन्ते कुण्डलमिह मध्ये वसुतुरगधरं
संतापहरं दशवसुभुवनाष्टभिरत्र चरणमभिभवति विरामो यदि ललितम् ।
कविवलयहितं फणिनायकभणितं जगणविरहितं चत्वारिंशत्कल[4]वित्तं
भुवने वृत्तं महितं रसनिवहं तन्**मदनगृहं** नरपतिसंसदि लब्धपदं गुरुशोकगदम्॥

यथा—

विरहानलतप्ता सीदति सुप्ता रचितनलिनदलतल्पतले मरकतविमले
करकलितकपोलं गलितनिचोलं नयति सततरुदितेन निशामनिमेषदृशा ।
न सखीमभिनन्दति रुजमनुविन्दति निन्दति हिमकरकरनिकरं[5] परितापकरं
मनुते हृदि भारं मुक्ताहारं दिवसनिशाकरदीनमुखी जीवितविमुखी ॥१२४॥

इति मदनगृहम् ।

आदौ कुरु षट्कलमत्र चतुष्कल पञ्चानन्दमितोऽपि
दशवस्वेकादश भवति विरतिवशमधिकशुचाम[6]वलोपि ।

---

१. 'दवति' क. २. 'जगण' ख-घ. ३. 'सुदृशी' ग. ४. 'कलितम्' ख-ग.
५. 'हिमकरनिकरं' ग. ६. 'मप' ग.

विंशति नवसंख्यं कविकुलसंख्यं वन्दितगुणगणकोटि
मरहट्टावृत्तं किल जयकृत्ये कृतरिपुविनतकरोटि ॥ १२५ ॥

यथा—

अभिमतधनदाता सिद्धिविधाता जगदन्तरंगतशील[1]
दुरितद्रुमदाही विश्वविगाही कल्पक्षयकृतलील ।
भुवनत्रयवन्दित गिरिजानन्दित हरशिरसि स्थिरवास
दह हुतवह पापं देहि दुरापं वसुहततिमिरविलास ॥ १२६ ॥

इति मरहट्टा ।

इति श्रीदामोदरमिश्रविरचिते वाणीभूषणे मात्रावृत्तं नाम प्रथमः परिच्छेदः ।

---

द्वितीयः परिच्छेदः ।

अथैकाक्षरच्छन्दः—

यद्गौः ।
सा श्रीः ॥ १ ॥

यथा—

विष्णुम् ।
वन्दे ॥ २ ॥

इति श्रीः ।

अथ द्व्यक्षरच्छन्दः—

यस्मिन्हारौ ।
कामः स स्यात् ॥ ३ ॥

यथा—

कल्याणं वः ।
शंभुर्देयात् ॥ ४ ॥

इति कामः ।

द्विकलघु ।
मधुरिति[2] ॥ ५ ॥

---

१. 'गति' ख-ग. २. 'रिति मधु' ख-ग.

यथा—

रतिमय ।
वरतनु ॥ ६ ॥

इति मधु ।

लघुश्च[1] गुः ।
मही स्मृता ॥ ७ ॥

यथा—

हरोऽस्तु मे ।
मनोमुदे ॥ ८ ॥

इति मही ।

हारलश्च[2] ।
धारि सारु ॥ ९ ॥

यथा—

कृत्यवस्तु ।
सिद्धमस्तु[3] ॥ १० ॥

इति सारु ।

अथ त्र्यक्षरच्छन्दः—

ताली सा निर्दिष्टा ।
उद्दिष्टो मो यत्र ॥ ११ ॥

यथा—

ज्ञानी ते जानीते ।
सारूप्यं वैरूप्यम् ॥ १२ ॥

इति ताली ।

जोहलं दृश्यते ।
सा प्रिया कथ्यते ॥ १३ ॥

---

१. 'गुरुः' ख-घ. २. 'हारदण्ड' ख-घ. ३. 'सिद्धिरस्तु' घ.

यथा—

नौमि [1]तं पालकम्।
देवकीबा[2]लकम् ॥ १४ ॥

इति प्रिया।

नरेन्द्रो यदा स्यात्।
शशी कथ्यते तत् ॥ १५ ॥

यथा—

जनानन्दकन्दः।
श्रिये स्तान्मुकुन्दः ॥ १६ ॥

इति शशी।

सगणो रमणः।
कविना कथितः ॥ १७ ॥

यथा—

धनदो धनदः।
भवतो भवतात् ॥ १८ ॥

इति रमणः।

कर्णेन [3]गन्धेन।
पाञ्चालमाख्याहि ॥ १९ ॥

यथा—

शर्माणि सर्वाणि।
देयानि [4]शर्वाणि ॥ २० ॥

इति पाञ्चालम्।

[5]नरेन्द्रमुदेहि।
मृगेन्द्रमवेहि ॥ २१ ॥

---

१. 'गोपा' ख. २. 'दारकम्' ग. ३. 'दण्डेन' ख. ४. 'रुद्राणि' ख-घ. ५. 'पयोधरधारि' ख-घ.

यथा—

[1]कवीन्द्रहितानि।
नरेन्द्रगृहाणि॥ २२॥

इति मृगेन्द्रः।

[2]चञ्चति भो यदि।
मन्दरमञ्चति॥ २३॥

यथा—

शं कुरु शंकर।
वैरिभयंकर॥ २४॥

इति मन्दरः।

कमलम[3]यत।
नगणम[4]वत॥ २५॥

यथा—

मयि पुरहर।
शमिह वितर॥ २६॥

इति कमलम्।

अथ चतुरक्षरच्छन्दः—

यस्मिन्वृत्ते कर्णः कर्णः।
वेदैर्वर्णैः सा स्यात्तीर्णा॥ २७॥

यथा—

[5]वंशीवादैर्दत्तोन्मादैः।
हृत्वा चेतः क्वासौ यातः॥ २८॥

इति तीर्णा।

यत्तु पक्षिदण्डलक्षि।
वेदवर्णधारि धारि॥ २९॥

---

१. 'वृथा विलपामि। हरिं न भजामि॥' ख-घ. २. 'छन्दसि' ख. ३. 'मयतु' ख-घ. ४. 'मिह तु' ख-घ. ५. 'लब्ध्वा तु त्वत्पादानन्तः। आमोदन्ते नित्यं सन्तः॥' क-ग.

यथा—

राम राम राम राम ।
सारमेतदेव नाम ॥ ३० ॥

इति धारि ।

द्वितुर्यके गुरुर्यदा ।
नगाणिका भवेत्तदा ॥ ३१ ॥

यथा—

पयोधिजालमीक्ष्यते ।
धवैव तेन लक्ष्यते ॥[1] ॥ ३२ ॥

इति नगाणी ।

अथ पञ्चाक्षरच्छन्दः—

द्वौ कर्णौ हारः संमोहा सारः ।
वर्णाः पञ्चैवं नागाधीशोक्ताः ॥ ३३ ॥

यथा—

दूरं याताली घोरा वन्याली ।
कृष्णो मायावी निर्वेदो भावी ॥ ३४ ॥

इति संमोहा ।

आद्यन्तकर्णाः पञ्चैव वर्णाः ।
लघ्वेकहारी वाच्यः स हारी ॥ ३५ ॥

यथा—

कंसादिकेतुं धर्मैकसेतुम् ।
इन्दीवराभं वन्देऽब्जनाभम् ॥ ३६ ॥

इति हारी ।

पिङ्गलदृष्टो भादिविशिष्टः ।
कर्णयुतोऽसौ भामिनि हंसः ॥ ३७ ॥

---

१. 'विलोकये कदा क्षणम् । हरिं सरोरुहेक्षणम् ॥' ख-घ.

यथा—

एति वसन्ते याति दिगन्ते ।
किं सखि कान्तः कोऽपि कृतान्तः ॥ ३८ ॥

इति हंसः ।

नगणमनु द्विलघु कुरु ।
फणिभणितयमकमिति ॥ ३९ ॥

यथा—

विषमतरविषमशर ।
प्रहर मयि न चिरमयि ॥ ४० ॥

इति यमकम् ।

अथ षडक्षरच्छन्दः—

एषा वर्णैः षड्भिः प्रोक्ता छन्दोविद्भिः ।
सर्वे वर्णा यस्यां दीर्घाः शेषा सा स्यात् ॥ ४१ ॥

यथा—

[1]किं कुर्या मे कान्तः सख्यं कर्तुं भ्रान्तः ।
[2]दुःखैः स्वान्तं पूर्णं यात प्राणास्तूर्णम् ॥ ४२ ॥

इति शेषा ।

[3]सखि सद्वितयं भवतीह यदा ।
रसवर्णपदा तिलकेति तदा ॥ ४३ ॥

यथा—

वनमालिकथा सकलालि वृथा ।
पुनरेति कथं मम दृष्टिपथम् ॥ ४४ ॥

इति तिलका ।

[4]यत्र पादद्वयं दृश्यते रद्वयम् ।
नागराजोदिता सा [5]विमोहा मता ॥ ४५ ॥

१. 'किं वा कुर्या हे हो नैवायातः कान्तः । व्योमाभ्रैः संपूर्णे' ख-घ. २. 'व्योमाभ्रै संवर्त्ते' ग. ३. 'सगणद्वितयं' ख-घ. ४ 'यत्र पक्षिद्वयं दृश्यते सुन्दरम् । सर्पराजो' ख-घ. ५. 'विजोहा' ख-घ.

यथा—

[1]पर्वते पर्वते किं न सन्त्यापगाः।
सर्वतो वर्तते नैव दैवापगा॥ ४६॥

इति विमोहा।

द्विजवरकर्णाविह रस[2]वर्णा।
भवति यदा सा किल **चतुरं[3]सा**॥ ४७॥

यथा—

[4]जय जय विष्णो त्रिभुवनजिष्णो।
अपनय दुःखं प्रवितर सौख्यम्॥ ४८॥

इति चतुरंसा।

कर्णध्वजानन्दमाधाय नित्यं[5] च।
वर्णै रसैर्यत्तु **मन्थान**मेतत्तु॥ ४९॥

यथा—

शीतांशुवक्राय पाथोजनेत्राय।
वन्दस्व नन्दस्य भव्याय पुत्राय॥ ५०॥

इति मन्थानम्।

ध्वजानन्दकर्णाः षडेवात्र वर्णाः।
बुधानन्दकारी भवेच्छ**ङ्खना[6]री**॥ ५१॥

यथा—

स्फुरद्गोपनारीपरीरम्भकारी।
हरिः पातु वृन्दावनाभ्यर्णचारी॥ ५२॥

इति शङ्खना[7]री।

यदा जगणद्वि भवेदमलद्यु।
फणी वितनोति **सुमालतिके**ति॥ ५३॥

---

१. 'इतः प्राक् 'आलि वंशीधरे कामकेलीपरे। किं मया साधितं मौनमारोपितम्॥ पुनः' इत्यधिकं ख-घ. २. 'वर्णैः' ख-घ. ३. 'रंशा' ख-घ. ४. इतः प्राक् 'तत्र रतिशाली यदि वनमाली। विविधविलासे सखि किमुदासे॥ पुनः' इत्यधिकं ख-घ. ५. 'सानन्द' क-ग. ६–७. 'धारी' ख-घ.

यथा—

मनोजशरेण विषण्णतरेण ।
अवादि न तेन भवद्दयितेन ॥ ९४ ॥

इति सुमालती ।

द्विगुणनगणमिह वितनुहि ।
**दमनक**मिदमिति गदति हि ॥ ९५ ॥

यथा—

[1]सुवचनमिह भृशमुपनय ।
सुमुखि मदनरुजमपनय ॥ ९६ ॥

इति दमनकम् ।

अथ सप्ताक्षरच्छन्दः—

हारमेरुणा यदा संकुला भवेत्सदा ।
सप्तवर्ण[2]संगता सा **समानिका** मता ॥ ९७ ॥

यथा—

पद्मचारुचक्षुषा नील[3]नीरजत्विषा ।
आलि मन्मनो हृतं वंशना[4]दमोहितम् ॥ ९८ ॥

इति समानिका ।

द्विजगणमाहर भगणमुपाहर ।
भणति **सुवासक**मिति गुणिनायक ॥ ९९ ॥

यथा—

गिरिवरनन्दिनि दुरितनि[5]कन्दिनि ।
विहितन[6]तौ मयि कुरु करुणामयि ॥ ६० ॥

इति सुवासकम् ।

द्विजगणमवेहि जगणमनुदेहि ।
विविधरसस(सि)श्चि भवति **करहञ्चि** ॥ ६१ ॥

१. 'सरभसमिह दृशमुपनय' ख-घ. २. 'निर्मिता' ख-घ. ३. 'नीरद' ख-घ. ४. 'वाद' ख-घ. ५. 'निकृन्तनि' ग. ६. 'तनौ' ग.

यथा—

रचय रुचिराणि सुमुखि वचनानि।
नयनमपिधेहि शयनतलमेहि॥ ६२॥

इति करहञ्चि।

उक्ता वर्णाः सप्तास्यां सर्वे दीर्घाः स्युर्यस्याम्।
एषा **शीर्षा** निर्दिष्टा केषां हर्षे [1]नादेष्टा॥ ६३॥

यथा—

दृष्टः कृष्णः कालिन्दीतीरे [2]गोगोपानन्दी।
वेणुक्काणैरुत्कानां चेतोहर्ता गोपीनाम्॥ ६४॥

इति शीर्षा।

अथाष्टाक्षरच्छन्दः—

उक्ता यस्यामष्टौ वर्णाः पादे पादे सर्वे दीर्घाः।
विश्रामः [3]स्यात्तुर्ये तुर्ये सा **[4]विद्युन्माला** निर्दिष्टा॥ ६५॥

यथा—

आगामिन्यो नो यामिन्यो या या याता भूयो भूयः।
अभ्रच्छायावत्तारुण्यं मानेनानेन स्यात्किं ते॥ ६६॥

इति [5]विद्युन्माला।

हारशङ्खकक्रमेण मण्डिताष्टवर्णकेन।
वर्णिता कुतूहलेन **मल्लिकेति** पिङ्गलेन॥ ६७॥

यथा—

वेदवेदि[6]वालखिल्यनारदादिसंस्तुताय।
अस्तु मे नतिः सदैव [7]विश्वरूपभावितैव॥ ६८॥

इति मल्लिका।

प्रसूनकुण्डलक्रमैरिहाष्टवर्णविभ्रमैः।
भुजंगराजवर्णिता **प्रमाणिकेति** सा मता॥ ६९॥

---

१. 'नोद्दिष्टा' ख-घ. २. 'गोपाला' ख-घ. ३. 'द्वैदैवैर्दैः' ख-घ. ४–५. 'विद्वन्माला' ख-घ. ६. 'वास' ग. ७. 'तुभ्यमम्बुजप्रियाय' ख-ग-घ.

यथा—

प्रयाहि दूति सत्वरं न ते वचोऽतिसुन्दरम् ।
इतोऽप्युदेति[1] पश्चिमे कुलव्रतव्ययो न मे ॥ ७० ॥

इति प्रमाणिका ।

द्विगुणनगणकर्णैः सुललितवसुवर्णैः ।
रसिकविहितरङ्गा प्रभवति किल **तुङ्गा** ॥ ७१ ॥

यथा—

विहरसि मम चित्ते मदनविशिखकृत्ते ।
न नयनविषयत्वं व्रजसि तदपि मे त्वम् ॥ ७२ ॥

इति तुङ्गा ।

द्विजवरगणान्वितं जगणगुरुसंगतम् ।
फणिनृपतिजल्पितं **कमल**मिति कल्पितम् ॥ ७३ ॥

यथा—

विहरति विलासिनीपरिषदि हरिर्वने ।
इति वदति राधिका निजसहचरीजने ॥ ७४ ॥

इति कमलम् ।

भादिगणं कर्णधरं सान्तमिदं वृत्तवरम् ।
पन्नगराजेन कृतं **माणवकक्रीडितकम्** ॥ ७५ ॥

यथा—

कोकवधूशोकहरं पद्मवनीबोधकरम् ।
गाढतमोनाशकरं नौमितरामुष्णकरम् ॥ ७६ ॥

इति माणवकक्रीडितकम् ।

लघु स्यात्पञ्चमं यत्र गुरु षष्ठं तु सप्तमम् ।
द्वितुर्यपादयोर्ह्रस्वमष्टाक्षरम**नुष्टुभम्** ॥ ७७ ॥

---

१. 'प्युदेतु' ख-घ.

यथा—

हृदयं मदयन्त्येते मदोन्मत्ताः शिलीमुखाः।
विषाक्ताः पुष्पधनुषो मूर्ता इव शिलीमुखाः॥ ७८॥

इत्यनुष्टुप्।

अथ नवाक्षरच्छन्दः—

दृश्यते पक्षिराजत्रयं यत्र वृत्ते मनोहारके।
संततं पिङ्गलेनोदिता सा **महालक्ष्मिका** कीर्तिता॥ ७९॥

यथा—

नौमि युष्मत्पदाम्भोरुहं चण्डकीनाशपाशापहम्।
शेषचूडामणीरञ्जितं देवराजादिभिर्वन्दितम्॥ ८०॥

इति महालक्ष्मी।

द्विजवरकर्णौ सगणं विरचय यस्याश्चरणम्।
जगदभिरामं हितया भवति हि **सारङ्गिकया**॥ ८१॥

यथा—

प्रणमत राधारमणं नृगनृपबाधाशमनम्।
असुरमदापाहरणं यदुकुलचूडाभरणम्॥ ८२॥

इति सारङ्गी।

आदौ कर्णद्वयललितं कृत्वा विप्रं गुरुसहितम्।
तद्वृत्तं पिङ्गलभणितं **पाइत्तेति** श्रवणहितम्॥ ८३॥

यथा—

भ्रामं भ्रामं भुवनतलं दर्शं दर्शं जगदखिलम्।
भूयो भूयः परिगणितं विष्णोर्नाम श्रयत हितम्॥ ८४॥

इति पाइत्ता।

द्विजवरयुगलयुतं[1] कलय गुरु विरतिगम्।
भणति फणिपतिरिदं **कमल**मिति रतिपदम्॥ ८५॥

१. 'द्विजवरकगणयुगं' ख-घ.

यथा—

सजलजलधरनिभं भुवनतलकृतशुभम् ।
विनिहतबलिनरकं नमत मधुमथनकम् ॥ ८६ ॥

इति कमलम् ।

नगणकरगन्धकर्णं भवति नववर्णपूर्णम् ।
फणिवदनभूषणं यद्भवति किल **बिम्बमेतत्** ॥ ८७ ॥

यथा—

कपटकृतगोपवेषः शयनवरभूतशेषः ।
जयति कृतनन्दहर्षो गिरिविधृतवातवर्षः ॥ ८८ ॥

इति बिम्बम् ।

प्रथमं करं विनिधाय जगणद्वयं च निधाय ।
[1]इति **तोमरं** सुखकारि कविराजवक्त्रविहारि ॥ ८९ ॥

यथा—

सखि मादके मधुमासि व्रज सत्वरं किमिहासि ।
सह तेन किं विहरामि किमु पावकं प्रविशामि ॥ ९० ॥

इति तोमरम् ।

चत्वारो[2]ऽस्मिन्[3]कर्णा जायन्ते छन्दस्येकं हारं कुर्वन्ते ।
[4]रैन्ध्रा वर्णाः पादे राजन्ते **रूपामालीवृत्तं** तत्कान्ते ॥ ९१ ॥

यथा—

हत्वा शत्रुं नृत्यन्ती चण्डं सा चण्डी वः कल्याणं कुर्यात् ।
देवेन्द्राद्याः [5]प्रीत्या संप्राप्ताः संसेवन्ते यत्पादाम्भोजम् ॥ ९२ ॥

इति रूपामाली ।

अथ दशाक्षरच्छन्दः—

सगणं पुरः कुरु शोभितं जगणद्वयं गुरु[6]संचितम् ।
फणिनायकेन निवेदिता भवतीह **सं[7]युतका** हिता ॥ ९३ ॥

---

१. 'कुरु' ख-घ. २. 'ऽस्याः' घ. ३. 'वर्णा' ख. ४. 'भव्या' ख-घ. ५. 'प्रीताः' ख. ६. 'संगतम्' ख-घ. ७. 'संघतिका' ख; 'संगतिका' घ.

यथा—

[1]अवधेहि किंचिदनुत्तरं प्रवदामि ते नृप सत्वरम् ।
तव दिक्षु कीर्तिविलासिनी प्रतिभिक्षुगेहनिवासिनी ॥ ९४ ॥

इति संयुतका ।

पादविराजन्नूपुरयुग्मा कुण्डलशोभासङ्गिसु[2]कर्णा ।
शङ्खवती हारद्वयपूर्णा **चम्पकमाला** भाति सुवर्णा ॥ ९५ ॥

यथा—

आलि कुलभ्रष्टाहमधन्या ह[3]न्तु च मामेषा रविकन्या ।
नन्दकुमारो निर्गतशङ्कः संप्रति भावी कोऽपि कलङ्कः ॥ ९६ ॥

इति चम्पकमाला ।

दीर्घलघुद्वयभद्विगणा हारविराजिचतुश्चरणा ।
पिङ्गलनागमते भणिता [4]**सारवती** कविसार्थहिता ॥ ९७ ॥

यथा—

माधवमानय मत्सविधं किं सखि चिन्तय मित्रवधम् ।
यन्न करिष्यसि मत्प्रणयं नो गमयापि तदा समयम् ॥ ९८ ॥

इति [5]सारवती ।

कर्णौ द्विलघुः कर्णौ भगणः शेषे गुरुणा पूर्णश्चरणः ।
यस्यां भविता बाले परमा सैषा **सुषमा** [6]दीव्यत्सुषमा ॥ ९९ ॥

यथा—

एणीनयने केलीकलहे प्रेयान्वद किं किं नो कुरुते ।
धन्या रमणी सर्वं सहते दुःखं सुखवत्स्वान्ते मनुते ॥ १०० ॥

इति सुषमा ।

नगणपयोधररुचिरा कुसुमविराजितसुकरा ।
वसुलघुदीर्घयुगलका भवति सखे[7]ऽ**मृतगतिका** ॥ १०१ ॥

---

१. 'सखि गोपवेषविहारिणं शिखिपिच्छचूडविधारिणम् । मधुसुन्दराधरशालिनं ननु कामये वनमालिनम् ॥' क. २.'सुवर्णा' क-ग-घ. ३.'हन्त भवद्धन्या रविकन्या' ख-घ. ४–५. 'हारवती' घ. ६. 'तृप्यत्सुखमा' ख-ग. ७. 'अमृततिलका' घ.

यथा—

अभिसरति प्रतिभवनं मलयजनुः[1] सततगतिः ।
अभिलषति प्रियवचना[2] श्रमसलिलं विरमयितुम् ॥ १०२ ॥

इत्यमृतगतिः ।

अथैकादशाक्षरच्छन्दः—

भत्रयसंगतशोभितकर्णः शुद्धसुसंगतपङ्क्तिककर्णः[3] ।
पन्नगराजनिवेदितबन्धू राजति भूपतिसंसदि **बन्धुः** ॥ १०३ ॥

यथा—

भक्षितवासरनायकचन्द्रः कामिसमूहसमाहिततन्द्रः ।
दर्शितलोलतडित्करवालः सोऽयमुपैति घनागमकालः ॥ १०४ ॥

इति बन्धुः ।

परिकलयादिलघुद्वितयं कुरु विमलं सगणत्रितयम् ।
प्रभवति शेषसहस्रमुखीविनिगदितेह तदा **सुमुखी** ॥ १०५ ॥

यथा—

कलयसि चन्दनमिन्दुकरं मृदुपवनं परितापकरम् ।
प्रियविरहेण तवेति[4] दशा कथमपयातु वसन्तनिशा ॥ १०६ ॥

इति सुमुखी ।

भत्रितयं यदि कर्णसमेतं पिङ्गलनागसुभाषितमेतत् ।
पण्डितमण्डलसंहृतचित्तं भामिनि भावय **दोधक**वृत्तम् ॥ १०७ ॥

यथा—

एतदुपैति घनं घनजालं निर्दलदिन्द्रमणीरुचिकालम् ।
फुल्लकदम्बलसद्वनमालं पान्थवधूजनदर्शितकालम् ॥ १०८ ॥

इति दोधकम् ।

कृत्वा कर्णौ मण्डितौ कुण्डलेन शङ्खं हारं नूपुरं रावयुक्तम् ।
धृत्वा युग्मं चामरं चावभाति **शालिन्येषा** प्रेयसी पिङ्गलस्य ॥१०९॥

१. 'जनिं' क; 'जनि' ख; 'जनिः' घ. २. 'वचनश्रम' ख; 'वदना' घ. ३. 'एक' क-ख-ग. ४. 'नवाभिदले कथमपि यातु रमण्यतिले' घ.

यथा—

आरभ्यन्ते शर्मकर्माणि नूनं प्राज्ञैर्लोकैर्वाच्यतामात्रभीतैः ।
तन्निष्पत्तौ वासुदेवः प्रमाणं को वा वक्ता कार्यकर्ताहमस्मि ॥ ११० ॥

इति शालिनी ।

द्विजवरगणयुगममलं तदनु च कलय करतलम् ।
फणिपतिवरपरिकलितं **दमनक**मिदमतिललितम् ॥ १११ ॥

यथा—

प्रणमत मधुरिपुचरणं भवजलनिधिपरितरणम् ।
अभिनवकिसलयरुचिरं सुरपतिकृतनति सुचिरम् ॥ ११२ ॥

यथा वा—

प्रणमत मुनिजनशरणं भवजलनिधिपरितरणम् ।
अमलकमलसमचरणं सुरपतितरुवरहरणम् ॥ ११३ ॥

इदं च प्राकृतेनापि पठितुं शक्यते ।

जहा—

पणमह मुणिअणसरणं भवजलणिहिपरितरणम् ।
अमलकमलसमचरणं सुरवइतरुवरहरणम् ॥ ११४ ॥

इति दमनकम् ।

हारशङ्खकुण्डलेन मण्डिता या पयोधरेण वीणयाङ्किता ।
रूपनूपुरेण चातिदुर्लभा **सेनिका** भुजङ्गराजवल्लभा ॥ ११५ ॥

यथा—

सायुधाष्टबाहुराजिमण्डिता रक्तबीजरक्तपानपण्डिता ।
चण्डमुण्डशुम्भदम्भखण्डिका मङ्गलानि नो ददातु चण्डिका ॥ ११६ ॥

इति सेनिका ।

आदौ चत्वारोऽस्यां कर्णा दृश्यन्ते शेषे यस्या रामा हारा राजन्ते ।
रुद्रैर्वर्णाः पादे पादे संख्याता **मालत्येषा** वाणीभूषा विख्याता ॥ ११७ ॥

---

१. 'कृत्य' ग-घ. २. 'मण्डनेन' क-ख-ग. ३. 'रेण चान्त्य अङ्किता' क-ख-ग. ४. 'वामा' क-ख-ग. ५. 'जायन्ते' क-ख-ग. ६. 'वर्णैः' ग. ७. 'संख्याता' ख.

यथा—

पायान्मायामीनो लीलः कल्पान्ते प्राग्दिक्क्षोणीभर्तुः पाणिक्रोडे यः ।
व्याप्ताम्भोधिस्तस्मिन्काले लीलाभिः सम्यक्सर्वौषध्यो यत्पृष्ठेऽतिष्ठन् ॥ ११८

इति मालती ।

कर्णध्वजौ गण्डमृगेन्द्रहारा भवन्ति यस्याश्चरणे समस्ते ।
तामिन्द्रवज्रामतिमात्रकान्तां भोगीन्द्रवक्त्राब्जमरन्दधाराम् ॥ ११९ ॥

यथा—

रक्ताम्बरेणोदितलम्बमानशीतांशुचण्डातपकुण्डलाभ्याम् ।
तारांशुतारावलिहृद्यहारैः स्वीयां श्रियं भूषयतीव संध्या ॥ १२० ॥

इतीन्द्रवज्रा ।

पयोधरं हारयुगं दधाना करं सशङ्खं वलयद्वयं च ।
उपेन्द्रवज्रा भुवनैकसारा विराजते पन्नगराजकान्ता ॥ १२१ ॥

यथा—

न षट्पदश्रेणिभिरेणदृष्टेर्न वा नवाम्भोधरकन्दलीभिः ।
अतुल्यभा[1]स्याः कबरीलते[2]ति दिवा समुन्मीलति नान्धकारः ॥ १२२ ॥

इत्युपेन्द्रवज्रा ।

उपेन्द्रवज्रापदसंगतानि यदीन्द्रवज्राचरणानि च स्युः ।
तदोपजातिः कथिता कवीन्द्रैर्भेदा भवन्तीह चतुर्दशास्याः ॥ १२३ ॥

यथा—

पयोधरस्यातिभरेण तस्या मध्यो नु[3] भज्येत सुमध्यमायाः ।
अबन्धि दत्त्वा नवरोमराजिं मनोभवेन त्रिवलीगुणेन ॥ १२४ ॥

इत्युपजातिः ।

हारसंगतपयोधराकरं शङ्खयुक्तवलयेन संयुतम् ।
बिभ्रती कनककुण्डलं मुदं कामिनीव कुरुते रथोद्धता ॥ १२५ ॥

---

१. 'ता स्यात्कब' क-ख. २. 'लतेव' ख. ३. 'न' ख.

यथा—

[1]दीर्घघोषकुलदेवदीर्घिकापङ्कजं रविकरो [2]व्यराजत ।
ईर्ष्ययेव दुहितुः पयोनिधेर्यत्र वासमकरोत्सरस्वती ॥ १२६ ॥

इति रथोद्धता ।

हारिणी कनककुण्डलयुक्ता पुष्पयुक्करयुगा वलयश्रीः ।
वर्णिताहिपतिवक्त्रसहस्रैः **स्वागता** हरति कस्य न चेतः ॥१२७॥

यथा—

पङ्कजं तदपि पाथसि मग्नं चन्द्रमाः स च घनान्तरितोऽभूत् ।
त्वन्मुखेन्दु[3]तुलयापि विनोदं नैव हन्त सहते हत [4]वेधाः ॥ १२८ ॥

इति स्वागता ।

अथ द्वादशाक्षरच्छन्दः—

नागाधीशेनोक्तं वृत्तं **विद्याधारं** षड्भिः कर्णैरेतैर्भूमौ छन्दःसारम् ।
स्यादस्मिन्विश्रामो वेदैर्वेदैर्वेदैः कृत्वा यत्स्यात्तूर्णं धीरः कीर्त्या युक्तः १२९

यथा—

वन्दे पादाम्भोजं नित्यं सीताभर्तुः कृत्वा सिन्धौ सेतुं रक्षोनाथं हन्तुम् ।
पित्रोराज्ञां ज्ञात्वा प्राज्यं राज्यं हातुः स्वीयैः सर्वैर्लोकैः साकं नाकं यातुः ॥

इति विद्याधारम् ।

यदावृत्तयो गन्धकर्णक्रमेण भवेयुश्चतस्रो वरं वृत्तमेतत् ।
**भुजङ्गप्रयातं** हरिप्रीतिहेतोर्भुजङ्गाधिराजस्तदा संजगाद ॥१३१॥

यथा—

निशायां तमःपूरसंपूरितायां प्रयान्ती रहस्त्वत्समीपं समुत्का ।
अकस्मात्समालोक्य मामन्तिके ते कदा ह्रीयुता तोयराशेः सुता स्यात् ॥

इति भुजङ्गप्रयातम् ।

---

१. अनेन ग्रन्थकर्त्रा स्वकीयवर्णनं कृतम्. २. 'व्यकासयत्' इति घ–पुस्तकपाठानुसारेण 'व्यराजयत्' इति पाठो भवेत्. '**रविकरस्तु पिङ्गलसारविकाशिनी-वृत्तरत्नावली**-कर्ता, **शूलपाणिसुतरत्नाकरसुतदोहविसुतधण्डेशसुतभीमेश्वरसुतहरिहरसुतः**' इति Theodor Aufrecht महाशयैः Catalogus Catalogorum ग्रन्थे वर्णितोऽयमेव भवेत्. ३. 'हतया' क-ख-ग. ४. 'रेखा' क-ख.

द्वादशैर्वर्णकैर्निर्मितं संततं तद्धि **लक्ष्मीधरं** वृत्तमाकीर्तितम् ।
दृश्यते यच्चतुर्जोहलैरङ्कितं पन्नगाधीशवाणीविनोदायितम् ॥ १३३ ॥

यथा—

रासकेलीकलोल्लाससंभावितं गोपसीमन्तिनीवृन्दसंलालितम् ।
राधया गीतसंमुग्धयालिङ्गितं नौमि गोपालकं देवकीबालकम् ॥१३४॥

इति लक्ष्मीधरम् ।

विनिधेहि चतुःसगणं रुचिरं रविसंख्यकवर्णकृतं सुचिरम् ।
फणिनायकपिङ्गलसंभणितं कुरु **तोटक**वृत्तमिदं गणितम् ॥ १३५ ॥

यथा—

हरिरेति पुनर्यदि मत्सविधं विदधामि तदा ननु किं न वधम्[1] ।
युवतीजनजीवनमालि वृथा न करोति यदा वनमालिकथाः ॥ १३६ ॥

इति तोटकम् ।

कर्णध्वजानन्दमाधाय सानन्दमेतत्पुनः सूर्यसंख्याकवर्णेन ।
**सारङ्ग**वृत्तं तदा पिङ्गलाद्येन सद्यः प्रकाशीकृतं काव्यविद्येन ॥१३७॥

यथा—

सानन्दलक्ष्मीकरोपास्यमानेन दृष्टेन तृप्यन्ति के नाम लोके न ।
गोविन्दपादेन जातप्रसादेन सूर्यांशुसंभिन्नपद्मप्रकाशेन ॥ १३८ ॥

इति सारङ्गम् ।

पयोधरमत्र चतुष्कमवेहि कलाश्चरणे किल षोडश देहि ।
भुजङ्गपतेर्हृदि मौक्तिकदाम सुवृत्तमिदं शृणु **मौक्तिकदाम** ॥ १३९ ॥

यथा—

मया तव किंचिदकारि कदापि विलासिनि वाम्यमनुस्मरतापि ।
तथापि मनस्तव नाश्वसनाय व्रजामि कुतो भवतीमपहाय ॥ १४० ॥

इति मौक्तिकदाम ।

पादयुगं कुरु नूपुरसुन्दरमाशु करे कुसुमद्वयमाहर ।
सुन्दरि सर्वजनैकमनोहर**मोदक**वृत्तमिदं परितो धर ॥ १४१ ॥

---

१. 'धनम्' ख-घ.

यथा—

मानसमेतदनुक्षणमिच्छति गोपकुलं यदि हे सखि गच्छति ।
तत्करवै प्रणयं मुरविद्विषि सर्वसपत्नजने विहितत्विषि ॥ १४२ ॥

इति मोदकः ।

द्विजवरगणयुगमुपनय सकुसुमनगणमिह रचय ।
सुदति विमलतरफणिपतिनिगदित[1]तरलनयनमिति ॥ १४३ ॥

यथा—

अपहर पुरहर मम दरमभिनवकलियुगभयकर ।
हिमगिरिविहितशयनवर सुकृतसुलभ शशधरधर ॥ १४४ ॥

इति तरलनयनम् ।

कुसुमगन्धरसैरतिभूषिता चरणसंगतनूपुरमण्डिता ।
करसुवर्णलसद्वलयान्विता स्फुरति कस्य न चेतसि सुन्दरी ॥ १४५ ॥

यथा—

असुलभा शरदिन्दुमुखी प्रिया मनसि कामविचेष्टितमीदृशम् ।
मलयमारुतचालितमालतीपरिमलप्रसरो हतवासरः ॥ १४६ ॥

इति सुन्दरी ।

करसङ्गिशङ्खवलया सरसा कनकद्वयैकवलया सुभुजा ।
वरवर्णिनी रसिकसेव्यपदा प्रमिताक्षरा विजयते [2]प्रमदा ॥ १४७ ॥

यथा—

अभजद्द्वयादिव नभो वसुधां दधुरेकतामिव समेत्य दिशः ।
अभवन्मही पदयुगप्रमिता तिमिरावलीकवलिते जगति ॥ १४८ ॥

इति प्रमिताक्षरा ।

अथ त्रयोदशाक्षरच्छन्दः—

कृत्वा कर्णौ कुण्डलयुक्तौ कुरु रत्नं धृत्वा पादं नूपुरयुक्तं कुरु हारम् ।
मायावृत्तं पिङ्गलनागोदितमेतज्जानीतादः पण्डितवक्त्राम्बुजसारम् १४९

१. 'तरलनयनिरिति' क-ख-ग. २. 'वनिता' ख-घ.

यथा—

उद्यद्बाधा संप्रति राधा मधुमासे शङ्के संकेतं प्रति याता किमुदासे ।
केलीकुञ्जं शून्यमवेक्ष्यास्त रहस्याः प्राणत्राणं भावि कथं वा वद तस्याः ॥

इति माया ।

यदि तोटकवृत्तपदे गुरुरेको भवतीह तदा किल तारकवृत्तम् ।
फणिनायकपिङ्गलवर्णितमेतद्वरपण्डितमण्डलिकाहृतचित्तम् ॥ १९१ ॥

यथा—

अतिभारतरं[1] हृदि चन्दनपङ्कं[2] मनुते सरसीपवनं विषशङ्कम् ।
तव दुस्तरतारवियोगपयोधेर्नहि पारमसौ भविता परमाधेः ॥ १९२ ॥

इति तारकः ।

ध्वजं चामरं मण्डितं गन्धहारेण मृगेन्द्रद्वयं चापि युक्तं समुद्रेण ।
तदाभाविभोगीन्द्रवक्त्रारविन्देन जनानन्दकन्देन वृत्तेन कन्देन ॥१९३॥

यथा—

हृतं मे मनो हन्त गोपालबालेन नवीनाम्बुवाहावलीचारुदेहेन[3] ।
सुधावीचिसंवादिबिम्बाधराग्रेण स्फुरद्बर्हशोभालसत्कान्तिपूरेण ॥१९४॥

इति कन्दः ।

पादकुसुमरसगन्धसुदण्डकगण्डकयुगलकरूपमुपाहर ।
नागनृपतिवरभाषितसुद्युतिपङ्क्कलितमिदमावलि माद्यति ॥ १९५ ॥

यथा—

शारदविशदनिशामपि निन्दति संप्रति हृदयभिदामनु विन्दति ।
मन्मथविशिखिभयेन निषीदति माधव तव विरहेण विषीदति ॥१९६॥

इति पङ्क्तावलिः ।

द्विजवरकररज्जुकर्णपूर्णौ[4] प्रथमतृतीयपदौ यदा भवेताम् ।
द्विजपदगुरुरज्जुकर्णयुक्तौ यदि चरणावपरौ च पुष्पिताग्रा ॥ १९७ ॥

---

१. 'तरे' ख. २. 'पङ्के' ख. ३. 'नदीनां' ख; 'नचीना' घ. ४. 'तूर्ण' क.

यथा—

प्रसरति पुरतः सरोजमाला तदनु मदान्धमधुव्रतस्य पङ्क्तिः ।
तदनु [1]धृतशरासनो मनोभूस्तव हरिणाक्षि विलोकनं तु पश्चात् ॥१५८॥

इति पुष्पिताग्रा ।

अथ चतुर्दशाक्षरच्छन्दः—

कर्णस्फुरत्कनककुण्डलमण्डिता या
भावान्विता चरणसंगतनूपुरश्रीः ।
गन्धान्विता सुरसना वलयावनद्धा
कान्ता **वसन्ततिलका** मुदमातनोति ॥ १५९ ॥

यथा—

शंभौ करेण पुलकाङ्कुरदन्तुरेण
सस्मेरमामृशति कुम्भमिभाननस्य ।
रोमाञ्चिताञ्चितकुचान्तचलाञ्चलायाः
पायादपातरलमीक्षितमम्बिकायाः ॥ १६० ॥

इति वसन्ततिलका ।

कुण्डलकलितनगणमिह त्रितयं
गन्धकुसुमरसविरचितवलयम् ।
चक्रमुरगपतिवरपरिगणितं
षोडशकलमतिसुललितभणितम् ॥ १६१ ॥

यथा—

सुन्दरि नभसि जलदचयरुचिरे
देहि नयनयुगमतिघनचिकुरे ।
मानमिह न कुरु जलधरसमये
किं तव भवति हृदयमिदमदये ॥ १६२ ॥

इति चक्रम्

1. 'धृत' क-ग.

अथ पञ्चदशाक्षरच्छन्दः—

हारवत्पयोधरत्रयं निधाय सुन्दरं
चामरध्वजेन मण्डितं विधाय चामरम् ।
वृत्तराजमेतदेव नागराजभाषितं
पण्डितावलीविनोदकारि चारुभासितम् ॥ १६३ ॥

यथा—

रासलास्यगोपकामिनीजनेन खेलता
पुष्पपुञ्जमञ्जुकुञ्जमध्यगेन दोलता ।
तालनृत्यशालिगोपबालिकाविलासिना
माधवेन जायते(?) सुखाय मन्दहासिना ॥ १६४ ॥

इति चामरम् ।

द्विजकुसुमसुरूपा कर्णताटङ्कयुक्ता
कनकवलयहारैर्मण्डिता शङ्खयुक्ता ।
सुललितरशनासौ नूपुरश्रीसमेता
हरति रसिकचित्तं **मालिनी** कामिनीव ॥ १६५ ॥

यथा—

नयनविगलदस्रस्रोतसाकृष्यमाणे
नवकिसलयतल्पे हन्त सुप्ता मृगाक्षी ।
प्रबलमदनबाधालोलदोर्वल्लिरेषा
विरहजलधिपारं गन्तुमभ्यस्यतीव ॥ १६६ ॥

इति मालिनी ।

भुजसंगतशङ्खयुगा[1] वलयाकलिता
करपुष्पसुगन्धवती रशनारुचिरा ।
कनकद्वयनूपुरचारुतरा जयति
**भ्रमरावलिका** भुजगाधिपदुर्ललिता[2] ॥ १६७ ॥

---

१. 'शङ्खसुवर्णलसद्वलया' घ. २. 'दुर्लपिता' घ.

यथा—

सखि संप्रति कं प्रति मौनमिदं विहितं
मदनेन धनुः सशरं स्वकरे निहितम्।
नतिशालिनि [1]का वनमालिनि मानकथा
रतिनायकसायकदुःखमुपैषि वृथा॥ १६८॥

इति भ्रमरावली।

सगणं विधाय पयोधरद्वयसुन्दरं
भगणं [2]ततो विनिधाय चामरतोमरम्।
**मनहंस**वृत्तमिदं च पञ्चदशाक्षरं
भणितं भुजंगमनायकेन मनोहरम्॥ १६९॥

यथा—

[3]नवमञ्जुवञ्जुलकुञ्जकूजितकोकिले
मधुमत्तचञ्चलचञ्चरीक[4]कुलाकुले।
समयेऽतिधीरसमीरकम्पितमानसे
किमु चण्डि मानमनोरथेन विखिद्यसे॥ १७०॥

इति मनहंसम्।

द्विजवरतृ(त्रि?)तयकलितमिह सगणं
कलय **शरभ**मिदमतिरतिकरणम्।
फणिवरनरपतिवदनविहरणं
कविवरसकलहृदयकृतहरणम्॥ १७१॥

यथा—

अमलकमलदलरुचिधरनयनो
[5]जलनिधिमधि फणिपतिफणशयनः।
दनुजविजयसुरपतिनतिमुदितो
हरिरपहरतु दुरिततितिमुदितः॥ १७२॥

इति शरभम्।

---

१. 'किं' घ. २. 'ततोऽथ निधा' घ. ३. 'तव' घ. ४. 'समाकुले' घ. ५. 'अधिजलनिधि' क-ख-ग.

तालशररज्जुधररत्नवरसुन्दरं
भावयुततालगतमन्त्यकृतचामरम् ।
शुद्धमतिनागपतिचित्तकृतसंगमं
वृत्तनिशिपालमसिताक्षिहृदयंगमम् ॥ १७३ ॥

यथा—

चन्द्रमुखि जीवमुषि वाति मलयानिले
याति मम चित्तमिव पाति मदनानले ।
तापकरकामशरशल्पतरकीलितं
मामिह हि पश्य जहि कोपमतिशीलितम् ॥ १७४ ॥

इति निशिपालम् ।

अथ षोडशाक्षरच्छन्दः—

ध्वजेन नायकेन कुण्डलेन यद्विभूषितं
पयोधरेण वीणया शरेण पक्षिणाङ्कितम् ।
नराचवृत्तमत्र षोडशाक्षरं समीरितं
मनीषिमण्डलीहितं फणीन्द्रपन्नगोदितम् ॥ १७५ ॥

यथा—

निशुम्भशुम्भचण्डमुण्डरक्तबीजघातिनी
कुलायरूपदैत्यभूपघातपक्षपातिनी ।
नवीनपीनबद्धजालकालमेघसंनिभा
चिरं चरीकरीतु नः प्रियं पिनाकिवल्लभा ॥ १७६ ॥

इति नराचम् ।

तालपयोधरनायकतोमररत्नधरं
पाणियुतं च विभावय भामिनि वृत्तवरम् ।
नीलमिदं फणिनायकगायकसंलपितं
पण्डितमण्डलिकासुखदं सखि कर्णगतम् ॥ १७७ ॥

१. 'युत' घ. २. 'तद्भवति' घ. ३. 'भरशातितम्' घ. ४. 'रोषमतिसंचितम्' घ. ५. 'पक्षिणा' घ. ६. 'वीणया' घ. ७. 'पिङ्गलो' घ. ८. 'कलाय' क-ख; 'कपाल' ग. ९. 'पिङ्गलसंजपितम्' घ.

यथा—

सुन्दरि सुन्दरिपौ नतिशालिनि किं कुरुषे
मानिनि मानिनि काममिदं हृदयं परुषे ।
हरिणि हारिणि ते हृदये निहितो दयितो
भाविनि भावि निवासि मनोऽस्य चिराय यतः॥ १७८ ॥

इति नीलम्

तूर्यतालपक्षिराजमेरुहारनायकेन
चामरध्वजेन चापि वर्णिता सुवर्णकेन ।
वर्णितातिसुन्दरेण पन्नगेन्द्रपिङ्गलेन
**चञ्चला** चकोरचारुलोचने सुमङ्गलेन ॥ १७९ ॥

यथा—

आलि याहि मञ्जुकुञ्जगुञ्जितालिलालितेन
भास्करात्मजाविराजिरम्यतीरकाननेन ।
शोभिते स्थले स्थितेन संगता यदूत्तमेन
माधवेन भाविनी तडिल्लतेव नीरदेन ॥ १८० ॥

इति चञ्चला

आदौ विद्युन्मालापादं दत्त्वा कर्णद्वन्द्वं हारं
ताटङ्कद्वन्द्वं गुर्वन्तं तद्ब्रह्माख्यं वृत्तं सारम् ।
नागाधीशेनोक्तं चैतत्सर्वस्वान्तानन्दाधारं
कृत्वा धीरः संप्राप्नोत्याकल्पं कीर्तिस्तम्भं सारम् ॥ १८१ ॥

यथा—

राजद्भालः स्फूर्जन्नेत्रप्रोद्यद्वह्निज्वालाजालैः
स्व····त्यम्भोवीचीनीरासारस्विद्यच्चूडाचन्द्रः ।
माद्यद्गौरीवक्राम्भोजस्वैरस्मेरक्रीडाशीतः
श्रेयो देयान्नागश्रेणीभूषामीषश्चन्द्रापीडः ॥ १८२ ॥

इति ब्रह्मवृत्तम्

१. इदं सोदाहरणं ब्रह्मवृत्तलक्षणं केवलं घ-पुस्तक एवोपलभ्यते.

अथ सप्तदशाक्षरं च्छन्दः—

पयोधरयुता स्फुरत्कनकयुग्मताटङ्किनी
सुवर्णरुचिकङ्कणा ललितभाववन्नूपुरा ।
सुगन्धरुचिरा[1] लसच्छ्रवणरूपवत्कुण्डला
भुजङ्गपतिवर्णिता हरति हन्त **पृथ्वी** मनः ॥ १८३ ॥

यथा—

क्षताधरतटी घनश्वसितमङ्गरागव्ययो
दृशोरपि च शोणिमा भवति कारणादन्यतः ।
इदं तव परप्रियानिभृतसंगमव्यञ्जकं
मुखे यदिदमञ्जनं रहसि चार्धचन्द्रं गले ॥ १८४ ॥

इति पृथ्वी

द्विजवरगणान्वितो गजपतिश्रितस्तूर्यवा-
न्करतलपरिस्फुरत्कनककङ्कणेनान्वितः ।
सुरपतिगुरुश्रिया परिगतः समन्तात्सखे
जयति भुवि वृत्तभूपतिरवर्ण**मालाधरः** ॥ १८५ ॥

यथा—

क्वचिदपि वयस्यया सह विनोदमातन्वती
कतिपयकथारसैर्नयति वासरीयां रुजम् ।
सुभग तव कामिनी समधिगम्य सा यामिनी-
मनुभवति भाविनीं मदनवेदनामन्ततः ॥ १८६ ॥

इति मालाधरः ।

ध्वजः कर्णौ हारौ द्विजवरगणस्थो रसयुतः
समुद्रो रत्नं च प्रभवति यदा सप्तदशभिः ।
भुजङ्गेन्द्रोद्दिष्टा विबुधहृदयाह्लादजननी
रसै रुद्रैर्यस्यां विरतिरिह सैषा **शिखरिणी** ॥ १८७ ॥

१. 'सुगन्धि' ग; 'सुवर्ण' घ. २. 'नरपति' घ. ३. 'रयं तु' घ. ४. 'स्तोमरयुतः' घ.
५. 'सरस' घ. ६ 'भवतिविरतिः सा' घ.

यथा—

निविष्टायाः कोपाद्गुरुसदसि पङ्केरुहदृशः
पदोपान्ते छायामुपनयति मूर्ध्नः प्रणयिनि।
तया चक्षुर्लीलाकमलरजसा दूषितमिति
द्रुतं मुक्ता मुक्ताफलपरिणता बाष्पकणिकाः॥ १८८॥

इति शिखरिणी।

**मन्दाक्रान्ता** हरति हृदयं कर्णताटङ्कयुग्मा
प्रोद्यद्भावा करतललसत्कंकणा शङ्खयुक्ता।
हारोत्कृष्टा ललितवलया राववन्नूपुरा[1] या
विभ्राजन्ती सकलहृदयाह्लादिनी कामिनीव॥ १८९॥

यथा—

कर्णाभ्यर्णे हितमवहिता वर्णयन्तश्चिरेण
द्रागस्यन्तो हृदि कलुषतामानने शोणिमानम्।
यान्तो भूमिं नयनपयसां बिन्दवो मानवत्याः
पादाम्भोजप्रणतमरुना कान्तमुत्थापयन्ति॥ १९०॥

इति मन्दाक्रान्ता।

द्विजवरमुखी भास्वद्रूपा सकुण्डलकर्णिका
ललितवलया हारोत्कृष्टा पयोधरभूषिता।
कनकरसनारावैर्युक्ता लसद्रनूपुरा[2]
हरति **हरिणी** केषां चित्तं न योषिदिवाधुना॥ १९१॥

यथा—

सुरभिरजनी याता भूयः कृशीभविता शशी
परभृतयुवा मूको भावी विरंस्यति पञ्चमः।
कुसुमविशिखः संहर्ता स्वं धनुः पतिरेष्यति
प्रियसखि परावृत्तं न स्याद्गतं मम जीवितम्॥ १९२॥

इति हरिणी।

---

१. 'नूपुराभ्यां संराजन्ती' घ. २. 'लसन्नवनूपुरा' घ.

अथाष्टादशाक्षरच्छन्दः—

आदौ कृत्वा कर्णं कुण्डल[1]युक्तं हार[2]युगं दत्त्वाथो
कुर्यात्ताटङ्कं पादं कुरु सन्मञ्जीरयुगाभ्यां युक्तम् ।
कृत्वा तातं कुन्तीपुत्रसमेतं वै गुरुयुग्मं दत्त्वा
**मञ्जीरा** सा नागाधीशनिसृष्टा राजति सैषा वक्रे ॥ १९३ ॥

यथा—

प्रौढध्वान्ते गर्जद्वारिदधाराधारिणि काले गत्वा
[3]त्यक्त्वा प्राणानग्रे कौलसमाचारानपि हि[4]त्वा यान्ती ।
कृत्वा सारङ्गाक्षीसाहसमुच्चैः केलिनिकुञ्जं शून्यं
दृष्ट्वा प्राणत्राणं भावि [5]कथं वा नाथ वद प्रेयस्याः ॥ १९४ ॥

इति मञ्जीरा ।

हारयुक्तसुवर्ण[6]कुण्डलपाणिशङ्खविराजिता
पादनूपुरसंगता सुपयोधरद्वयभूषिता ।
शोभिता वलयेन [7]पन्नगराजपिङ्गलवर्णिता
**चर्चरी** तरुणीव चेतसि चाकसीति सुसंगता ॥ १९५ ॥

यथा—

कोकिलाकलकूजितं न शृणोषि [8]संप्रति सादरं
मन्यसे तिमिरापहारि सुधाकरं न सुधाकरम् ।
दूर[9]मुञ्झसि भूषणं विकलासि चन्दनमारुते
कस्य पुण्यफलेन सुन्दरि [10]मन्दिरं न सुखायते ॥ १९६ ॥

इति चर्चरी ।

ध्वजं चामरं गन्धकर्णौ रसः कुण्डलं तोमरं च
तथा तालताटङ्कतूर्याणि शेषे गुरुद्वन्द्वमत्र ।

१. 'युग्मं' घ. २. 'युतं' घ. ३. 'कृत्वा' घ. ४. 'त्यक्त्वा' घ. ५. 'कथं वा नो वदत प्रेयस्याः' घ. ६. 'कङ्कण' घ. ७. 'पिङ्गलपन्नगाधिप' घ. ८. 'सुन्दरि' घ. ९. 'मञ्चसि' घ. १०. 'मन्दिरे न सुखायसे' घ.

तदा **क्रीडया** चिह्नितं **चन्द्र**मेतद्भुजंगाधिराजः
कविश्रेणिविस्मापकं सर्वलोकप्रियं संजगाद ॥ १९७ ॥

यथा—

भ्रमन्ती धनुर्मुक्तनाराचधारानिरुद्धे समस्ते
नभःप्राङ्गणे पक्षिवाय्वोः प्रयाते निरन्ते प्रशस्ते।
तथा चण्डगाण्डीवबाणावलीनीचरक्षाविलक्षो
बभूवाङ्गराजो यथा न स्थितोऽसौ विपक्षस्वपक्षः ॥ १९८ ॥

इति क्रीडाचन्द्रः।

अथैकोनविंशाक्षरच्छन्दः—

कर्णः कुण्डलसंगतः करतलं चामीकरेणान्वितं
पादान्तो रवनूपुरेण कलितो हारौ प्रसूनोज्ज्वलौ।
गुर्वानन्दयुतो गुरुर्यदि भवेत्तत्तूनविंशाक्षरं
नागाधीश्वरपिङ्गलेन भणितं **शार्दूलविक्रीडितम्** ॥ १९९ ॥

यथा—

सौमित्रे किमु मृग्यते प्रतिलताकुञ्जं कुरङ्गेक्षणा
हन्तैतद्विपिने मनागपि न वा नेत्रातिथि[1]र्मैथिली।
एणी निस्त्रपमीक्षते मधुकरश्रेणी समुज्जृम्भते
निःशङ्कं चमरी चरत्यपि निरातङ्कं पिकी गायति ॥ २०० ॥

इति शार्दूलविक्रीडितम्।

द्विजवरगणयुगमुपधाय परिकलय कर-
मथ नगणयुगलमिह गन्धयुगमनु विहर[2]।
फणिनृपतिभणितमिति **चन्द्र**मिदमिति शृणुत
सकलकविकुलहृदयमोदकरमवतनुत ॥ २०१ ॥

यथा—

अनुपहतकुसुमरसतुल्यमिदमधरदल-
ममृतमयवचनमिदमालि विफलयसि चल।

---

१. 'जातातिथि' घ. २. 'विरह' ग; 'वितर' घ.

यदपि यदुरमणपदमीशमुनिहृदि लुठति
तदपि तव रतिवलितमेत्य वनतटमटति ॥ २०२ ॥

इति चन्द्रम् ।

द्विजवरगणतृ(त्रि?)तयमिह हि नगणयुगलकं
विमलवलयमपि च कलय सकलजनसुखम् ।
फणिपतिवरभणितममलधवलमिह हितं
विमलकविकुलहृदि कलितमिति भुवि वलितम् ॥ २०३ ॥

यथा—

उपगत इह सुरभिसमय इति सुमुखि वदे
निधुवनमधिसह पिब मधु जहि रुषमपदे ।
कमलनयनमनुसर सखि तव रभसपरं
प्रियतमगृहगमनमुचितमनुचितमपरम् ॥ २०४ ॥

इति धवलम् ।

कुरु पाणिं कङ्कणयुग्मालंकृतमग्रे रत्नं हारं च
चरणं सन्नूपुरसंयुक्तं कुरु कर्णे भ्राजत्ताटङ्कम् ।
रसनामायोजय मञ्जीरद्वयमेवं शंभुं सद्वृत्तं
भुवि कान्तं गौरि चिरं संभावय तन्नागाधीशेनोक्तम् ॥ २०५ ॥

यथा—

जय मायामानवमूर्ते दानववंशध्वंसव्यापारी
बलमाद्यद्रावणहत्याकारण लङ्कालक्ष्मीसंहारी ।
कृतकंसध्वंसनकर्मा[2]शंसन गोगोपीगोपानन्दी
वलिलक्ष्मी[3]नाशन लीलावामन दैत्यश्रेणीनिष्कन्दी ॥ २०६ ॥

इति शंभुः ।

अथ विंशत्यक्षरच्छन्दः—

वरपाणिशोभिसुवर्णकङ्कणरत्नरज्जुविभूषिता
सुपयोधरा पदसङ्गिनूपुररूपकुण्डलमण्डिता ।

१. 'राज' घ. २. 'धर्मा' घ. ३. 'शासन' घ.

फणिराजपिङ्गलवर्णिता कविसार्थमानसहारिका
वरकामिनीव [1]मनोमुदे नहि कस्य सा [2]खलु **गीतिका** ॥ २०७ ॥

यथा—

अलमीशपावकपाकशासनवारिजासनसेवया
गमितं जनुर्जनकात्मजापतिरप्यसेव्यत नो मया।
करुणापयोनिधिरेक एव सरोज[3]पत्रविलोचनः
स परं करिष्यति दुःख[4]मोषमशेषदुर्गतिमोचनः ॥ २०८ ॥

इति गीतिका।

तालचामरध्वजं पयोधरं च कुण्डलं शरं विधाय
नूपुरं च नायकं सपक्षिराजगन्धचामरं निधाय।
रूपमन्त्यगं विधेहि [5]वर्णिता च पन्नगेन्द्रपिङ्गलेन
**गण्डका** कवीन्द्रमण्डलीविनोदकारिणी सुमङ्गलेन ॥ २०९ ॥

यथा—

दृष्टमस्ति वासुदेव विश्वरूप[6]मेतदेव शेषकं तु
वाजिरत्नभृत्यदारसूनुगेहवित्तमादिव(म)न्नवं तु।
त्वत्पदाब्जभक्तिरस्तु चित्तसीम्नि वस्तुतस्तु सर्वदैव
शेषकाललुप्तकालदूतभीतिनाशिनीह हन्त सैव ॥ २१० ॥

इति गण्डका।

अथैकविंशत्यक्षरच्छन्दः—

कर्णं ताटङ्कयुक्तं वलयमपि सुवर्णं च मञ्जीरयुग्मं
पुष्पं गन्धं वहन्ती द्विजगणरुचिरा नूपुरद्वन्द्वयुक्ता।
शङ्खं हारं दधाना सुललितरसना रूपवत्कुण्डलाभ्यां
मुग्धा केषां न चित्तं तरलयति बलात्**स्रग्धरा** कामिनीव ॥ २११ ॥

यथा—

अन्त्रप्रोतास्थिमालावलयितविलसद्बाहुदण्डप्रचण्डा
वेगव्यालोलमुण्डावलिकलितरणत्कारकण्ठोप[7]कण्ठाः।

---

१. 'हिता' घ. २. 'किल' घ. ३. 'दाम' ख-ग. ४. 'नाश' ख; 'शेष' ग. ५. 'वर्णितेह' घ. ६. 'मेतदेव नास्ति शेष' घ. ७. 'कण्ठा' क.

कुर्वन्त्यो[1] गर्वमत्युद्गलगहनवलद्धर्बरध्वानमुच्चै-
रुत्क्रुत्तैरुत्तमाङ्गैर्विदधति च शिरःकन्दुकक्रीडनानि[3] ॥ २१२ ॥
इति स्रग्धरा ।

चामररत्नरज्जुवरपरिगतविप्रगणाहितशोभः
पाणिविराजिपुष्पयुगविरचितकङ्कणसंगतगन्धः ।
चारुसुवर्णकुण्डलयुगलकृतरोचिरलंकृतवर्णः[4]
पिङ्गलपन्नगेश इति निगदति राजति वृत्तनरेन्द्रः ॥ २१३ ॥

यथा—

पङ्कजकोशपानपरमधुकरगीतमनोज्ञतडागः
पञ्चमनादवादपरपरभृतकाननसत्परभागः ।
वल्लभविप्रयुक्तकुलवरतनुजीवनदानदुरन्तः[5]
किं करवाणि वक्षि मम सहचरि संनिधिमेति वसन्तः ॥ २१४ ॥
इति नरेन्द्रः ।

अथ द्वाविंशत्यक्षरच्छन्दः—

यस्यामष्टौ पूर्वं दीर्घास्तदनु कमलमुखि दिनकरसंख्या
ह्रस्वा वर्णाः पीनोत्तुङ्गस्तनभरविनमितसुभगशरीरे ।
दीर्घावन्त्यौ वर्णौ[6] मुग्धे यतिरपि यदि वसुरस····कैः स्या-
द्द्वाविंशत्या वर्णैः पूर्णा प्रभवति कुसुममृदुलतरहंसी ॥ २१५ ॥

यथा—

श्रीकृष्णेन क्रीडन्तीनां क्वचिदपि वनभुवि मनसिजभाजां
गोपालीनां चन्द्रज्योत्स्नाविशदरजनिगुरुजनितरतीनाम्[7] ।
दीर्घभ्रश्यत्पत्त्रालीनामुपचितरभसविमलतनुभासां[8]
रासक्रीडायासध्वंसी मुदमुपनयति मलयगिरिवातः ॥ २१६ ॥
इति हंसी ।

---

१. 'कुर्वन्ती' क; 'कुर्वन्तो' ख. २. 'रुत्कृष्टै' ग. ३. 'क्रीडितानि' ग. ४. 'चारुसुन्दरसुवर्णकुण्डल' ग. ५. 'योग्य' ग. ६. 'लीलालोले यतिरिह विरमति कुलगिरिषट्कैः' ख-ग. ७. 'रजनिजनितरतरतीनां' घ. ८. 'घर्मभ्रश्य' घ.

अथ त्रयोविंशत्यक्षरच्छन्दः—

करसङ्गिसुवर्णद्वयवलया ताटङ्कमनोहरशङ्खधरा
कुसुमत्रयराजच्छ्रवणविलोलत्कुण्डलमण्डितरत्नवरा ।
भुजसंगतकेयूरजसुविलासा पिङ्गलनागसमालपिता
किल **सुन्दरिका** सा भवति तदा पद्मावतिका कविराजहिता ॥ २१७ ॥

यथा—

शरदिन्दुसमानं व्यपगतमानं गायति दिक्षु तवैव यशः
स्वरसामुनिदेवी विगलितनीवी कामकलाविकला बहुशः ।
पृथुवेपथुयुक्ता स्वगृहवियुक्ता स्वेदकणावलिमुग्धमुखी
धरणीरमणेन्दो विकसदमन्दोदारसमा [1]शरदिन्दुमुखी ॥ २१८ ॥

इति सुन्दरी ।

अथ चतुर्विंशत्यक्षरच्छन्दः—

विनिधाय करं कुरु रत्नमनोहरबाहुयुगं [2]कुरु रत्नधरं
सगणं च[3] ततः कुरु पाणितलं वरपुष्पयुगं विनिधाय गुरुम् ।
इति **दुर्मिलका** फणिनायकसंरचिता किल वर्णविलासपरा
चतुराश्रितविंशतिवर्णकृता कविता सुकृताश्रयशिल्पधरा ॥ २१९ ॥

यथा—

कति सन्ति न गोपकुले ललिताः स्मरतापहताश्च विहाय च ता
रतिकेलिकलारसलालसमानसमागतमुज्झितमानरसम् ।
वनमालिनमालि नमस्य नमस्य नमस्यमुदस्य चिरस्य वृथा
भविता परितापवती भवती युवतीजनसंसदि हासकथा ॥ २२० ॥

इति दुर्मिला ।

पादयुगं कुरु नूपुरसंयुतमत्र करं वररत्नमनोहर-
वज्रयुगं कुसुमद्वयसंगतकुण्डलगन्धयुगं समुपाहर ।
पण्डितमण्डलिकाहृतमानसकल्पितसज्जनमौलिरसालय-
पिङ्गलपन्नगराजनिवेदितवृत्तकिरीटमिदं परिभावय ॥ २२१ ॥

१. 'सहवर्तिमुखी' ग. २. 'वर' घ. ३. 'कुरु पाणितलं वरपुष्पयुगं विनिधाय गुरुं सकरं' घ.

यथा—

मल्लिलते मलिनासि किमित्यलिना रहिता भवती बत यद्यपि
सा पुनरेति शरद्रजनी तव या तनुते धवलानि जगन्त्यपि ।
षट्पदकोटिविघट्टितकुड्मलकोटिविनिर्गतसौरभसंपदि
न त्वयि कोऽपि विधास्यति सादरमन्तरमुत्तरनागरसंसदि ॥ २२२ ॥

इति किरीटम् ।

अथ पञ्चविंशत्यक्षरच्छन्दः—

कर्णद्विजवरगणतृ(त्रि?)तयनगणमिह रचय ललितमिति[1] कुसुमगणं
नारीगणनगणकलितशरकुसुमसुकनककुसुमवरकृतरसनम् ।
नागाधिपनिगदितमिति च परिमुषितसकलकविनृकुलमतिरुचिरं
शाल्लूरममलमिह कलय कमलमुखि मुषितविबुधजनहृदयवरम् ॥२२३॥

यथा—

गोवर्धनगिरिधरमुपचितदितिसुतपरमहृदयमदशमनकरं
व्यर्थीकृतजलधरगुरुवरष(र्ष?)णभरगतभयनिजकुलदुरितहरम् ।
नन्दालयनिवसनकृतवनविलसनविहितविविधरसरभसपरं
संवीतवसनधरमरुणकरचरणमनुसर सरसिजनयनधरम् ॥ २२४ ॥

इति शाल्लूरम् ।

मात्रावृत्तमिह प्रोक्तं चत्वारिंशत्त्रयाधिका[2] ।
त्रयोदशाधिकशतं वर्णवृत्तमिहोदितम् ॥

इति मैथिलदीर्घघोषकुलोद्भूतदामोदरमिश्रविरचितवाणीभूषणं समाप्तम् ।

---

१. 'मधि' घ. २. 'त्र्याधिकम्' क-ख; 'च्छताधिकम्' ग.

KÂVYAMÂLÂ. 58.



# THE S'RINGÂRABHÛSHANA

OF

# VÂMANA-BHATTA-BÂNA


EDITED BY

PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.





PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1896.

*Price 3 Annas.*

काव्यमाला. ५८.

श्रीवामनभट्टबाणविरचितं

# शृङ्गारभूषणम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९६



मूल्यं ३ आणकाः ।

# काव्यमाला ।

श्रीवामनभट्टबाणविरचितं

## शृङ्गारभूषणम्[1] ।

मैत्रीं येन मनोभवो विरचयन्विश्वं जयत्यञ्जसा
येनोद्दीपनकारिणा विजयते शृङ्गारनामा रसः ।
रम्या यत्किरणाश्चकोरपरिषत्सौहित्यनाडिंधमाः
सोऽयं वः सुखमातनोतु जगतामानन्दनश्चन्द्रमाः ॥ १ ॥

अपि च ।

ताराजालकचुम्ब्यमानकमलं धौतप्रवालोदरं
शङ्खान्तर्गतकूजितं शशिकलासंसक्तकालाम्बुदम् ।
शैलक्षोभवलन्मृणाललतिकं संत्रस्तविद्युल्लतं
वेलोल्लङ्घिमनोभवं विजयते वीरायितं योषिताम् ॥ २ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(सप्रश्रयमञ्जलिं बद्ध्वा ।)

असितमलके मध्ये शून्यं नितम्बभरे घनं
मधुरमधरे मन्दं याने च तुङ्गमुरोजयोः ।
अधिकमृदुलं बाह्वोरायामशालि विलोचने
वपुरवतु वो मुग्धाक्षीणामभङ्गुरवैभवम् ॥ ३ ॥

इति पुष्पाञ्जलिं विकीर्य नेपथ्याभिमुखमवलोक्य ।) मारिष, इतस्तावत् ।

(प्रविश्य ।)

**पारिपार्श्वकः**—भाव, अयमस्मि ।

---

१. द्रविडदेशविहितसंचारोऽयं शृङ्गारभूषणभाणः काव्यमालाकरावलम्बनमहोत्सव-
नुभूय सार्वजनीनतां सार्वत्रिकतां च भजतामित्यादरपुरःसरमस्मत्संनिधौ श्रीमद्भिः
सुब्रह्मण्यशास्त्रिभिः प्रेषित इति तेषामुपकारं बिभृमः.

**सूत्रधारः**—मारिष, अद्य खलु चराचरगुरोरुत्तुङ्गतुङ्गभद्रातरङ्गतालवृन्तापनीयमानसंध्याताण्डवपरिश्रमस्य हेमगिरिकूटत्रीलाकरहेमकूटशृङ्गविहितमङ्गलायतनस्य कामागमगन्धिवामभागस्य शेखरीभूतशीतभानुशकलस्य भगवतो विरूपाक्षस्य चैत्रयात्रामहोत्सवे

रतितन्त्रदेशिकानां रतिपतिनिगमान्तवावदूकानाम् ।
वैदग्ध्यभूषणानामेषा परिषत्समागता विदुषाम् ॥ ४ ॥

तत्केनापि रूपकेण सभामिमामाराध्य सफलयिष्यामो वयं कुलक्रमागतं प्रयोगविद्यावैशद्यम् ।

**पारिपार्श्वकः**—यथा रोचते भरतकुलभूषणाय भावाय ।

**सूत्रधारः**—तत्किमिति क्रियते विलम्बः ।

**पारिपार्श्वकः**—भाव, कस्य पुनः कवेः कृतिमभिनीय सामाजिकमनांसि रञ्जयिष्यति भवान् ।

**सूत्रधारः**—(स्मरणमभिनीय ।)

सौभाग्यस्य निधिः श्रुतस्य वसतिर्विद्यावधूनां वरो
लक्ष्म्याः केलिगृहं प्रसूतिभवनं शीलस्य कीर्तेः पदम् ।
निःसामान्यविकासया कवितया जागर्ति वत्सान्वयः
श्रीमान्वामनभट्टबाणसुकविः साहित्यचूडामणिः ॥ ५ ॥

तेन कविना प्रणीतं शृङ्गारभूषणं नाम भाणं प्रयुञ्जानैरस्माभिर्नियतमावर्जितैव सभा ।

**पारिपार्श्वकः**—सम्यगुपन्यस्तं भावेन ।

**सूत्रधारः**—किं च

वाचस्तस्य कवेः प्रसन्नमधुरा दक्षाः प्रयोगे वयं
वैदग्ध्यप्रथमावतारसरणिः सामाजिकानां मनः ।
कालः कोकिलकण्ठरागविलसत्कंदर्पदर्पोदयः
शृङ्गारोऽपि रसः स एष मिलितो दिष्ट्या गुणानां गणः ॥ ६ ॥

**पारिपार्श्वकः**—सम्यगुपक्षिप्तं वसन्तागम इति । तथा हि ।

कुड्मलितचूतविटपाः कोमलकलकण्ठपञ्चमप्रसराः ।
पक्ष्मलितमदनशौर्या मदयन्ति मनांसि माधवारम्भाः ॥ ७ ॥

**सूत्रधारः**—तर्हि नियुज्यन्तां भूमिकापरिग्रहाय भरतलोकाः ।

**पारिपार्श्वकः**—यदाज्ञापयति भावः । (इति निष्क्रान्तः ।)

**सूत्रधारः**—(सर्वतोऽवलोक्य ।) अये, मधुसमयारम्भगुम्भितामोदमुत्सवमयमिव जगदखिलमालक्ष्यते । तथा हि ।

चूताः पञ्चशरस्य बाणरचनाप्रस्तावमातन्वते
संलापान्परिचिन्वते परभृताः प्रादुर्भवत्पञ्चमाः ।
आदत्ते पवनोऽपि सौरभमयीमन्यादृशीं वासनां
पुष्पोद्भेदवतीमशोकलतिकामभ्येति पुष्पंधयः ॥ ८ ॥

(परिक्रम्यावलोक्य च ।) क एष कामिनीकुचकलशगाढाश्लेषविलिप्तकुङ्कुमवक्षःस्थलः कङ्केलिपल्लवानुकारिणा कौसुम्भेन वाससा कलितसंव्यानः कर्णपूरपदनिहितकमनीयकह्लारः करतलकलितकनकवेत्रयष्टिः कंदर्प इव मूर्तिमानित एवाभिवर्तते । य एष

विलुलिततिलकश्रीर्म्लानकर्णावतंसो
दरमुकुलितनेत्रो दर्शयन्नङ्गकेन ।
नवनखपदभागां नैशसंभोगमुद्रा-
मिह विशति विटानामग्रणीर्वेशवाटीम् ॥ ९ ॥

(निरूप्य ।) अयं खलु भागिनेयो भरतशेखरो विलासशेखरभूमिकामादायेत एवाभिवर्तते । अहमप्यनन्तरकरणीयाय सज्जीभवामि । (इति निष्क्रान्तः ।)

**इति प्रस्तावना ।**

---

(ततः प्रविशति विलासशेखरः ।)

**विलासशेखरः**—(विलोक्य ।) अये, प्रभातप्राया विभावरी । तथा हि ।

आकुलिततिमिरचिकुरामामीलिततारकामसौ श्यामाम् ।
अनुभूयेव श्रान्तः संप्रत्युपयाति वारुणीं चन्द्रः ॥ १० ॥

अपि च ।

अयमिह मधुपविलासी सादरमनुभूय कुमुदिनीं रात्रौ ।
आविस्मितकमलमुखीमम्बुजिनीमद्य चुम्बति प्रेम्णा ॥ ११ ॥

(परिवृत्यावलोक्य ।) अये, मार्तण्डस्य धूर्तजनाचरणसरणिवैदग्धी । एष खलु

आश्लिष्यत्यनुरागिणीं कमलिनीं गाढानुरागः करै-
रालिम्पन्हरिचन्दनेन हरितो बालातपच्छद्मना ।
आनन्दं दिवसश्रियो विरचयन्नाकृष्टरक्तांशुको
मीलत्तारकमुच्चलद्भ्रमरकं प्राचीमुखं चुम्बति ॥ १२ ॥

(स्मरणमभिनीय ।)

आघ्राय कर्णमूलं सुतनोः सुरतश्रमेण सुप्तोऽहम् ।
प्रतिबोधितः प्रभाते तारनिनादेन ताम्रचूडेन ॥ १३ ॥

तदानीं च

उन्निद्रोऽपि घनस्तनं वरतनोरालिङ्ग्य गाढं वपु-
र्निद्राशेषकषायितेन मनसा व्यामीलदर्धेक्षणः ।
अङ्गैरुत्पुलकैरनङ्गकलहव्यापारदूरालसै-
रैक्यं तादृशमन्वभूवमलकामोदेन वीतश्रमः ॥ १४ ॥

(परिक्रम्य स्पर्शसुखमभिनीय सानन्दम् ।)

विलुलितचिकुरो विलासिनीनां विदलितपङ्कजवासनासनाथः ।
अयमिह पवनः प्रभातजन्मा कलयति चेतसि कंचन प्रमोदम् ॥ १५ ॥

(कतिचित्पदानि गत्वा सवितर्कम् ।) अये, महत्येव प्रत्यूषे गुरुतरकार्यारम्भव्यापृत इव किमित्यहं निर्गतोऽस्मि । (सस्मरणम् ।) आः, ज्ञातमेव । कामुकजनहरिणवञ्चनवागुरायाः कनकमञ्जरीदुहितुरनङ्गमञ्जर्याः प्रथमार्तवमहोत्सवं संभावयितुमुद्यतोऽस्मि । अथवा विस्मृतिशीलः खलु कामिलोकः । यतः ।

अधरयति भावमन्यं तत्तादृक्सुरतकौशलं सुतनोः ।
अनुभूयमानमिव मे संप्रति संचिन्त्यमानमपि मन्ये ॥ १६ ॥

तदहमधुना विटविदूषकपीठमर्दकसंकुलेन विविधविलासिनीवर्गेण मन्द्रतरतन्त्रीरवानुकारिकर्णहारिकलमधुरगीतेन धम्मिल्लहल्लकानुसारिमधुकरझंकाररचितमन्मथचापटंकारविभ्रमेण निरन्तरवितन्यमानमहोत्सवेन निरङ्कुशानङ्गशासनेन वेशवाटेन

प्रणयकलहं कोपोद्वेलं नियम्य विलासिनः
प्रकृतिमधुरं नर्मालापं विधाय वधूजनैः ।
दिवसमखिलं नीत्वा तां तां विलोक्य चमत्कृतां
मुदितहृदयः सायं गन्ता सखीमहमीक्षितुम् ॥ १७ ॥

(परिक्रम्याग्रतो दृष्टिं दत्वा।) कैषा गाढपरिभोगशंसिना वपुषा बालातपलेखेव भासुरमधिवसति रम्यहर्म्यतलम् । तथा हि ।

नखपदविषक्तमलकं विमोचयन्ती विमुक्तसीत्कारम् ।
सुरतपरिश्रमखिन्ना सुतनुरियं सौधमध्यमध्यास्ते ॥ १८ ॥

एषा खलु मन्दारिकादुहिता मलयवती । तदेनामुपसृत्य संलापयिष्ये । (तथा कृत्वा।) अयि मलयवति,

जातश्वेतिमपल्लवं शशिकलासंनद्धमुक्तावली
म्लाने चम्पकमालिके मणिगणव्यासङ्गिनौ दर्पणौ ।
मात्राधिक्यजुषानिलेन कलशद्वंद्वं च कम्पोत्तरं
क्लान्तं व्योम च कस्य वा सुकृतिनः शंसन्ति भाग्योन्नतिम् ॥ १९ ॥

किं ब्रवीषि—'भाव, किं न जानासि गन्धसारम्' इति । (सश्लाघम्।) साधु रे गन्धसार, साधु । ईदृशभाग्यानुभवभाजनं भवानेव धन्यः । सखि मलयवति, इयमाशीः ।

ईदृशं प्रेम युवयोरेव मन्येऽन्यरागिणोः ।
अनन्यपरतन्त्रेण रतितन्त्रेण वर्धताम् ॥ २० ॥

किं ब्रवीषि—'किमन्यतो गन्तुमभिलषति भावः' इति । भवत्वेवम् । पूर्वेद्युः प्रत्यूषवेलायामेव सख्याः कनकमञ्जर्या दुहितुरनङ्गमञ्जर्याः प्रथमार्तवमहोत्सवं संभावयितुं निमन्त्रितोऽस्मि । आस्व । (इति परिक्रम्यान्यतोऽवलोक्य।) एषा खलु कलावतीदुहिता कमलवती भवनवेदिकामधिवसति ।

स्मरमृगयुवागुराभानसितानवकीर्य नखमुखैरलकान् ।
तरुणजनहृदयहरिणान्निसर्गतरलान्गृहीतुमुद्युङ्क्ते ॥ २१ ॥

तदेनामुपसर्पामि । (तथा कृत्वा ।) सखि कमलवति,

परिदर्शितचारुबाहुमूलं प्रकटालक्षितनव्यभोगचिह्नम् ।
कचसंयमनच्छलेन कान्ते मनसः संयमनं ममातनोषि ॥ २२ ॥

किं ब्रवीषि—'भवानेव जानाति चाटुवैदग्ध्यम्' इति । (सस्मितम् ।) शृणु तन्वि,

आमण्डलीकृतकुचं परिरभ्य दोर्भ्या
आघ्राय कण्ठमगुरुद्रवरञ्जितं ते ।
बिम्बाधरं विहसितामरलोकसार-
मास्वाद्य रन्तुमभिलष्यति मेऽन्तरात्मा ॥ २३ ॥

किं ब्रवीषि—'धूर्त, निगूढं भण । अन्तरास्ते माधवगुप्तः' इति । (विहस्य ।) किं मलयगुप्तो निष्कासितः । अथवा किमसुलभं जननीपिशाचिकायां जीवन्त्याम् । तथा हि ।

रसज्ञलोकैरभिनन्दितानां वाराङ्गनाचन्दनवल्लरीणाम् ।
मुहुर्वमन्त्यो गरलं मुखेन स्वमातरः कालभुजङ्ग्य एव ॥ २४ ॥

अपि चायमाजन्मसिद्धः स्वभावः ।

तरुणं वा ललितं वा गुणोन्नतं वा कुलप्रसूतं वा ।
अपहाय मातृलोको धनिनं यं कंचिदेव कामयते ॥ २५ ॥

किं ब्रवीषि—'किमस्त्यविदितं भावस्य' इति । (सोत्प्रासम् ।) सखि, ते हितमुपदिशामि मातृगृहानुसरणमुन्मुच्य नवनवसंपन्नलावण्यं सफलीकुरुष्व तारुण्यम् । आस्स्व । साधयामि । (इति परिक्रामितकेनान्यतो दत्तदृष्टिः ।) अत्र हि

कण्ठैर्मञ्जुलनिनदैः साकं सौधे निलीय दयिताभिः ।
कुर्वन्त्यमी कपोताः कूजव्याजेन मणितरणितानि ॥ २६ ॥

(अन्यतोऽवलोक्य ।) क एष गाढतरताम्बूलकृष्णिकालंकारिताधरदलाति-

व्यक्तदशनक्षतः करपदमुद्राङ्कितकर्णबाहुमूलः कामिनीकुचकलशहरिद्राद्रवरञ्जितोपसंवीतस्तिष्ठति । (सविमर्शम् ।) एष खलु माधवसूनुर्मन्दारको नाम विप्रविटः पितुरध्वरार्थनिहितानि धनान्यपहृत्यानङ्गसत्रे दीक्षितवान् । भवतु । एनं तावत्परिहासभाजनं विधास्यामि । (उपसृत्य ।) सखे मन्दारक, साधु कृतं भवता । यतः ।

रम्भाभोगसुखं महाक्रतुकृतां स्वर्गे भवेदित्यहो
वाचा केचन मोहिता विदधते यागेन वित्तव्ययम् ।
कन्दर्पाध्वरदीक्षितेन भवता द्रव्यं स्वपित्रार्जितं
कान्ताश्लेषमहोत्सवोऽयमधुना निर्विघ्नमासाद्यते ॥ २७ ॥

अपि च ।

अकृताधरबिम्बचुम्बनानामनभिज्ञातनखाङ्कसीत्कृतानाम् ।
अवधूतनिषेधगर्भवाचामसिपात्रं नकुलाङ्गनारतानाम् ॥ २८ ॥

किं च वयस्य, ते हितमुपदिशामि । किं ब्रवीषि—'त्वदृते को मे हितमुपदेक्ष्यति' इति । शृणु तावत् ।

वामाङ्गे वदनेऽपि वक्षसि विभोरव्याहतप्रक्रमा-
माज्ञां शम्बरशासनस्य यदमी देवास्त्रयो बिभ्रति ।
कान्तारे विषयोपभोगविमुखा ये केऽपि तेषां ततः
कान्ताश्लेषसुखोपरोधवचनं नैव प्रमाणं हि ते ॥ २९ ॥

तस्मात्त्वं श्रुतिस्मृतिविहितान्यपहाय कामागमविहितानि कर्माणि निर्विशङ्कमनुतिष्ठ । एष खलु परमो धर्मः। किं ब्रवीषि—'यथोपदिष्टं भावेन' इति । (सश्लाघम् ।) आस्स्व । अन्यतो गच्छामि । (इति परिक्रामितकेन ।) इयं खलु रत्नावली मदुपभुक्तयौवनारम्भा प्रणयकलहवतीव मामाघूर्णितया दृशा दर्शितैकस्तनोत्तरीया विलोकयति । तदेनां कपटगतादिभिरुक्तिभिः प्रलोभ्य कृतापराधमात्मानं मोचयामि । इतरथा पुनरियमनागममूलान्यागांसि संजनयति । (उपसृत्य सस्मितम् ।) रत्नावलि,

अमृतकरबिम्बमेतन्मुञ्चति किमिति प्रसादमात्मीयम् ।
कोणेन शोणिमानं कुवलययुगलं च किमिति संधत्ते ॥ ३० ॥

किमेवं मयि भाषमाणेऽप्यनालपन्ती तिष्ठसि । किं ब्रवीषि—'कितव, काहं तवोत्तरं दातुम्' इति । (सानुस्मरणम् ।)

त्यज विलासिनि दासजने रुषं किमिति कोपकषायितमीक्षणम् ।
न विहितं नलिनायतलोचने तव निदेशविलङ्घनसाहसम् ॥ ३१ ॥

किं ब्रवीषि—'नाहं भाजनं विटजनकपटचाटुपाटवस्य । पश्य ।

अन्तर्गुम्भितगरलं बहिरपि पुण्ड्रेक्षुसारतो मधुरम् ।
कथमिव सत्यं मन्ये खलवचनं गगनकुसुमगन्धनिभम् ॥ ३२ ॥

तद्यथागतं गच्छ' इति । शृणु भामिनि,

सहजनिजचापलेन भ्रमरयुवा तत्र तत्र कृतकेलिः ।
कमलमुखि कस्य मान्यः कमलिन्या गाढरोषमवधूतः ॥ ३३ ॥

तत्कृतापराधमपि मां क्षमस्व। (इति पादयोः पतन् ।) किं ब्रवीषि—'तर्हि ताम्बूलं गृहीत्वा गच्छ' इति । (सहर्षं नाट्येन ताम्बूलं गृहीत्वा ।) सख्युत्सवसंभावनाय साधयामि । (इति यामितकेन दक्षिणतोऽवलोक्य ।) अयं खलु नवोढया कनकलतया सह कामन्दको भवनवेदिमधिवसति । तदेनमुपसृत्य नववधूविस्रम्भणमुपदेक्ष्यामि । (इति तथा कृत्वा ।) अये कामन्दक, इयं कनकलता भाग्येन ते पञ्चशरविजयदायिना वयसा परिष्क्रियते । तथा हि ।

आभोगेन कुचद्वयी विवृणुते संनाहमागामिनं
नेत्रे विस्तृतिशालिनी नवनवं कौटिल्यमभ्यस्यतः ।
चक्षुर्गोचरतामुपैति शनकैस्तन्वी च रोमावली
बाला सेयमुपैति मन्मथयशःसंजीवनं यौवनम् ॥ ३४ ॥

किं ब्रवीषि—'किं न संपद्यते भावपक्षपातेन' इति । वयस्य, यदुच्यते गन्तृच्छायां परित्यज्यागामिनीच्छाया गृहीतव्येति, तदिदं तव फलितम् । यतः ।

परिमुच्य पत्रलेखां परिणततारुण्यगर्वदुर्ललिताम् ।
अनुभवसि वीतबाल्यामेनामप्रौढयौवनां तन्वीम् ॥ ३५ ॥

अपि चायमेव कालः शृङ्गारसर्वस्वं रतिसुखमनुभवितुम् । किं ब्रवीषि—

'आश्लेषे सति संकुचद्भुपुरियं बिम्बाधरस्य ग्रहे
व्यावृत्ताननपङ्कजा स्तनतटस्पर्शे कृतस्वस्तिका ।
नीवीमोक्षविधौ च निह्नुतिपरा नोपूरयत्यञ्जसा
मद्वाञ्छामधुना तथापि जनयत्यानन्दमन्यादृशम् ॥ ३६ ॥'

इति । वयस्य, इतः परं कर्तव्यमुपदिशामि ते ।

इक्षुलतामिव मधुरामिन्दुकलामिव मनोज्ञलावण्याम् ।
एनामनतिक्लिश्यां मधुकर इव भुङ्क्ष्व मालतीमालाम् ॥ ३७ ॥

आस्स्व । साधयामि । (इत्यन्यतोऽवलोक्य ।) इतः पुनरियमिन्दुमती कन्दुकताडनमाचरन्ती परिक्रीडते । (उपसृत्य ।) भद्रे इन्दुमति,

शश्वन्निःश्वसितानिलव्यतिकरव्याधूतबिम्बाधरं
स्वेदाम्भःकणमञ्जरीविलुलितव्याकीर्णचूडालकम् ।
उत्कम्पिस्तनलोलहारलतिकं क्लान्तावलग्नं वपुः
कुर्वन्कन्दुक एष कान्त इव ते धत्ते परां निर्वृतिम् ॥ ३८ ॥

विस्मयमानमुखी किं ब्रवीषि—'कुटिलमेव भाषितं भावस्य' इति । किमत्र चित्रं यदाचार्यस्य गुणो न शिष्यस्य । पश्य ।

पञ्चशरमोहनास्त्रं पङ्कजवनभागधेयपरिणामम् ।
उपदिशति लोचनं ते कामुकलोकस्य किमपि कौटिल्यम् ॥ ३९ ॥

किं च स्पृहयामि खलु दुर्ललितायास्मै कन्दुकाय । यतः ।

निपत्य चरणान्तिके करसरोजसंताडितः
पुनश्च सहसोत्पतन्नधरबिम्बलोभादिव ।
अधीरनयनं त्वया क्षणमिवायमालोकित-
स्तनोति मम कौतुकं पुलकितस्तनाश्लेषवान् ॥ ४० ॥

किं ब्रवीषि—'क्षणमिव मिथः संलप्य गम्यताम्' इति । (सस्मितम् ।) इदानीं खलु सख्युत्सवविलोकनकौतुकिना मया न कालः क्षेप्तव्यः । निवृत्तावेव सर्वं भविष्यति । आस्स्व । (इत्यन्यतः परिक्रम्य ।) कैषा सौधशिरोऽधिरोहिणी जननीनिष्कासितप्रियतममार्गावलोकिनी संलक्ष्यते । यैषा

आभाति मलयमरुता तरलितसंव्यानपल्लवा तरुणी ।
चारुतरनयनशफरा शम्बररिपुविजयवैजयन्तीव ॥ ४१ ॥

(निरूप्य ।) इयं खलु माधवीदुहिता वासन्तिका । (उपसृत्य ।) सखि वासन्तिके, सौधशिखरमधिरूढा किं करोषि। किं ब्रवीषि—'अभिनववसन्तावताररमणीयस्य पश्यामि सौभाग्यमुपवनस्य' इति । (विहस्य ।)

कोमलस्तबकानम्रा चारुपल्लवरागिणी ।
माकन्दमिह वासन्ती संत्यज्य किमु शोभते ॥ ४२ ॥

सलज्जस्मिता किं तूष्णीं भवसि । किं ब्रवीषि—'जानामि ते मत्सुहृदि माकन्दे महाननुरागः' इति । किमेष धनलुब्धया जराग्रहगृहीतया जनन्या निष्कासितः । किं ब्रवीषि—'भवानेव जानाति परेङ्गितम्' इति । सखि वासन्तिके, काकोऽपि रटतु घटीयन्त्रं च प्रवर्तताम् । पश्य ।

आक्रन्दनं कामुककालरात्रिः करोतु तावज्जननी पिशाची ।
तथापि भूयादियमव्यपाया माकन्दसंभोगरसानुभूतिः ॥ ४३ ॥

साधयाम्यहम् । (इति परिक्रम्य दक्षिणतोऽवलोक्य ।) इयं पुनरन्यासङ्गकलुषा कलकण्ठी मेखलादामनि गलितभुजयुगलमधोमुखं धनमित्रमाहन्ति बकुलमालिकया । तदेनमनागसं विधास्यामि । अथवापराधितैव रमणीया । तथा हि ।

आकुञ्चितेन हननं नयनाञ्चलेन
काञ्चीगुणेन दृढसंयमनं च बाह्वोः ।
संताडनं बकुलमालिकया च लब्धं
भाग्यं कियद्विहितवान्धनमित्र एषः ॥ ४४ ॥

(उपसृत्य ।) सखि कलकण्ठि, किमपराद्धं धनमित्रेण । किं ब्रवीषि—'भाव, एष खलु मद्भगिनीमप्रौढयौवनां परभृतिकां मामेतिवादिनीमुपह्वरेऽनुभवन्नस्मत्सख्या मदलेखया दृष्टः' इति । (कर्णौ पिधाय ।) शान्तं पापं शान्तं पापम् । (अपवार्य ।) सखे, किमनुष्ठितं भवता । कि ब्रवीषि—

'तैस्तैर्वचोभिरनुनीय कथंचिदेनां
तालाकृतिस्तनयुगां तरलायतताक्षीम् ।

आलिङ्ग्य गाढमधरं न पिबामि याव-
त्तावच्चकार हत दुर्विधिरन्तरायम् ॥ ४५ ॥

अहो साधुतरे संग्रामे चापस्य ज्याभङ्गः । साधु कृतं भवता । यतः ।

यद्यपि सहोदरीणां मधुकर इव नव्यचूतकलिकानाम् ।
उपभोगमुत्पलदृशां न विमुञ्चति विटजनो गुणग्राही ॥ ४६ ॥

किं ब्रवीषि—'तद्भवानेव मामनागसमाकलितप्रायश्चित्तं च विधत्ताम्' इति । (सस्मितम् ।) सखि कलकण्ठि, कस्य वा गच्छतः स्खलनं न संभवति । अथवा रागचपलेन यत्किंचिदसाधु चेष्टितवान्। तदिदानीमस्य दृढमुपदिशामि ।

वाचालमञ्जीरमनोहरेण पादेन पद्मोदरकोमलेन ।
वक्षःस्थले ताडनमाचरन्त्या वराङ्गि सोऽयं क्रियतामशोकः ॥ ४७ ॥

सखे धनमित्र, इतःपरं त्वमप्येतादृशस्य व्युत्क्रमस्याकरणाय

देवेन चित्तजनुषा मरुता मलयाद्रिजन्मना मधुना ।
शशिना च संप्रति भवाञ्शपथं सख्याः करोतु निःशङ्कम्॥ ४८ ॥

एवं च कृत्वा प्रणिपातविधानेन व्यपनय कोपमस्याः । (सहर्षम् ।) अये, प्रियतमप्रणामेन व्यपगतरोषैव कलकण्ठी । तथाहि ।

परिणेतरि कुर्वति प्रणामं मुखमुन्मुक्तकलङ्कमायताक्ष्याः ।
भजते सुषमामभूतपूर्वामपनीहारमिवाम्बुजं प्रभाते ॥ ४९ ॥

सखे धनमित्र, सखि कलकण्ठि, इदानीमाशास्महे ।

अक्लिष्टयौवनोन्मेषविकस्वरविलासयोः ।
एधतां प्रेम युवयोरिन्दुचन्द्रिकयोरिव ॥ ५० ॥

आस्व । (इत्यन्यतोऽवलोक्य ।)

अर्धोरुकव्यवहितोरुनितम्बसीम्नां
कक्ष्यावबद्धकमनीयतरस्तनीनाम् ।
लावण्यकल्पितपरिष्कृतिरङ्गशाला-
मभ्येति बृन्दमरविन्दविलोचनानाम् ॥ ५१ ॥

(निर्वर्ण्य।) एषा खलु पुरः समायान्ती तरुणजननयनानन्दचन्द्रिका बालचन्द्रिका। एनां हि

बालां तमालनीलां योग्यां तैलाभिषेकललिताङ्गीम्।
तेजनतैलनिषिक्तां शङ्के शृङ्गारवीरखङ्गलताम्॥ ५२॥

तदिदानीं नाट्यशालां प्रविश्य सख्या गणदत्तेन क्रियमाणां नृत्यशिक्षां द्रष्टुमभिलषति मे हृदयम्। (रङ्गशालाप्रवेशं नाटयित्वा।) अये, गणदत्त एवायं मदभिमुखमापतति। (उपसृत्य।) सखे गणदत्त, परिष्वजस्व माम्। (इति नाट्येन परिष्वज्य।) किं ब्रवीषि—'मुहूर्तमात्रं नृत्तशिक्षाविलोकनेन मां कृतार्थयतु भवान्' इति। तथा क्रियताम्। (सहर्षम्।) सखे गणदत्त, अदृष्टपूर्वमस्या बालचन्द्रिकाया नृत्तशिक्षाचातुर्यम्। पश्य।

हृद्यं मण्डलसौष्ठवं सुललितः प्रौढाङ्गहारक्रमो
न्यासस्तालयान्वितश्चरणयोर्मञ्जु क्वणन्नूपुरम्।
तत्तद्भावविशेषसौरभजुषो रम्या दृशोर्विभ्रमाः
साकूतस्मितचारुवक्त्रकमलं श्राव्यं च गीतामृतम्॥ ५३॥
'यद्यस्ति नर्तकीनां वैशद्यं किमपि गीतविद्यायाम्।
तत्किल विदग्धलोकः कथयति कनकस्य सौरभं जातम्॥ ५४॥

किं ब्रवीषि—'भाव, परिग्रहेणैव नः प्रकाशते नृत्तविज्ञानम्' इति। (अपवार्य।) सखि बालचन्द्रिके,

स्वेदाम्बुमौक्तिकपरिष्कृतफालदेशं
मन्दस्मिताङ्कुरितमन्मथबाहुदर्पम्।
मात्राधिकश्वसितमाननपङ्कजं ते
रम्भोरु पातुमभिवाञ्छति मानसं मे॥ ५५॥

किं ब्रवीषि—'किमात्मीयमात्मनो दुर्लभम्' इति। (गणदत्तं प्रति।) सखे, सरसरमणीयोऽयं कालक्षेपः। तथापि सख्युत्सवसंभावनाय गन्तव्यम्। (इत्यन्यतः परिक्रम्य कर्णं दत्वा।) अये, मकरन्दस्य गृहे कर्णमधुनिष्यन्दि हिण्डोलागानमाकर्ण्यते। तथा हि।

संवाहिकाकरसमीरितरत्नडोला-
पर्यन्तबद्धमणिकिङ्किणिकानिनादैः ।
साकं समुल्लसति पङ्कजलोचनानां
संगीतमङ्कुरितपञ्चशरावलेपम् ॥ ९६ ॥

तदुपसृत्य संभावयामि । (इति तथा कृत्वा ।) अये, मन्दारिकामकरन्देन सार्धं वसन्तडोलाविहारोत्सवमनुभवति । इयं हि

दत्तैकबाहुपरिरम्भणमादरेण
वामेतरेण परिणाहवता स्तनेन ।
वक्षःस्थलं प्रियतमस्य निपीडयन्ती
डोलां गता विहृतिमातनुते मृगाक्षी ॥ ९७ ॥

(उपगम्य ।) अये, इयमवतितीर्षति मामवलोक्य मन्दारिका । अयि मन्दारिके, अलमलमतिसाहसेन ।

अवतरणसंभ्रमेण स्तनभरपरिणाहदूरखिन्नस्य ।
मध्यस्य चेद्विभङ्गो भविता भङ्गुरमनङ्गसर्वस्वम् ॥ ९८ ॥

किं ब्रवीषि—'वासन्तिकडोलाविहारोत्सवमनुभवामि' इति । साधु साधु । श्रवणमधुरं ते हि डोलागीतं श्रोतुमिच्छामि । कथं गायसि ।

[१]जअइ महुमासलच्छी जअइ अणङ्गस्स बाहुदप्पसिरी ।
जअइ णिसाअरबिम्बं जअइ अ मलअद्दिसंभवो पवणो ॥ ९९ ॥
[२]जअइ अ मज्झं वि किसं जहणं वि घणं थणं वि उत्तुङ्गम् ।
णअणजुअलं वि दीहं तत्तारिसमङ्गणाण सोभग्गम् ॥ ६० ॥

अहो गीतस्य माधुर्यम् ।

पुंस्कोकिलस्य ललितेन च पञ्चमेन
तन्त्रीरवेण मधुरेण च वल्लकीनाम् ।

---

१. जयति मधुमासलक्ष्मीर्जयत्यनङ्गस्य बाहुदर्पश्रीः ।
जयति निशाकरबिम्बं जयति च मलयाद्रिसंभवः पवनः ॥ [इति च्छाया].

२. जयति च मध्यमपि कृशं जघनमपि घनं स्तनमप्युत्तुङ्गम् ।
नयनयुगलमपि दीर्घं तत्तादृशमङ्गनानां सौभाग्यम् ॥ [इति च्छाया].

आनन्दमेति न तथा स्फुटरागभङ्ग्या
गीत्या तवाद्य करभोरु यथा मनो मे ॥ ६१ ॥

स्वच्छन्दं परिक्रीडस्व । साधयाम्यहम् । (कतिचित्पदानि गत्वा ।) इयं खलु विलासवती विटशेखरेण सह प्रवर्तिताक्षद्यूता विभाव्यते ।

मुखरितवलयं सलीलमक्षान्करकमलेन मुहुर्मुहुः क्षिपन्ती ।
तरुणजनमनांसि मोहयन्ती कलकरभोरु करोषि किं विहारम् ॥ ६२ ॥

किं ब्रवीषि—'भाव, इत उपविश्यतां क्षणमात्रम् । आवयोरक्षक्रीडितस्य साक्षी भवतु भवाञ्जयपराजययोः' इति । अथ कीदृशः पणबन्धः । अथवा वयस्यमेव पृच्छामि । वयस्य, कीदृशो वां पणबन्धः । किं ब्रवीषि—'पराजयवता सुरतेष्वधः शेतव्यम्' इति । साधु भणितम् । किं तु

अयमस्तु पराजयो महीयान्भवतः केवलमुत्सवोपमेयः ।
अवलम्बमिदं नतं मृगाक्ष्या वद वीरायितसंभ्रमे कथं स्यात् ॥ ६३ ॥

तत्सखीपराजयान्तरित एव विहारः क्रियताम् । अन्यतो गच्छामि । (इति परिक्रम्यावलोक्य प्रौढातपस्पर्शमभिनयन् ।) गगनकेशवकौस्तुभमणिर्भगवानम्बरमणिरलंकरोति मध्याह्नम् ।

उपैति शफरावलिः शिशिरशैवलाभ्यन्तरं
क्वथन्मधुमधुव्रतः कमलकाननं मुञ्चति ।
कपोतपरिपाटिकागृहविटङ्कमासेवते
मुखानि सुदृशामपि श्रमजलान्यलंकुर्वते ॥ ६४ ॥

इमामुग्रातपवेलां चन्द्रवतीमन्दिरोद्याने यापयामि । (परिक्रम्य ।) इयं खलु चन्द्रवती चन्द्रकान्तमणिवेदिकामधिवसति । (उपसृत्य ।) सखि चन्द्रवति,

मुग्धे मुखकमलं ते मौक्तिकनासाविभूषणोदारम् ।
अङ्कुरितामृतबिन्दोरिन्दोरिव बिम्बमातनोति मुदम् ॥ ६५ ॥

सखि, क्व गतः सखा मे वसन्तकः । किं ब्रवीषि—'मालतीनिमित्तं माधवसेनचन्द्रसेनयोरन्योन्यकलहमुपशमयितुं गतः' इति । सखि, दारुणतरतरणिकिरणतापो न व्यज्यतेऽस्मिन्भवनोद्याने । तथा हि ।

सीमा तत्तद्विटपिजनुषां संपदामार्तवीनां
योग्या शाला मलयमरुतामालयः शीतलिम्नाम् ।
गङ्गाशाला मधुपसुदृशां केलिसौधं पिकानां
गेहोद्यानं दिशति नितरां नेत्रयोरुत्सवं मे ॥ ६६ ॥

(क्षणमिव स्थित्वा ।) चन्द्रवति, व्यतीतो मध्याह्नसमयः । त्वया च गम्यते खलु सख्युत्सवसंभावनाय । तत्संल्लापयामि । (परिक्रम्यावलोक्य ।) अये, कैषा

अजस्रविटकुट्टनस्थपुटितस्तनाभ्यन्तरा
नखव्रणकिणावलीविषमितं वपुर्बिभ्रती ।
करस्थगितपत्रिकापलितपाण्डुधम्मिल्लका
प्रसह्य जरती पुनस्तरुणमेकमाकर्षति ॥ ६७ ॥

अयि, तथैव सा लौकिकी गाथा वृद्धवारविलासिनी वानरी भवतीति । नूनमियं स्वदुहितरि नवमालिकायामलमल्लकमात्रावशेषमपगतवित्तं माधवदत्तमाकर्षति व्यवहारश्रवणाय करगृहीतपत्रा वेत्रवती । तदहमपि सभ्यानामन्तरे भवामि । (उपसृत्य ।) अयि वेत्रवति, किमिदानीं नारीजनोचितमाचर्यते दारुणं कर्म । किं ब्रवीषि—'अविलासिजनोचितमनेन्न माधवदत्तेनाचर्यते' इति । तत्कथय कोऽयमस्यानाचारः । किं ब्रवीषि—'षण्मासान्मदुहितरं नवमालिकां कलत्रीकृत्य न किंचिद्द्रव्यमर्पयति' इति । (अपवार्य ।) सखे, त्वदर्थमेव पक्षपाताद्वक्ष्यामि । (प्रकाशम् ।) शृणु वेत्रवति, वित्तहीनोऽयं माधवदत्तः । इयं च ते दुहिता षण्मासाननुभुक्ता । किं ब्रवीषि—'नायमवसरः परिहासस्य । पश्य तावदनेन दत्तां कलत्रपत्रिकाम्' इति । (इति नाट्येनादाय वाचयति—) 'स्वस्ति समस्तभुवनमोहने मन्मथनामनि संवत्सरे विजयनगरवासी माधवदत्तो वेत्रवतीदुहितुर्नवमालिकायाः कलत्रपत्रमर्पयति—

षण्मासानियमस्तु मे प्रणयिनी शश्वत्पणानां शतं
दास्यामि प्रतिमासमिन्दुधवलं धौतं दुकूलद्वयम् ।
माल्यं नूतनमन्वहं मृगमदं कर्पूरवीटीशतं
यच्चाभीप्सितमन्यथा पुनरसौ सर्वं च मे दास्यति ॥ ६८ ॥'

इति। भद्र माधवदत्त, न ह्यस्ति लिखित्वा व्यवहारः। तदुच्यतामुत्तरम्। किं ब्रवीषि—

'श्वश्रूपिशाचिकेयं मामतिसंधाय कृत्रिमोपायैः।
आहूय धनिनमन्यं दुहितरमेनां तनोति तद्दयिताम्॥ ६९॥

तदहमियमन्यगामिनीति दत्तान्यंशुकानि प्रत्याहर्तुमुद्यतोऽस्मि' इति (सस्मितम्।) सखे, कादाचित्कमपराधं क्षमस्व। भद्रे वेत्रवति, जामातरमाहूय भवनं प्रति गच्छ। उभौ किं ब्रूथ—'यदादिशत्यलङ्घनीयो भावः' इति भो भोः सभासदो युवानः, सायं सख्युत्सवं संभावयितुं भवद्भिः संनिधातव्यम्। किं ब्रूथ—'तथा करिष्याम' इति। (पदान्तरे स्थित्वा साश्चर्यम्।) अत्र हि

पश्चात्किंचिदिवोपसृत्य मिलितौ तिर्यङ्नमत्कंधरौ
शृङ्गाग्राहितलोहशृङ्खलखलात्कारक्रुधा मेदुरौ।
कूटास्फालनघोरमस्तकयुगव्याघातभीमारवौ
कुर्वाते प्रहतिं विटप्रणिहितौ मेषौ सरोषाविमौ॥ ७०॥

अहो तिरश्चामप्यभिवर्धते परस्परं विरोधः। (कतिचित्पदानि गत्वा दक्षिणेन निरीक्ष्य।) अत्र खलु

व्याधूतपक्षतिचलच्चरणावबद्ध-
शस्त्रक्षतिक्षरितलोहितदिग्धदेहाः।
अन्योन्यतुण्डपरिघट्टनचारुचूडाः
सज्जन्त्यमी समरकर्मणि ताम्रचूडाः॥ ७१॥

किमेतेषां परिमितबलानां समरावलोकनेन। (कतिचित्पदानि गत्वा।) इह हि

आदौ संमृज्य पाणी क्षितितलरजसा गाढसंश्लिष्टकक्षौ
बाहू कल्पान्तमेघस्तनितकटुतरध्वानमास्फोटयन्तौ।
निष्पिष्टोरःकवाटौ गिरिशिखरशिलानिष्ठुरैर्मुष्टिपातैः
कुर्वाते मल्लवर्यौ रणमखिलजगद्भीषणं गर्जयन्तौ॥ ७२॥

(निर्वण्य ।)

उद्धतनियुद्धभाजोर्निर्दयमुष्टिप्रहारनिष्ठुरयोः ।
अतिभीमसेनमनयोः प्राचण्ड्यं प्रेक्ष्य वेपते हृदयम् ॥ ७३

अन्यतो गच्छामि । (कर्णं दत्वा ।) अये, बधिरितहरिदन्तरो महान्कलकलः । नन्वयमेव चन्द्रवतीनिवेदितो मालतीनिमित्तं माधवसेनचन्द्रसेनयोरन्योन्यशस्त्रपातभीषणो महान्कलहः । अत्र हि

अन्योन्यखड्गपरिघट्टनजायमान-
ज्योतिःकणप्रकरतारकितान्तरिक्षम् ।
एतौ युगान्तकुपितान्तकदुर्निरीक्ष्यौ
रक्तोक्षितौ रचयतां रणकर्म वीरौ ॥ ७४ ॥

(क्षणमिव निर्वर्ण्य ।) अहो नृशंसमत्याहितं निपतितम् । यतः ।

प्रलयसमयकुप्यत्कालरुद्राट्टहासं
निजगलविवरोद्यत्क्ष्वेलनां निर्दधानः ।
कलयति रिपुकण्ठच्छेदपर्यन्तमग्रे
करधृतकरवालः साहसं चन्द्रसेनः ॥ ७५ ॥

इदानीं निःसपत्नं मालतीसुरतसुखमनुभवतु चन्द्रसेनः । अहं पुनरीदृशमत्याहितमवलोकयितुं न शक्नोमि । (अन्यतो गत्वा ।) एषा खलु चन्द्रसेनायाः शम्भली चतुरिका नाम ।

दशनक्षतदन्तुराधरोष्ठी नखनिर्भिण्णकपोलबाहुमूला ।
उपयाति विटान्विलोभयन्ती कबरीकल्पितभुक्तमुक्तमाल्या ॥ ७६ ॥

(उपसृत्य ।) हञ्जे चतुरिके, क्व प्रस्थितं भवत्या । किं ब्रवीषि—'भावं द्रष्टुमेव' इति । विदग्धः खलु वेशवाटजनोऽन्यत्कार्यमन्यत्रारोपयितुम् । किं ब्रवीषि—

'अभ्यस्य करणशिक्षां नैकमुखीं मन्मुखेन खलु बाल्ये ।
प्रौढः करोति हि भवानन्यत्रान्यत्र मधुप इव सक्तिम् ॥ ७७ ॥

अयं खलु भवान्नद्यां तीर्णायां नाविकमवमति(?)' इति । (सस्मितम् ।)

वल्गद्घनस्तनभराकुलितावलग्नं
व्यालोलकुण्डलकलापविकीर्णमाल्यम् ।
विस्रब्धचाटुशतजल्पमनल्परागं
नो विस्मरामि दयिते पुरुषायितं ते ॥ ७८ ॥

किं ब्रवीषि—'क्व गम्यते भावेन' इति । सख्युत्सवाय गच्छामि । (इत्यन्यतोऽवलोक्य ।) मत्तकोकिलातनया मञ्जुभाषिणी

आलिङ्ग्य स्तनमण्डलाहितमुखीमाकल्पितां वल्लकीं
तन्त्रीं तारनिनादिनीं नखमुखैरास्फालयन्ती मुहुः ।
मग्नं मन्मथरागसागरजले यूनां मनः कुर्वती
तत्तद्रागविशेषसौरभवतीं गाथामियं गायति ॥ ७९ ॥

(क्षणमिव स्थित्वा ।) हृदयहारिणा गीतेन विवशीकृतोऽस्मि ।

मुकुलयति पुलकमङ्गे मुद्रयति मनांसि मोहमातनुते ।
किंवा प्रथयति सौख्यं किं किं न करोति गीतमबलानाम् ॥ ८० ॥

(ऊर्ध्वमवलोक्य ।) अये, परिणतप्रायो दिवसः ।

क्रीडादिग्गजहस्तवेगविधृतव्योमापगाम्भःपत-
च्छोणाम्भोजविडम्बिपश्चिमदिशस्ताटङ्कचक्रोपमम् ।
एतत्पक्वदिनद्रुमच्युतफलच्छायं शनैरम्बरा-
द्बन्धूकच्छविबिम्बमम्बरमणेरस्ताद्रिमालम्बते ॥ ८१ ॥

यद्यपि हृदयहारि संगीतम्, तथापि सख्युत्सवसमयः समतिक्रामति । (इति परिक्रम्य ।) इदं खलु प्रियसख्याः काममञ्जर्याः प्रारब्धमहोत्सवं सदनमालक्ष्यते । तत्सखीं संभावयामि । (अन्तःप्रवेशं नाटयित्वा साश्चर्यम् ।) इदं किलाविरताहन्यमानमङ्गलमृदङ्गनिनदजनितकर्णपारणम्, आरणन्मणिनूपुरवाचालचरणशम्भलीजनमोदमानकमलमुकुलकह्लारमालिकापरिमलवाहिमन्दपवनम्, अभ्यन्तरमन्दिरोपविष्टसैरन्ध्रिकावशसंपद्यमानप्रसाधनोपकरणम्, अतित्वरितचेटीसमारोप्यमाणदीपिकाचक्रवालनिह्नुतसायंतनसमयसन्तमसबन्धम्, अधिराज्यदेवताभिरिवानङ्गस्य मोहनविद्याभिरिव चक्षुषामनवद्यसर्वाङ्गीभिरभिनववसन्तनवकुसुमाङ्गरागधारिणीभिरङ्गनाभिरलंकृतम्,

अतिविदग्धविटविदूषकपीठमर्दकविलासिसंकुलमुत्सवायतनम् । (निर्वर्ण्य ।) एषा खलु काममञ्जरी संसारतरुमञ्जरीदुहितरं नितरामलंकृत्य भद्रपीठमारोपयति । प्रकृतिरमणीयेयमनङ्गमञ्जरी प्रथमार्तवमहोत्सवेन भासते नितराम् । तथा हि ।

कामं स्वभावललिता मधुपकुलामोददायिनी लतिका ।
नयनोत्सवं विधत्ते लब्ध्वा प्रथमर्तुसंभवां लक्ष्मीम् ॥ ८२ ॥

एषा मङ्गलमज्जनेन विशदा पट्टांशुकोद्भासिनी
कस्तूरीतिलकातिरम्यवदना पुष्पाभिरामालका ।
काश्मीराकलिताङ्गरागरुचिरा कह्लारमालावती
मूर्ता शम्बरवैरिणो विजयते साम्राज्यलक्ष्मीरिव ॥ ८३ ॥

(सर्वतो दत्तदृष्टिः ।) अहो सकलोऽपि संमिलितः समयः । (परिक्रम्य ।) अये, सखी काममञ्जरीयमभिमुखमापतति निर्भरानन्दा । तदेनामुपसर्पामि । (तथा कृत्वा ।) सखि काममञ्जरि, संसारतरुमञ्जरीदुहितुरनङ्गमञ्जर्याः प्रथमार्तवमहोत्सवेन वर्धसे । किं ब्रवीषि—'भाव, समागमादुत्सवः संपन्नः' इति । सखि, पश्य । असाधारणः खल्वावयोरुत्सवः ।

एतस्यामुदितायामिन्दुकलायामिवातिललिताङ्ग्याम् ।
अनुभवतु बन्धुलोको मकरालय इव महान्तमानन्दम् ॥ ८४ ॥

(प्राचीमवलोक्य ।) अये, उदितभूयिष्ठ एव भगवानोषधीरमणः । तथा हि ।

त्रिभुवनविजयोद्यतस्य कर्तुं धवलमिवातपवारणं स्मरस्य ।
उदयशिखरिकन्दरान्तरालादुडुपतिमण्डलमेतदुज्जिहीते ॥ ८५ ॥

सखि काममञ्जरि, लब्धसकलमनोरथानां निशि किमतःपरेणानन्देन । तथापीदमस्तु भरतवाक्यम् ।

वेधोविष्णुमहेश्वरप्रभृतिभिः संभाविता निर्जरै-
राज्ञा शम्बरशासनस्य महती लोकत्रये दीव्यतु ।
सत्त्वन्येषु रसेषु चास्तु विजयी शृङ्गार एको रसः
संनाहि स्तनमण्डलं मृगदृशां तारुण्यमुज्जृम्भताम् ॥ ८६ ॥

**समाप्तोऽयं ग्रन्थः ।**

KÂVYAMÂLÂ. 59.



THE

# AMRITODAYA

OF

GOKULANÂTHA

EDITED BY

MAHAMAHOPADHYAYA PAṆḌIT S'IVADATTA

Head Pandit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1897.

*Price 8 Annas.*

काव्यमाला. ५९.

श्रीमद्गोकुलनाथोपाध्यायकृतम्

# अमृतोदयम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबो-
पाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा
च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९७



मूल्यं ८ आणकाः ।

# भूमिका ।

तार्किकशिरोमणिरुपाध्यायापरनामको महामहोपाध्यायपदभूषितः श्रीमद्गोकुलनाथशर्मा फणदहनामके मैथिलब्राह्मणवंशे प्रसिद्धतमे मङ्गरौनीत्याख्यग्रामे पञ्चदशाधिकषोडशशततमशकाब्देऽसीमविद्यानिधिमहामहोपाध्यायश्रीमत्पीताम्बरशर्मण उमादेव्यालम्भि । स चायं विद्वदग्रणीः श्रीनगरे चन्द्रशेखरसुन्दरीचरणारविन्दमकरन्देन्दिराविलासमन्दिराणामरिवारिधिमथनमन्दराणां फत्तेसाहाभिधनृपवराणां राजधान्यां गुरुरिव निवसन्वादिवृन्दैरसमाधेयान्बहुविधान्ग्रन्थान्कृतवान्दर्शने स्मृतौ साहित्ये च, यानद्यापि मैथिलाः सगौरवं पठन्ति पाठयन्ति च । लिखितं च स्वकृतैकावलीग्रन्थावतारिकायाम्—

'वृत्तसागररत्नानां सारमुद्धृत्य निर्मिता ।
एकावली फतेसाह तव कण्ठे लुठत्वसौ ॥
विद्यानिधिक्षीरधिपारिजातमुमासुतं गोकुलनाथधीरम् ।
एकावलीसंघटनानिवेशे न्ययुङ्क्त फत्तेपतिसाहभूपः ॥' इति ।

अस्य च कादम्बरी नाम्न्येका दुहितासीत् । सा च दैववशाद्बाल्य एव जाह्नवीजले निमग्ना सती विगतासुर्बभूव । तद्वात्सल्येन तन्नाम्ना कतिपयग्रन्था अपि निर्मिताः । तथोक्तं कुण्डकादम्बरीभूमिकायाम्—

'आराम्बाव प्रकृतिकृपणा बाधिभिर्बाध्यमाने-
र्विक्रोशारः करुणवचनं पुत्रि कादम्बरीति ।
कोऽयं लोकः क इव विषयः किं पुरं को निवासो
यस्मिन्नस्मद्विमुखहृदया त्वं निलीय स्थितासि ॥
कुण्डकादम्बरीनामा ग्रन्थोऽयं तव कीर्तये ।
मया गोकुलनाथेन सोपपत्तिर्निबध्यते ॥' इति ।

सोऽयं देवकल्पो नवतिवर्षवयस्को भूत्वा काश्यां मुक्तिमवाप । अस्य च समकालीनो मिथिलाधिपतिरिदानींतनराजकीयखण्डरत्नाकुलावतंसमहाराजश्रीराघवसिंहाभिधो देवदेव इति ध्येयम् ।

अस्य च महात्मनो ग्रन्थाः—(१) चक्ररश्मिः–तत्त्वचिन्तामणिटीका, (२) पदवाक्यरत्नाकरः, (३) दिक्कालनिरूपणम्, । (४) मिथ्यात्वनिर्वचनम्, (५) कुसुमाञ्जलिटिप्पणम्, (६) काव्यप्रकाशटीका, (७) कुण्डकादम्बरी, (८) द्वैतनिर्णयटीका कादम्बरीनाम्नी, (९) कादम्बरीप्रश्नोत्तराणि, (१०) एकावली, (११) कादम्बरीकीर्तिश्लोकाः, (१२) शिवस्तुतिः, (१३) अमृतोदयनाटकं च ।

अस्य चामृतोदयनाटकस्यैकमतिजीर्णमतिशुद्धं पुस्तकं शाब्दिकप्रवरोपाध्यायोपनामकमहामहोपाध्यायश्रीमद्धर्षनाथशर्मणः सकाशादुपलभ्य नाटकस्य चातिरमणीयतामवधार्य तन्मुद्रणोद्विमाचित्तोऽहं तल्लेखने प्रावर्तिषि । भाग्यवशादेकमपरमपि पुस्तकमग्निनार्धदग्धं प्राप्तम् । तत्साहाय्येन चैकमादर्शपुस्तकं संपाद्य मित्रवरश्रीमद्गोविन्ददासद्वारा संस्कृतकाव्यरत्नोद्धरणैकचित्तानां काव्यमालासंपादकानां सकाशं प्रापय्य स्वस्थचित्तोऽभूवम् । अत्रत्यानि च प्रायशः सर्वाण्येव टिप्पणानि प्राचीनपुस्तकस्थान्येव ग्रन्थकृता प्रदत्तानीव प्रतिभान्ति । क्वचिच्च स्थले आधुनिकजनाल्पबुद्धिविषमपदानां टिप्पणं तु मयैव प्रदर्शितानीति तस्य समीचीनत्वेऽसमीचीनत्वे वा सहृदयाः सुधिय एव प्रमाणम् ।

ललितपदनिबद्धं भावगाम्भीर्यगूढं
चरमचरपदार्थान्वर्णयन्तं मनोज्ञम् ।
बहुविधपरतत्त्वं नाट्यकाव्योपबद्धं
कठिनमपि सुबोधं सज्जना वीक्षयन्तु ॥

इत्याशास्ते

मिथिलेशसरस्वती-सदने-दरभङ्गा.

एम्. ए. पदविभूषित उपाध्यायोपनामको
**गङ्गानाथशर्मा ।**

# काव्यमाला ।

## श्रीमद्गोकुलनाथोपाध्यायकृतम्

## अमृतोदयम् ।

प्रथमोऽङ्कः ।

ब्रह्माण्डबिन्दुगणवर्षणवारिवाह
वज्रं च मुञ्चसि निषिञ्चसि जीवनं च ।
सृष्टं त्वया स्वपरदृष्टिविलोपकष्टं
निर्मार्ष्टुमर्हति तवैव विवेकविद्युत् ॥ १ ॥

अपि च ।

असकृदुपरमद्भिरङ्कभेदै-
र्नटगणनिष्क्रमणाद्विविक्तरङ्गः ।

[अत्र प्रस्तावनया साधनचतुष्टयसंपन्नोऽधिकारी सूच्यते । साधनानि तु—नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, दमादिसंपत्, मुमुक्षा चेति चत्वारि । तत्र ब्रह्म नित्यमन्यदनित्यमित्यौपनिषदाः । फलेषु मोक्षो नित्यः स्वर्गाद्यनित्यमित्यान्वीक्षकाः । तत्र वेदान्तपक्षे नित्यमानन्दमयमात्मानमुद्दिश्य, न्यायमते तु निर्वाणनामानमपवर्गमुद्दिश्येदं वचनमात्मौपाधिकमितरेषां प्रियत्वमात्मैकतत्त्वतः प्रिय इति ब्रह्मविद्या । अपवर्ग एव न विशेषो भवितुमर्हति, सुखादि तु दुःखान्तर्भूतमित्यान्वीक्षकाः.]

१. जलम्, जीवानि च. २. अत्र संसारो नाटकत्वेनाध्यवसीयते । तत्र सृष्टिव्यापारोऽङ्क इति, प्रलयं तदुपरम इति, जीवा नटा इति, जगद्रङ्गस्थलमिति निगीर्याध्यवसीयते । तत्र प्रलयरूपाङ्कोपरमे जीवनटानां वृत्तिनिरोधो निष्क्रम इति । अन्यत्र नाटके इतिवृत्तसूचनमामुखमादौ, ततो बीजोपक्षेपकार्यारम्भाभ्यां मुखसंधिर्विधेयत इति स्थितिः । संसारनाटके तु समाधिपरिपाके भवसार्वज्ञस्वरूपा भूतेति प्रस्तावनान्तेन च परिचीयते बीजोपक्षेपसमयः संसारस्यानादित्वादिति व्यतिरेकः.

अविदितसुखसंधिरामुखान्तो
निगमकवेस्तव नाटकप्रबन्धः ॥ २ ॥

किंच।

न दहति [1]संगरान्वयान्न पादा-
त्प्रभवति नाप्यलिकादुदेति चक्षुः।
न च किमपि शृणोति नेत्रवर्गो
मम कथमस्तु तव स्तवेऽधिकारः ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—निर्वर्तित एष [2]प्रत्याहरणादिभिरङ्गैरुपबृंहितः पूर्वरङ्गः। सांप्रतमवसरो गुरोर्गोकुलनाथस्य गिरां प्रबन्धमभिनेतुम्। उपनतश्चासौ प्रशान्तपरितापोपप्लवः शिशिरमासः। इह हि

नोद्वेजयन्ति जनतामभिनयकर्मणि न खेदयन्ति नटान्।
आयामिनः [3]सुखीमा व्यायामसहा निशायामाः ॥ ४ ॥

अतिमात्रमत्र च स्वदते [4]मधुरातपस्तपस्तपस्यदिवसः। यत्र खलु

निभृतनिलीनां नलिनीं विचिन्वतः पयसि रुचिपतेः पतितः।
चिरविरहतनुतरेभ्यः करेभ्य इव तीव्रतावलयः ॥ ५ ॥

(सनिर्वेदम्। [5]आकाशे।) अरे निसर्गसुन्दर, निरवसानसौभग, श्लाघनीयोऽसि

प्रसरति विषयेषु येषु रागः
परिणमते विरतेषु तेषु शोकः।
त्वयि रुचिरुचिता नितान्तकान्ते
शुचिपरिपाकशुचामगोचरोऽसि ॥ ६ ॥

---

१. अत्र नाहं कपिलो न गोतमो न विरूपाक्षो नापि चक्षुःश्रवसांपतिः शेष इ[ति] पर्यायान्तरेणाभिधीयत इति. २. प्रत्याहारोऽवतारो दिक्पालपूजेत्यादिपूर्वरङ्ग[स्य] द्वाविंशतिरङ्गानि नाट्यविद्यायां प्रसिद्धानि। तानि च नटस्यैव कर्माणि। रङ्गद्वारमा[रभ्य] तु क]विव्यापारः।सूचनापक्षे तु प्रत्याहरणं प्रायणम्।अवतरणं भवः। तेन प्रेत्यभावप[र]म्परैव पूर्वरङ्ग इत्यध्यवसीयते। तस्य निर्वर्तनं चरमशरीरपरिग्रहात्. ३. शीतला ४. माघफाल्गुनदिनम्. ५. अप्रविष्टपात्रोद्देश्यकवचनमाकाशभाषितम्.

(परिक्रम्य ।) [1]अयमहं भोः क्षेत्रज्ञनगरवासी मूलमस्मि सर्वस्यारम्भस्य रागो नाम कामरूपो नटः । तस्य ममामृतोदयं नाम नाटकमभिनिनीषतः पूर्वपरिगृहीतभोगभूमिकापरिहारेण विविक्तवेषपरिग्रहमुरीकुर्वन्तु [2]भावमिश्राः । (आकाशे ।) कि[3]मात्थ—'अरे लम्पट पुराणनट, किमद्यापि नटसि । पश्य तावदेकधात्रिधैकविंशतिधाशतसहस्रधाव्यूहितविग्रहेण क्लेशगणेन प्रथममथपरमवैरिणा विरागेणाक्रान्तास्तव विषयाः' इति । ([4]सभयमाकाशे ।) हन्त । मम [5]कांदिशीकस्य कं देशमुपदिशसि । न खलु ममेदानीं कुटुम्बमवलम्बनाय । तथा हि ।

न खलु विघटिताः पुनर्घटन्ते<br>
न च घटिताः स्थिरसंगतं श्रयन्ते ।<br>
पिपतिषु सवशं रुजन्ति वश्या-<br>
स्तरुतटमाप इवा[6]पगागणस्य ॥ ७ ॥

अपि च । भीषयति विद्रुतमनुद्रवति मामेष [7]कूटकर्मन्दीकालः । पश्य ।

प्रतिगृहमतिथिर्गृहीतदण्डो<br>
धृतजगदण्डकमण्डलुप्रकाण्डः ।

१. अयमहमित्यारभ्य शोभत इत्यन्तप्रबन्धेन अन्यत्र सर्वत्र विरागो मोक्षे राग इति मुमुक्षारूपसाधनं प्रस्तूयते । तत्र नाटकपक्षे सर्वस्य वाग्बुद्धिशरीरारम्भस्य प्रवृत्तिस्वरूपस्य रागो मूलम् । स एव मिथुनधर्मगोचरः काम इत्युच्यते । नाटके भोगभूमिवनितादिवेषः । विविक्तवेषेत्यादिभूमिकासूचनाया एकविंशतिदुःखान्तर्भूतसुखादिविषयता, विविक्तवेषो दुःखानुषङ्गिवस्तुगोचरता. २. भावा विद्वांसः, मिश्रा अधिकरणविदः. ३. किमात्थेत्यादिना वैराग्यं प्रपञ्चितम् । तत्र दुःखत्वजात्यभिप्रायेणैकधेति । आध्यात्मिकाधिभौतिकाधिदैविकभेदमादाय त्रिधेति । घ्राणरसनचक्षुस्त्वक्श्रोत्राणि पञ्च, गन्धरसरूपस्पर्शशब्दास्तद्विषयाः पञ्च, मन एकं तद्विषयो द्वेषेच्छाप्रयत्नस्वरूप एक एव, षड्विधा प्रात्यक्षिकी बुद्धिः, शरीरं सुखं दुःखं चेति एकविंशतिधा दुःखं भाष्यसिद्धम् । शतसहस्रधेत्यान्तर्गणिकभेदेन. ४. सभयमित्यादि तु शरीरसुखे यदि विरागेणाक्रान्ते तदा शरीरसंबन्धिषु कुटुम्बादिषु सुतरां विराग इति प्रपञ्चनाय. ५. 'कांदिशीको भयद्रुतः' इत्यमरः. ६. आपगा नदी. ७. कपटसंन्यासी. ८. यद्यपि नैयायिकानां भुवनभरणपात्रेभ्यः कालदिग्भगवद्भ्यो भिन्नो जीवादिरपि न कालादनीयस्तथापि चैतन्यविशिष्टस्य सत्त्वस्यात्यन्ताभाव एव कालभक्ष्यत्वं भगवद्भिन्नस्य सर्वस्यापीति.

भुवनभरणपात्रमात्रशेष
मसृणमिदं जगदत्ति कालभिक्षुः ॥ ८ ॥

(प्रविश्य ।)

**नटः**—भाव, क्षेत्रज्ञनगरचरमसीमनि [1]क्षणानुभवरमणीयो विविक्तविशदोऽयमाश्रमः । शममाश्रित्येह बधान धृतिमुपजापदुःस्थिते देवे महामोहे । विरागाक्रान्तेषु भोगविषयेषु निभृतनिवास एव भावस्य शोभते ।

**सूत्रधारः**—आः, किमबद्धं प्रलपसि ।

नाद्यापि [2]श्रुतिगोचरः स विषयो यस्मिन्नमुष्य प्रभो-
रादेशः प्रतिहन्यते न स जनो यस्तस्य नास्ते वशे ।
आसंसारमखण्डयौवनतनो[3]रक्षीणपक्षस्य च
क्षेत्रज्ञक्षितिनायकस्य रिपवः कुत्रोपजापः कुतः ॥ ९ ॥

**नटः**—भाव, एवमान्वीक्षकाः कथयन्ति—

वि[4]प्राकारे प्रविश्यात्र क्षेत्रज्ञनगरे श्रुतिः ।
सहान्वयं महामोहमुन्मूलयितुमिच्छति ॥ १० ॥

**सूत्रधारः**—मार्ष, किमुन्मूलितेन महामोहेन प्रयोजनमुपपद्यते श्रुतेः ।

**नटः**—भाव, नूनमद्वैतसाम्राज्ये श्रुतिरपवर्गमभिषेक्तुमीहते ।

**सूत्रधारः**—[5]युज्यते साम्राज्यमपवर्गस्य यदि प्रजा रज्यन्ति । न च रोचते करणचक्रविप्रियः पुरुषायापवर्गः ।

**नटः**—भाव, दमेन निगृहीतानि करणचक्राणि । पुरुषोऽपि श्रुतिप्र-

---

१. क्षेत्रज्ञस्य आत्मनश्चरमसीमा सैव यत आरभ्य शरीरपरिग्रहः वर्तमानो मुक्तिरचिरमनुभूयते इति निबन्धकारमतमाश्रित्य क्षणानुभवरमणीयत्वमुक्तम् । विविक्तो विशेषगुणैरसंभिन्नः । विशदः शुचिः. २. श्रुतिगोचरः कर्णगोचरः वेदजन्यप्रमितिगोचरो वा । तेन भगवद्गोचरं श्रवणमेवाधुना निष्पन्नम्, दूरे साक्षात्कार इति. ३. अक्षीणपक्षस्य अखण्डितरागद्वेषमोहत्रैराश्यस्य. ४. परिगृहीतब्राह्मणशरीरे, विगतप्राकारे वा. ५. युज्यत इत्यादिना संबलसंपदमित्यन्तेन शमदमसंपत्तिप्रपञ्चनम् । करणचक्रविप्रियत्वमपवर्गस्य बाह्यानामान्तराणां चेन्द्रियाणां चापलात् प्रतिषिद्धसेवनात् नित्यवर्जनाद्वा भवेत् । तत्र दमेन बाह्याणि शमेनान्तरमिन्द्रियं कर्मणा च पापं निगृहीतमिति स्वदत एवापवर्ग इति समुदायार्थः.

भया प्रमित्या संगतस्तया विहितमनुतिष्ठति । प्रतिषिद्धं च वर्जयतीत्यर्जयत्यपवर्गमार्गसंबलसंपदम् ।

**सूत्रधारः**—मार्ष, प्रभवति विधेयेपु सह दुहित्रा प्रमित्या भगवती श्रुतिः । (सबहुमानमाकाशे ।) भगवति भुवनभावुकभाविनि विश्वनिश्रेयसशरण्ये श्रेयसि श्रुते,

जननि तव पुमर्थो एव पादाः प्रथन्ते
[1]प्रथमचरणबद्धो निर्भरं रौमि वत्सः ।
[2]चरमचरणमूलप्रस्नुतां स्तन्यधारा-
ममरगवि कदा ते मुक्तबन्धः पिबेयम् ॥ ११ ॥

(नेप[3]थ्ये ।)

हन्त भोः सुगतशासनाध्वनीनाः, पर्यवष्टभ्यतामिदं क्षेत्रज्ञनगरम् । अपहरन्तु परेषां विज्ञानमपि [4]मध्यममार्गेण संचरमाणाः । विलुम्पन्तु बहिर्विषयमाकारपराक्रमकुशलाः परपरिभवाय यो[5]गमाचरन्तः । परोक्षमर्थतिमिरमुष्णत्विष इव मुष्णन्तु लो[6]कायतव्यवहारिणः । स्वार्थदर्शनमपि परेषामपलपन्तु सू[7]त्रान्तसंस्कृतबुद्धयः । विकल्पगोचरादर्थमपनयन्तु स्वलक्षणममी वि[8]भाषाभाषणप्रवीणाः । निखिलमपि प्रपञ्चमात्मसात्कुर्वन्तु प[9]ञ्चस्कन्धाः ।

१. कामः. २. मोक्षः. ३. ऐहिकामुष्मिकभोगेषु विरागोऽधुना प्रपञ्चनीयः । स च विरागो द्वेषो नामगुणौ, न तु रागाभावस्तस्य शास्त्राधिकरणदशायामप्रवृत्तेः । भोगेषु द्वेषस्तु दुरन्तत्वज्ञानाधीनो दुरन्तत्वं त्वप्रमाणदर्शनसिद्धपुरुषार्थाभाससंबन्धात् । अतः पाखण्डदर्शनविवेचनान्तरमेतन्मतानुबन्धमैहिकादिभोगानामुपपादयति—नेपथ्य इत्यादिना. ४. माध्यमिकास्तावन्न केवलमर्थान् किंतु विज्ञानमपि शून्यं मन्यन्ते. ५. योगाचारास्तु विज्ञानमेव परमार्थसत् ज्ञानभिन्नमसदिति मन्यन्ते । स्वीकुर्वन्ति च ज्ञानस्यैव नीलपीताद्याकारम्. ६. लोकायतशास्त्रविदश्चार्वाकाः नाप्रत्यक्षं वस्तु विद्यत इति वदन्ति. ७. सौत्रान्तिका नाम सौगतास्तु ज्ञानाकारानुमेयो विषयो नालोचनस्यापि गोचरः, किंतु ज्ञानाकारनिष्पादक इति मन्यन्ते. ८. स्वलक्षणं नाम वस्तु आलोचनप्रत्यक्षगोचरो न तु विकल्पकस्येति वैभाषिकाः. ९. संज्ञास्कन्धो रूपस्कन्धो ज्ञानस्कन्धो वेदनास्कन्धः संस्कारस्कन्धश्चेति पञ्चस्कन्धाः क्षणिकपरमाणुपुञ्जात्मकं [शरीरं] सदिति सर्वसौगतमतम्, तथा च शब्दो न प्रमाणमपि तु संभावनामात्रोत्थापक इत्यपि । नाटकपक्षे तु सर्वेषामेतेषां विविधसेनापतिपरत्वं स्पष्टमेव.

क्षणमात्रमतिमात्रसूक्ष्मः प्राणितु भवतां दृष्टिमार्गेऽपवर्गः। संभावनावशे पततु श्रुतेर्दुहिता प्रमितिर्नाम।

**नटः**—भाव, एष महामोहसाधनाग्रणीः सुगतागमः श्रुतिदुहितरं प्रमितिमपहर्तुमारभते। तदपसरावस्तावत्।

**सूत्रधारः**—मार्ष, स्वपरविवेकविकलस्य पूर्वापरभूविभागविबोधविधुरस्य मे का संसरणचर्चा। (अनुध्याय। सहर्षम्। आकाशे।) भगवन् अद्वितीयवैभव पुरुषोत्तम, कुतो मम प्रतिभटाः। कुतस्तरां त्रासः। तथा हि।

रिपुरपकुरुते निहन्ति हन्ता
भवति भयं च पृथग्दृशो द्वितीयात्।
त्वयि भुवनमये निविष्टबुद्धे-
र्न मम रिपुर्न भयं न च द्वितीयः॥ १२॥

अपि च।

नित्ये विभौ मयि निसर्गशुचौ शरीर-
तादात्म्यबन्धमवरोपितवांस्त्वमासीः।
द्वैतोज्झिते त्वयि परापरवस्त्वभेद-
मारोप्य निर्वृतिमुपैमि चिरादिदानीम्॥ १३॥

**नटः**—भाव, क एष पुरुषोत्तमो यमाक्रोशसि।

**सूत्रधारः**—नन्वेष वाङ्मनसयोरगोचरोऽपि

ब्रह्माण्डबिन्दुतिलजालवहो विहीनः
सर्वेन्द्रियैर्विकलकर्मशरीरबन्धः।
हृद्वेश्म मे प्रविशति श्रुतिदेशितेन
मार्गेण कोऽपि जगतीप्रपितामहोऽसौ॥ १४॥

**नटः**— ननु भाव, वचसामगोचरं वस्तु वचसैव श्लाघमानो व्याहतिमपि न चेतयसे।

**सूत्रधारः**—अयमसाविह व्याहतिपरिहारः।

---

१. प्रसङ्गादद्वैतभावनैव भयसामान्यविनाशाय नत्वपसरणादिरिति सूचयन्नेव पताकास्थानकेन भाविनं ब्रह्माद्वैतबोधं सूचयति—परापरेत्यादि. २. 'योगः' इति पाठः.

[1]साकाङ्क्षास्त्वरास्तं प्रियमपि मनसा साकमप्राप्यमार्गा-
द्वाचो बाढं निवृत्ताः कुलगुरुषु गिरा वारयत्स्वागमेषु ।
किंतु स्वेनैव कामादभिसरति परः पूरुषो वाचमेनां
[2]सन्नासन्नासुसीमस्वपि निगमगणस्तं हि न द्रष्टुमीष्टे ॥ १५ ॥

(नेपथ्ये ।)

अरे वाचाट नटबटो, हताशया श्रुत्या विप्रलब्धः किमलीकमालपसि ।

तथा हि सिद्धः पुरुषोऽपि [3]पञ्च-
स्कन्धान्विना नात्र शरीरकोशे ।
मानद्वयागोचरवस्तु नस्तु
सिद्धिर्विदूरे पुरुषोत्तमस्य ॥ १६ ॥

**सूत्रधारः**—अये, कुपित इव सुगतागमः शब्दायते । [4]तदपहाय महामोहपरिवारपाखण्डगणाधिष्ठानदुर्विपाकामैहिकभोगभूमिमाश्रयाम्यद्वैत-निर्वृत्तां निर्वाणकाष्ठाम् ।

**नटः**—[5]भाव, रागकर्मप्रसादितदेवतोपनीताः पौरुषातिशयसाधिता वा क्लेशलेशास्पृष्टाः परत्र भोगभूमय एव सेव्यन्ताम्, किमसत्य शून्याश्रयणेन ।

---

१. आकाङ्क्षातात्पर्यवतीनां वाचां भगवन्तमप्राप्य निवृत्तौ बीजमागमैर्वारणमेव । तथा चागमः—'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । वस्तुतोऽभिमते साक्षात्कारात्मके ब्रह्मबोधे शब्दस्यासामर्थ्यमात्रं श्रुत्या बोध्यते । भगवदनुग्रहवशात् भगवद्विषयिण्यो लौकिकवाचोऽपि संभवन्ति, किं पुनरलौकिकगिर इति हृदयम्. २. यथा तमभिसरन्तीं वाचमागमो वारयति, तथा वागभिसारिणं पुरुषोत्तममागमो वारयितुं न प्रभवति । पुरुषोत्तमदर्शने निगमानामसामर्थ्यादिति काव्यरीत्या परिहारः. ३. रूपरसगन्धस्पर्शशब्दाः रूपस्कन्धः, निर्विकल्पकं विज्ञानस्कन्धः, सविकल्पकं ज्ञानं संज्ञास्कन्धः, समनन्तरप्रत्ययः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः इति पञ्चस्कन्धाः । स एव आत्मेति सौगताः. ४. तदेवं लौकिकभोगा एवाखण्डैः पुरुषार्था इत्युच्यन्ते, ते च बन्धजनकतया हेयाः, इति तत्र विरागमुपपादयति—तदपहायेत्यादि. ५. ननु वैदिकपुरुषार्थत्वादानुश्रविको भोगो न हेय इत्याक्षिपति । पारलौकिकफले जननीये देवताप्रीतिरेव यज्ञव्यापार इति वेदान्तविदादयः । पुरुषनिष्ठोऽतिशयो धर्मस्वरूपं तथेति मीमांसकादयः । शून्यस्य सुखदुःखसंभेदविरहितस्य निर्वाणस्याश्रयणं रागस्य न युज्यते तुल्यामव्ययत्वात् किंतु दुःखासंभिन्नस्य सुखमयस्य स्वर्गस्येत्याक्षेपार्थः.

**सूत्रधारः**—मार्ष, विमर्षविरसो विषयतर्षापकर्षाय न क्षमते दैवतप्रसादोपनतो भोगः। तथा हि।

याज्यै[1]राज्यमुपाकृतं शिखिमुखेनास्वाद्य तन्निष्क्रयं
क्षीराब्धेर्न[2]वनीतबिन्दुममरा यच्छन्ति कालान्तरे।
तं पीत्वा [3]जननीपयोधरघटात्पुत्रस्य वा तर्जनी-
मूलप्रस्रवणात्पयांसि तृषितः पातुं जनो धावति ॥ १७ ॥

अपि च।

मुहुर्मिहिरतप्तेन सोमपात्रेण संभृतम्।
न लिप्से राहुमार्जारपीतोच्छिष्टं सुधादधि ॥ १८ ॥

**नटः**—[4]तथाप्यपरिचितचरी निर्वाणकाष्ठेति कथमेनामाश्रयितुमीहसे।

**सूत्रधारः**—[5]श्रुतिवर्णितमस्या रामणीयकं क्षणमनुभूय पारमाप्स्यामि दुरन्तसमुद्रस्य।

(नेपथ्ये।)

अरे भरतवंशदुर्भग, का नाम श्रुतिः। अयमहमस्या हताशाया हरामि दुष्टदारिकां प्रमितिम्।

**सूत्रधारः**—(ससंभ्रमम्।) हन्त, हृता श्रुतेः प्रमितिः सुगतागमेन।

(नेपथ्ये।)

हा नाथ, कथमुपेक्षसे। किं वा

प्रभवति मतये पदप्रबन्धो
न तव निर[6]त्ययनित्यचेतनस्य।

---

१. मन्त्रवद्दर्भसंस्कृतम्। अग्निर्वै देवतानां मुखम्. २. अमृतबिन्दुम्. ३. आनुश्रविको भोगः क्षयी—'तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति श्रुतेः। प्रेत्यभावपरम्परापरिणामस्याविरामाच्च स्वर्गो हेयः। तत्र जननीपयोधरपयःपानेन जन्मोपलक्ष्यते, पुत्रतर्जनीमूलोदकपानेन च प्रायणम्. ४. 'दुःखाभावोऽपि नावेद्य पुरुषार्थतयेष्यते। नहि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः॥' इत्याक्षिपति—तथापीति. ५. वेदनं परोक्षमपरोक्षं वापेक्षितम्। आद्ये विद्यत एव श्रौतो मोक्षबोधः। अन्त्ये वर्तमानापि मुक्तिरचिरं मुक्तैरनुभूयत एवेति समाधत्ते—श्रुतीति. ६. निरत्ययोऽविनाशी, अत एव नित्या त्रैलोक्यव्यापिनी चेतना यस्य.

न[1] भजसि करुणामतो मुरारे
मम कृपणैः परिदेवितप्रपञ्चैः ॥ १९ ॥

अयमथ वा भवन्तं प्रति वाचोयुक्त्या

अभि[2]लषितमथानुचिन्तितं यो
हृदयगुहानिहितः शृणोत्यकर्णः ।
न ममु(?)मवचनं च वाग्मिता च
प्रभवति मन्त्रयितुं त्रयीभुजङ्गम् ॥ २० ॥

**सूत्रधारः**—इयमसौ परैरपह्रियमाणप्राणा प्रमितिरशरणशरण्यचरणं पुरुषाणामुत्तमं त्रातारमाक्रोशति ।

(नेपथ्ये ।)

अचिन्तनीयानि तव स्वन्तदुरन्तसर्गप्रलयविलसितानि ।

निगमवनवनस्पते प्रसूषे
कति जगदण्डमयान्युदुम्बराणि ।
दधति बहलजन्तुजालमन्तः
पुनरपि तानि लयं त्वयि प्रयान्ति ॥ २१ ॥

**सूत्रधारः**—इयमसावगणितदुहितृव्यसनशोकवैशसा श्रुतिरुपश्लोकयति लोकोत्तरपुरुषम् ।

(नेपथ्ये ।)

अररे(?) प्रमाणमानिनि, तदियं तावन्न भवसि ।

**सूत्रधारः**—अयं[3] तावदनृतव्याघातपुनरुक्तनामा सुगतागमाग्रणीरप्रमाणधर्मगणः श्रुतिमभिधावति ।

---

१. परिदेवितेन करुणा वाक्यार्थबुद्धिजननद्वारेव जन्यते । तव तु बुद्धिरजन्या न वचनसाध्येति. २. अनुचिन्तितस्याप्यर्थस्य श्रवणहेतुः हृदयगुहाशयनम्. भुजङ्गपदसूचनीयम्, त्रय्याः पन्नगोपमानमुपपादयितुमकर्ण इति । यः पुनरवचनेनापि मन्त्रयितुं शक्यते तं प्रति किं वाचोयुक्त्येत्युपपत्तिः. ३. अनृतं पुत्रेष्ट्यादिविधौ फलविसंवादः । व्याघातः विहिते उदितहोमे 'श्यावोऽस्याहुतिमभ्यवहरति' इति निन्दार्थवादवशात् । पुनरुक्तम् 'त्रिः प्रथमामन्वाह' 'त्रिरुत्तमामन्वाह' इत्यत्रैकस्यार्थस्य द्विरभिधानात् । एतेऽप्रमाणधर्माः श्रुतेः प्रामाण्यं हन्तुमारभन्ते । तत्समाधानतर्कास्तु कर्मकर्तृसाधनवैगुण्यात् इत्यादिना द्वितीयाध्याये विवृताः.

(नेपथ्ये ।)

गृहीत तर्काः प्राणग्राहममीषामागमद्रुहां गणम् ।

**सूत्रधारः**—इयमान्वीक्षकी तर्कैः सह परनिग्रहायावतरति, यामुपजीवन्ति निजनिजनिश्रेयससाधनायेतरास्तिस्रो वार्तात्रयीदण्डनीतयो विद्याः ।

अपवर्गः पुमर्थानां प्रमाणं तत्त्वसंपदाम् ।
आन्वीक्षकी च विद्यानां चतुर्वर्गशिरोमणिः ॥ २२ ॥

तावदेव पुरुषो विधिनियोगवशंवदो यावदेनामान्वीक्षकीं नोपास्ते ।

मिलति नयनमक्षपादपाद-
प्रणिपतनेन ललाटसीम्नि यस्य ।
विधिरपि पुरुषस्य तस्य भाले
लिखितुमदृष्टलिपिं कुतः क्षमेत ॥ २३ ॥

(नेपथ्ये ।)

अररे परिचारविद्याः, सर्वा अपि यूयमनुयात प्रसभमभ्यमित्रीणामायुष्मतीं वत्सामान्वीक्षकीम् ।

**सूत्रधारः**—श्रुतिनिदेशसमनन्तरममूरभ्यमित्रं परापतन्ति तर्कनासीरा विद्याः । तदितः साधयावः ।

(इति निष्क्रान्तौ ।)

**इति साधनचतुष्टयसंपत्तिर्नाम प्रस्तावना ।**

१. वार्ताविद्याया निश्रेयसं कृष्यादिसंपत्, त्रय्यास्तु स्वर्गः, दण्डनीतेः सप्ताङ्गा राजसंपत् । तया तया विद्यया यथा स्वस्वनिश्रेयसे जनयितव्ये आन्वीक्षक्या उपयोगस्तथा टीकायां व्याख्यान व्यक्तम्. २. अर्थो धर्मः कामो मोक्ष इति पुरुषार्थचतुर्वर्गो भारतादौ प्रमाणं प्रमाता प्रमितिः प्रमेयमिति तत्त्वसंपत् चतुर्वर्गो न्यायभाष्यवार्तिकयोः आन्वीक्षकी त्रयी वार्ता दण्डनीतिरिति । विद्याचतुर्वर्गो भाष्ये प्रसिद्धः । तत्रान्वीक्षकी प्रमाणादिपदार्थान्, त्रयी यज्ञम्, वार्ता हलशकटादिव्यवहारम्, दण्डनीतिर्नृपधर्मान् बोधयति. ३. ललाटमिलितेन चक्षुषा दृश्यमाना ललाटलिपिरदृष्टत्वमेव जहातीति ध्वनिः. ४. अमित्रमभिप्रस्थिताम्.

([1]ततः प्रविशति श्रुतिरान्वीक्षकी च।)

**आन्वीक्षकी**—भगवति, दिष्ट्या वर्धसे द्विषन्निग्रहेण दुहितृप्रत्याहरणेन च ।

**श्रुतिः**—वत्से, कथमुत्सिक्तविक्रमाः परे परिभूताः, कथम[2]भ्युपपाद्यत वत्सा प्रमितिः ।

**आन्वीक्षकी**—भगवति, मन्निसृष्टेन तर्कगणेन बाध्यमानेष्वनृतव्याघातपुनरुक्तेषु, भवदवयवावनव्यासक्तासु [3]परिवारविद्यासु, परेषां नृशंसप्रहारेभ्यश्चानेन जनेन परिपाल्यमाने निरिन्द्रियविकलतनौ तव पितरि पुरुषे, कुतोऽप्यतर्कितोपनता [4]मिथ्यादृष्टेरात्मसंभवासंभावना नाम । विकटदं[5]ष्ट्राकोटिद्वयसंकटेन करतालसंकलितालीकाट्टहासधूमायितधूसरिताकाशेन तरलेतरतडित्काण्डकडारलोचनार्चिरर्चितस्फुलिङ्गितदि[6]गङ्गनेनाननेन(?) ग्रसितुमारेभे प्रमितिम् ।

**श्रुतिः**—वत्से, तदात्वे वर्तमाना किमभाषत वत्सा ।

**आन्वीक्षकी**—तदा पुनः प्रकर्षापकर्षपिशुनेन वचनेनाधिचिक्षेप पुरुषोत्तममेव प्रमितिः । तथा हि ।

विषमनिगमकाननान्तशाखा-
ततिषु निलीय परान्निरीक्षमाणः ।
परिणतिविदलज्जगत्कपित्थ-
ग्रसनकपे सुचिरान्निरूपितोऽसि ॥ २४ ॥

---

१. अथ साधनचतुष्टयसंपन्नोऽधिकारी । गुरुमुपसीदन्नन्वीक्षासंस्कृतया श्रुत्या परमात्मानं प्रमिमीते । 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति श्रवणात् । तत्र च सौगतमतप्रसिद्धकुतर्कनिरासद्वारेणान्वीक्षक्या उपयोग इति नाटकेतिवृत्तव्याजेन [विशदयति]. २. अभ्युपपत्तिर्विपदुद्धारः. ३. एतेन शिक्षाव्याकरणादीनां श्रवणोपयोगो दर्शितः. ४. अनादिरलीकार्थविषयिणी वासनासंततिर्मिथ्यादृष्टिस्तत्प्रभवा असख्योनयस्तान्स्वे(?)कोभयकोटिगोचरा संभावनान्तर्भवति । सैव शाब्दप्रमितिकर्तव्यं व्यवहारं जनयतीति सौगतमतम्. ५. कोटिद्वयं संभावनाया विरुद्धौ प्रकारौ. ६. अचेतनानां संभावनादीनामाननादीन्युत्प्रेक्षाकल्पितान्येव.

अपि च।

द्रुहिणभवनपद्मबीजमाला-
मणिपरिवर्तनतत्परात्मनस्ते।
ग्रसितुमखिलमेव जन्तुजातं
विजनयतो विदिता बिडालवृत्तिः॥ २५॥

**श्रुतिः**—ततः।

**आन्वीक्षकी**—ततोऽस्माकं नासीरपरिसरे पूरयन्निव रोदसोर्विवरमुत्पतितपतितनक्षत्रलाजविकिरणाकुलदिकुमारीकदम्बकिर्मीरिताम्बराजिरो जर्जरितमूलकुलाचलकुलकन्दुकक्रीडनाकुलया मुहुरवनतोन्नतया प्रतिपदमवनिवनितया वितायमानधूलिपाटीपटवासपटलो निर्भरभयचकितदिक्कुञ्जरत्यक्तगुरुतरभूगोलभारभुग्नभोगिमल्लभोगाभोगभङ्गुरभुवनः ससंभ्रमभ्रश्यदैरावतबृंहितोपबृंहितोदध्वानसेनासंनहनदुन्दुभिः। येन स जनितविस्मयेन जनतास्मयघस्मरेण करणहारकेण कोणाभिघातमूर्छितमरुदुद्धूयमानविमानाध्वनीनेन विध्वनता ध्मायमाने

प्रसभनिविशमानकालसर्प-
प्रतिहतनिर्गमणे खगोलनीले।
बहुविधगतयो विविक्तजाया-
सुतजननीतनवः खगा भ्रमन्ति॥ २६॥

अपि च तदानीं

कोणाहतिध्वनितदुन्दुभिभिद्यमान-
ब्रह्माण्डखण्डयुगझर्झरतालजालैः।
जृम्भालकालललनालपनाट्टहास-
मित्रैर्ननर्त जगदन्तनटः कृतान्तः॥ २७॥

१. 'सेनामुखं तु नासीरम्.' २. येन ध्मायमाने खगोलनीले खगा भ्रमन्ति स्मेति संबन्धः. ३. चन्द्रमसो जाया नक्षत्राणि, रविचन्द्रयोस्तनयौ शनिबुधौ, कुजस्य जननी भूमिः—एते परस्परविभक्ताः। राहुकेत्वोस्तु तनुरेवान्योन्यविभक्तेति। खगा ग्रहाः। कृष्णसर्पोपरुद्धनीडमध्ये विकलभ्रमत्पतगतादात्म्येनाध्यवसीयन्ते.

**श्रुतिः**—ततः किमारभन्त परे ।

**आन्वीक्षकी**—ततः सर्वे चार्वाकसौत्रान्तिकवैभाषिकवैनाशिकयोगाचारमाध्यमिकप्रभृतयः सुगतागमसेनापतयः 'इतः [1]कीर्तिः, इतो ज्ञानश्रीः, ततो दिङ्नागः' इति समन्तादस्मद्बलं परिवेष्टयांबभूवुः ।

**श्रुतिः**—हन्त, दुर्वारबला वैरिणः ।

**आन्वीक्षकी**—अथ सेनाकोणादन्तिकमागत्य काणादीसंहिता माममन्त्रयत्—'सखि गौतमि, शाम्यतु सुगतागमेन सह वैरम्, [2]परित्यजामियं श्रौती प्रमितिः, अस्तु भगवत्याः श्रुतेरपत्यकृतिका पक्षतापरामर्षयोरपत्यमनुमितिर्नाम' इति । ततो मया मन्त्रितम्—'असमञ्जसमिदमुदाहरसि । [3]प्रथमं योग्यतैवात्र न श्रुतेरवधार्यते । नाकाङ्क्षति परापत्यग्रहणं तादृशो जनः । [4]अपि चैवमस्माभिरुपेक्षिते श्रुतेरपत्यव्यसने जितकाशिभिः परैः परिक्षतप्रसवा पाक्षतेयी दारिकापि न जायेत, जातापि वा विलुप्येत' इति ।

**श्रुतिः**—[5]नूनमल्पप्रमाणतया बिभेति परेभ्यो वत्सा काश्यपी ।

**आन्वीक्षकी**—ततः कोपकपिलकपोला कापिली प्रमितिमभ्युपपद्यमाना मध्ये मार्गमवरुध्य परैः पराभूता न कंचन प्रतिकर्तारं पुरुषमलभत, प्रत्युत विकारमभजत प्रकृतेः ।

**श्रुतिः**—वत्से आङ्गिरसि, [6]त्वया प्रतिपालितः प्राणिति प्रकृतिदुर्बलो विद्यागणः ।

**आन्वीक्षकी**—भगवति, त्वदुपजीवनधनाः परपरिमर्दनाय प्रगल्भन्ते परिवारविद्याः ।

---

१. धर्मकीर्तिज्ञानश्रीप्रभृतयो सौगताचार्याः. २. अनुमानविधयैव शब्दस्य प्रामाण्यम्, न स्वातन्त्र्येणेति वैशेषिकाः. ३. प्रथमं वाक्यार्थगर्भयोग्यताया लिङ्गविशेषणस्यानिर्णयान्न तल्लिङ्गकमनुमानम् । पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपा चाकाङ्क्षाशब्दस्य पृथक्प्रामाण्ये सत्येव घटत इति गूढोऽभिसंधिः. ४. शब्दस्यानुमानान्तर्भावेऽनुमानमप्यलौकिकप्रत्यक्षान्तर्भूतं स्यादित्यभिसंधिः. ५. काश्यपी काणादीसंहिता (वैशेषिकविद्या) द्विप्रमाणा क्षुद्रत्वेनाध्यवसीयते. ६. तथा च भाष्यम्—'सेयमान्वीक्षकी—प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आधारः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥' इति.

जडवपुषि शुचित्वमादधाति
प्रतिफलितो मयि ते प्रमाणभावः[1]।
दलयति तिमिरं निशासु भानो-
स्तुहिनकरप्रतिबिम्बितः प्रकाशः ॥ २८ ॥

**श्रुतिः**—ततः किमासीत्।

**आन्वीक्षकी**—ततः प्रबलतर्कप्रभाकर[2]करसंपर्ककर्कशाकर्मतन्नमन्नण-मांसला मीमांसा प्रममाथ संभावनाम्, प्रमितिं च परकरादाच्छिद्यात्मसाद-करोत्, अधिकरणप्रसाधनैश्च[3] संचस्कार।

**श्रुतिः**—साधु। परपुरुष[4]विद्वेषिणी सतीनामग्रणीरेषा दुहिता जैमिनेः।

**आन्वीक्षकी**—संस्कुर्वती प्रमितिमसौ मीमांसा कार्यानुबन्धविधुरा-[5]नस्याः प्रतीकानुपच्छेत्तुमारेभे। तमवारयद्बादरायणी[6] विद्या, भयचकितलो-चनानि च पुराणानि परिपालयांबभूव।

**श्रुतिः**—अथ धर्मसंहिताः किमारभन्त।

**आन्वीक्षकी**—ताः खलु [7]'नित्यपुनरुक्तवचनाभिर्युष्माभिः किमिव प्रयोजनम्' इति मीमांसया निर्भर्त्सिताः, 'भवन्ति भवत्योऽपि प्रमाणम्' इति मयाश्वासिता धृतिमलभन्त।

**श्रुतिः**—ततस्ततः।

**आन्वीक्षकी**—अथ पर्यवष्टभ्य माम्, अमी सुगतागमसेनापतयो निर-न्तरमखिलदिङ्मुखेभ्यो निरन्ताभिः शस्त्रवृष्टिभिरनवकाशबद्धमण्डला व्यवाकिरन्। ततश्च

१. 'षड्ग्रहाः षडवग्रहाः' इति श्रुतिप्रमाणमूलकमान्वीक्षकीप्रामाण्यमिति भावः. २. प्रभाकरो गुरुः, सूर्यो वा. ३. नाटकपक्षे—करणानि नेत्रादीन्यधिकृत्य प्रसाधनम्। तत्त्वपक्षे—अधिकरणानि न्यायाः. ४. जारो परमात्मा वा. ५. कार्यार्थकलिङ्गादिर-हितानां सिद्धार्थानां न प्रामाण्यमिति प्राभाकराः. ६. ब्रह्मविद्या हि सिद्धार्थानामुपनि-षदां प्रामाण्यं मन्यते. ७. स्मृत्यनुमितेन नित्यप्रच्छन्नेन वेदेन बोधितमष्टकादिविषयकं कार्यं स्मृतयोऽनुवदन्तीति प्राभाकराः। स्मृतिभिर्वाक्यार्थे बोधिते तदाश्वासायो-च्छन्नवेदानुमानमिति नैयायिकाः.

अन्योन्यव्यतिघट्टनानलकणाङ्कूराः करेभ्यो द्विषां
संहत्यैकपदे पतन्ति परितो याः स्मायुधश्रेणयः ।
बाणैस्तास्त्रसरेणुपुञ्जपदवीमानीय सोऽयं जनो
रक्षामण्डलमात्मनो व्यरचयन्भूमण्डले पांशुभिः ॥ २९ ॥

**श्रुतिः**—ततस्ततः ।

**आन्वीक्षकी**—ततः प्रावर्तत तुमुलमायोधनम् । केऽपि तातगोतमप्रयुक्तसूत्रपाशबद्धाः, केचन वत्सवात्स्यायनभाषणतर्जिताः, केचिदु[1]द्योतकरवचोविवरणत्रस्ताः, कतिचन वा[2]चस्पतिना प्रसह्य पराभूताः, परे परितः पलायन्त समरभूमेः, उन्मोचिता चाखण्डकलेवरा प्रमितिः । इतः परमादिशतु भवती किमनेन जनेनोपपादनीयमिति ।

**श्रुतिः**—प्रतिपादय प्रमितिं पुरुषाय ।

**आन्वीक्षकी**—बाढं प्रतिपादिता, न पुनरेनां श्रद्दधाति पुरुषः ।

**श्रुतिः**—(स्वगतम् ।) कथं न श्रद्दधाति । भवतु तावदेवम् । (प्रकाशम् ।) वत्से गौतमि, न्या[3]यतनयः परामर्शो यथा युज्यते तया पक्षतया तथा कथा प्रस्तूयताम् ।

(नेपथ्ये ।)

होउ जणाणं हरिसो लहउ पिअं पक्खअं परामरिसो ।
फिट्टउ मणे अमरिसो पुरिसो ओवग्गसंपअं सहउ ॥ ३० ॥ (क)

**आन्वीक्षकी**—इदं वादकथायाः पक्षतापरामर्शसंगमप्रतिज्ञावचनमनुवदन्ति व्योमचराणि भूतानि ।

---

(क) भवतु जनानां हर्षो लभतां प्रियां पक्षतां परामर्शः ।
अपैतु मनस्यमर्ष पुरुषोऽपवर्गसंपदं सहतु ॥

---

१. न्यायवार्तिक. २. न्यायवार्तिकतात्पर्यटीकाकारेण. ३. अत्र श्रुतिव्यापारो बीजम्, आन्वीक्षकीव्यापार आरम्भः, ताभ्यां प्रथमो मुखसंधिः । स प्रथमेन प्रमितिपुरुषसंगमरूपेण फलेन परिपूर्णः । अथ बिन्दुप्रयत्नाभ्यां प्रतिमुखसंधिरारभ्यते । तत्र 'अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्' इति लक्षितः श्रुतेरश्रद्धामलक्षालनायानुमितिपुरुषसंगमानुकूलो व्यापारः । तमवतारयति 'न्यायतनयः' इत्यादिना । प्रयत्नस्तु आन्वीक्षकीप्रेरितकथाव्यापार इति ध्येयम्.

**श्रुतिः**—बाढम्। अनुमन्यामहे।

शचीव शक्रं गिरिजेव शंकरं निशेव चन्द्रं कमलेव माधवम्।
सरस्वतीव त्रिजगत्पितामहं पतिं परामर्षमुपैतु पक्षता॥ ३१॥

(इति निष्क्रान्ताः सर्वे।)

**इति श्रवणसंपत्तिर्नाम प्रथमोऽङ्कः।**

---

द्वितीयोऽङ्कः।

(ततः प्रविशति कञ्चुकी।)

**कञ्चुकी**—जराजर्जरितकलेवरस्य किमीदृशस्य जनस्य जीवितेन।

निर्धौतः पलितेन यद्यपि मुखे कालक्रमात्कालिमा
मोहान्धस्य तथापि मे मसिमसौ लोभः पुनर्लिम्पति।
आनाभेरपवर्जितेन चिबुकं यष्टौ श्रमान्न्यस्यता
कुब्जेन त्रिपदः पशुः शिशुजनत्रासाय सृष्टो मया॥ ३२॥

(परिक्रम्य।)

भोः, कथयत क्वेदानीं कुमारः परामर्षः।

(प्रविश्य।)

**चेटी**—अज्ज पतिबन्ध, वन्दामि। (क)

**कञ्चुकी**—भवति साधनासिद्धे, परिपन्थिभिरप्रधृष्या भव। कथय क्वेदानीं कुमारः।

**चेटी**—केण कारणेण ढुण्ढिज्जइ कुमारो। (ख)

**कञ्चुकी**—भवति, आदिष्टोऽस्मि देवेन न्यायेन—यथा त्वरन्ते मे[1]मावयवाः कुमारपरामर्षपरिमर्षाय। तन्निरूपय साधनसदनभूमिकासु कतमामधितिष्ठतीति।

---

(क) आर्य प्रतिबन्ध, वन्दे।

(ख) केन कारणेनान्विष्यते कुमारः।

---

१. न्यायस्य पञ्चभिरवयवैः परामर्षो जन्यत इत्यन्वीक्षासमयः। हेतुभूमिकास्तिस्रः—लिङ्गदर्शनम्, व्याप्तिस्मरणम्, तृतीयलिङ्गपरामर्ष इति.

**चेटी**—मये क्खु पट्टमभूमिआअठविदो वीअ भूमिआरोहणे तुमं पडीच्छइ कुमारो । (क)

**कञ्चुकी**—ननु त्वमिदानीं क्व प्रस्थितासि ।

**चेटी**—अज्ज, उक्कण्ठादूमिअस्स कुमारस्स कदे भिसिणीदलाइं मुणालिआओ आहरेउम् । (ख)

**कञ्चुकी**—भवति, किमुत्कण्ठाकारणमायुष्मतः कुमारस्य ।

**चेटी**—या किर पक्खदा णाम दिव्वदारिआ कुमारस्स पुरदो कहाहिं[1] पत्थुआ आसि, सा एव्व अस्स उक्कण्ठाणिबन्धणम् । (ग)

**कञ्चुकी**—परामर्षपरिग्रहाय बलवदुत्कण्ठमाना पक्षतापि पक्षद्वारेण प्रविश्य साधनसदनस्य तृतीयां भूमिकामधितिष्ठतीति मम प्रथमा कथा कथयति स्म ।

**चेटी**—अज्ज, एरिसे परोप्परणिब्भराणुराए केरिसो पक्खदापरामरिसाणं समागमविलम्बो । (घ)

**कञ्चुकी**—भवति, साधनसदनस्य तृतीयभूमिकामारोहतः परामर्षस्य[2] करावलम्बाय त्वमहं च मिलितौ प्रभवावः । न च परामर्षसविधे तव मम च मेलकं सहन्ते साधनाभासाः । पश्य । मदभिमुखमभिधावत्युपाधिपुरःसरः सव्यभिचारविरुद्धगणः । हन्तुमीहन्ते त्वाममूरसिद्धयः । परामर्षमेष कुण्ठ-

(क) मया खलु प्रथमभूमिकास्थापित(?) इव भूमिकारोहणे त्वां प्रतीच्छति कुमारः ।

(ख) आर्ये, उत्कण्ठादूनस्य कुमारस्य कृते बिसिनीदलानि मृणालीश्चाहर्तुम् ।

(ग) या किल पक्षता नाम दिव्यदारिका कुमारस्य पुरतः कथाभिः प्रस्तुतासीत्, सैवास्योत्कण्ठानिबन्धनम् ।

(घ) आर्ये, ईदृशे परस्परनिर्भरानुरागे कीदृशः पक्षतापरामर्षयोः समागमविलम्बः ।

---

१. कथा हि प्रतिपत्तिमुखेन पक्षतामुपपादयति. २. तृतीयलिङ्गपरामर्षे व्याप्तिविशिष्टे पक्षधर्मता भासत इति भावः.

यितुमुत्कण्ठते प्रकरणसमः। [1]सिद्धिरेषा तिरोधित्सति पक्षताम्। पक्षता-गर्भबाधनाय बाधगणो निर्भरमवतिष्ठते।

**चेटी**—ता अम्हे अमिलिदा ज्जेव साहेम भत्तुणो कज्जम्। किं क्खु मिलिदेहिं अम्हेहिं। (क)

**कञ्चुकी**—[2]ननु मीमांसया मङ्ग्यमाणोऽप्यर्थः प्रतिषिद्धोऽयमान्वीक्षक्या भगवत्या। संघटितपरिवारार्पितभरा हि प्रभवो [3]लघुना शरीरेण प्रभवन्ति कृत्येषु, नतु विघटमानपरिजनदुर्गृहीतभारगौरवग्रस्तद्विधाकृतात्मान इति।

**चेटी**—जत्थ साहणघरुद्देसे तुमं वट्टसि, तत्थ णत्थि मे ओआसोत्ति दुलहो तुम्हाण मे[4]लओ। (ख)

**कञ्चुकी**—घटयिष्यत्यावामेकत्र प्रदेशे सामान्यलक्षणा नाम दूरदर्शिनी। सर्वथा स्वस्ति नः करिष्यन्त्यान्वीक्षकीप्रेरितास्तर्काः। इत्येहि। साधयावः।

(इति निष्क्रान्तौ।)

इति मिश्रविष्कम्भकः।

---

(ततः प्रविशति [5]कथा पक्षता च।)

**कथा**—अयि, कमपि तवान्तरं प्रकारमुपलक्षयामि।

---

(क) ततो वयममिलिता एव साधयामो भर्तुः कार्यम्। किं खलु मिलिताभ्यामावाभ्याम्।

(ख) यत्र साधनगृहोद्देशे त्वं वर्तसे, तत्र नास्ति मेऽवकाश इति दुर्लभो युष्माकं मेलकः।

---

१. सिद्धिराश्रयासिद्धावन्तर्भवतीति प्राचीनमतेनेदम्. २. अन्यत्र हेतौ पक्षधर्मता, अन्यत्र च व्याप्तेर्ज्ञानमनुमितिहेतुः, ज्ञानद्वयसाधारणी च परामर्षस्य कारणतेति मीमांसकाः. ३. विशिष्टपरामर्षस्य कारणत्वे शरीरलाघवम्, इतरथा ज्ञानद्वयस्य कारणत्वे गौरवमिति सूच्यते. ४. मेलक एकत्र वर्तमानता. ५. तदेवमनेन विष्कम्भकेण व्याप्तिपक्षधर्मतयोरैकाधिकरण्यग्रहे सत्यपि पक्षता संभवति. सामान्यलक्षणया सर्वोपसंहारेण व्याप्तिग्रहेऽपि पक्षे साध्यसंबन्धाग्रहसंभवादिति व्युत्पादितम्. इदानीं कथाव्यापारेणोत्पन्ने तृतीयलिङ्गपरामर्षे पक्षता संघटत इत्यङ्केन व्युत्पाद्यते.

बाष्पायितस्तिमितलोचनमायतैक-
भ्रूदाम चिन्तयसि किंचन काञ्चनाङ्गि।
स्वेदोदकार्द्रवपुषस्तव रोमहर्षः
शंसत्यसावविरताङ्कुरितान्विकारान्॥ २॥

**पक्षता**—भअवइ, तुह पुरओ च्चिअ तह तेण विप्पलम्भएण जणेण अविणअं पाविआ वञ्चिआ अ। किं भणदु मन्दभाइणी। असेसदो ण्णाद-वुत्तन्ता वि किं पुच्छसि। (क)

**कथा**—अयि सरले, स्तोकमपि न स्मरामि केनाविनीतेन कथं वञ्चितासि।

**पक्षता**—अलाहि[1] भअवइ, ण तुए मन्तिस्सम्। तइआ क्खु तं अविणअव्ववसाइणं जणं बलामोडिअ वम्महव्ववहारेसु व्वावारेसि। एण्हि भणसि ण संभवामि को सो जणो त्ति। (ख)

**कथा**—अयि, शपामि यदि कोऽपि मया दुर्विनये व्यापारितः। नूनमसि संकल्पेन स्वप्नेन[2] वा कमपि वृत्तान्तव्यतिकरमनुभाविता।

**पक्षता**—(चिरमनुध्याय।) ता होज्ज। एसो सविणए विणअहरो वुत्तन्तो। (ग)

---

(क) भगवति, तव पुरत एव तथा तेन विप्रलम्भकेन जनेनाविनयं प्रापिता वञ्चिता च। किं भणतु मन्दभागिनी। अशेषतो ज्ञातवृत्तान्तापि किं पृच्छसि।

(ख) अलाहि भगवति, न त्वया मन्त्रयिष्ये। तदा खलु तमविनयव्यवसायिनं जनं बलात्कृत्य मन्मथव्यवहारेषु व्यापारयसि। इदानीं भणसि न संभवामि कः स जन इति।

(ग) तद्भवेत्। एष स्वप्ने विनयहरो वृत्तान्तः।

---

१. अलाहिः निवारणार्थः प्राकृतो निपातः. २. एतेन स्वाप्निकदर्शनस्यानुरागप्रकर्षावहत्वेन दृढभूमित्वमेतावता प्रबन्धेन सूचितम्.

**कथा**—कथय वत्से, कीदृशः।

**पक्षता**—अज्ज सिविणन्तरे प्पमअवणणलिणीकूललआहरप्पाब्भारे तुह पासे किंपि मन्तअन्तो एसो जणो तुए दिण्णसण्णेण णिहुअमेन्तेण केणवि तक्कालमणहरेण जणेण बलामोडिअ वित्थरन्तेहिं बाहूहिं गहिओ परिच्चन्तो अ। (क)

**कथा**—नूनमनेन मया बहुशः प्रस्तुतेन न्यायतनयेनानुवायविशुद्धेन परामर्षेण स्वप्ने संगतासि। स्थाने युवयोरनुरागः।

**पक्षता**—भअवइ, विशमाइ दशाइ वट्टामि।

जइ ठाइ देइ विअणं जइ टुट्टइ झत्ति कट्टए जीअम्।
सहविसमगाढगेण्ठी कण्ठे वडिओ पणअपासो ॥ ३ ॥ (ख)

**कथा**—चिरं धारय जीवितम्। अनुभविष्यसि प्रियसमागमम्।

**पक्षता**—(संस्कृतमाश्रित्य।) भगवति, सुचिरविरहबाधादुर्दिने प्रियसंगमसुखा चिरद्यूतयोऽपि न रोचन्ते। पश्य।

ज्वलति सुलभं चित्रा चन्द्रातपे शलभायितं
दहति सुभगो देहः प्रौढे पुरोपवनानिले।
किसलयशिलातल्पे शक्यं विपोथयितुं वपुः
दयितविरहव्याधेर्बाधां चिरं सहते जनः ॥ ४ ॥

**कथा**—ननु चिरकालिकोऽपि प्रियसंगमश्चिरमपत्योत्पत्तिसुखेन परमाभ्युदयाय कल्पते।

---

(क) अद्य स्वप्नान्तरे प्रमदवननलिनीकूललतागृहप्राग्भारे तव पार्श्वे किमपि मन्त्रयमाण एष जनस्त्वया दत्तसंज्ञेन निभृतमात्रेण केनापि तत्कालमनोहरेण जनेन बलात्कृत्य विस्तरद्भ्यां बाहुभ्यां गृहीतः परित्यक्तश्च।

(ख) भगवति, विषमायां दशायां वर्ते।

यदि तिष्ठति ददाति वेदनां यदि त्रुट्यति झटिति कर्षति जीवम्।
समविषमगाढग्रन्थि कण्ठे पतितः प्रणयपाशः ॥

(ततः प्रविशति परामर्शो विदूषकश्च ।)

**विदूषकः**—एसा सा साहणप्पासाअस्स तइआ भूमिआ । णं आरोहउ पिअवअस्सो । (क)

**परामर्शः**—वयस्य, रमणीयतमोऽयमुद्देशः । इह हि

ऐक्यं गतासु नभसा स्फटिकाश्मखण्ड-
सोपानपङ्क्तिषु विलोचनवञ्चिकासु ।
व्योम्नि व्रजाम्यहमधोमुखलम्बमान-
च्छायामनुष्यचरणेषु पदानि दत्वा ॥ ५ ॥

अपि च ।

अग्रे चलत्यभिमुखं सहचारिपार्श्वे
पश्चात्पराङ्मुखमधश्च विलम्बमानम् ।
एकस्य मे मणिमयीषु निशान्तसौध-
सोपानभित्तिषु वपुर्बहुतामुपैति ॥ ६ ॥

**पक्षता**—भअवइ, संवदइ सिविणए सुदस्स सद्दस्स सरसंयोओ । ता जाणे सो व्विअ भअवइ, पत्थुओ जणो इमं देसमनुसरइ । ता अम्हे कुड्डुन्तरिआ ठामो । (ख)

(इति तथा कुरुतः ।)

**विदूषकः**—णं आसणपरिग्गहं काउण पत्थुअकहासेसं वण्णेदु वअस्सो । (ग)

(इत्युभौ तथा कुरुतः ।)

**विदूषकः**—तदो का पउत्ती । (घ)

---

(क) एषा सा साधनप्रासादस्य तृतीया भूमिका । नन्वारोहतु प्रियवयस्यः ।

(ख) भगवति, संवदति स्वप्ने श्रुतस्य शब्दस्य स्वरसंयोगः । तज्जाने स एव भगवति, प्रस्तुतो जन इमं देशमनुसरति । तदावां कुड्यान्तरिते तिष्ठावः ।

(ग) नन्वासनपरिग्रहं कृत्वा प्रस्तुतकथाशेषं वर्णयतु वयस्यः ।

(घ) ततः का प्रवृत्तिः ।

**परामर्षः**—ततस्तद्दर्शनक्षणमारभ्य

टङ्कोत्कीर्णा त्वचि, विलिखिता नेत्रपत्रे, निषिक्ता
स्वान्ते, स्यूता वचसि, निचिता पार्श्वतः पृष्ठतश्च।
धारारूढा हरिति पुरतः काचसद्मेव काचि-
न्नानाभूत्वा वरतनुरिह प्रायशः प्राविशन्माम्॥ ७॥

**पक्षता**—(अपवार्य। सासूयम्।) भअवइ, कए वि गहिअहिअओ एसो जणो। (क)

**विदूषकः**—वअस्स, तदो तदो। (ख)

**परामर्षः**—

प्रथमं निपपात या समग्रा
मयि दृष्टिर्वलदम्बुजायताक्ष्याः।
न चचाल कथंचिदप्यमुष्याः
स्मरबाणैरिव कीलितस्त्रिभागः॥ ८॥

**पक्षता**—(अपवार्य।) एव्वं परकलत्तप्पसत्तहिअए अस्सिं जणे तुअ वअणेण णिहितचिन्ताए मम णवर मरणं ज्जेव्व परिणअम्। (ग)

**कथा**—अविदितकथाशेषा किमुत्ताम्यसि।

**विदूषकः**—वअस्स, तस्सिं अवसरे तए किं पि किअं भणिअं वा। (घ)

**परामर्षः**—वयस्य,

स्तम्भेन कर्मणि तनोः स्थगितेऽपि काम-
काष्ठां परामधिरुरोहतरां वरोरुः।

---

(क) भगवति, कयापि गृहीतहृदय एष जनः।

(ख) वयस्य, ततस्ततः।

(ग) एवं परकलत्रप्रसक्तहृदयेऽस्मिञ्जने तव वचनेन निहितचिन्तायां मम केवलं मरणमेव परिणतम्।

(घ) वयस्य, तस्मिन्नवसरे तया किमपि कृतं भणितं वा।

गीर्गद्गदेन यदपि ग्लपिता तथापि
वाचामगोचरमवोचत लोचनान्तः ॥ ९ ॥

**पक्षता**—(अपवार्य।) भअवइ, पणिवडामि तुह पाआणम्। एरिसदुव्विणीअजणगहिअहिअआ क्खणं पि ण जीविउं महेमि। अणुमण्णस्व मम्। परिच्चइस्सं दाव इदं सरीरम्। दुल्लहो क्खु इमस्सिं जम्मस्सिं परकलत्तप्पसत्तहिअओ जणो। (क)

**विदूषकः**—तदो। (ख)

**परामर्षः**—ततश्च

कथाकथितरूपानुरूपामेनां विलोकयन्।
प्रभातमङ्गलध्वानैर्धिग्जनोऽयमजागरीत् ॥ १० ॥

**कथा**—अयि चपले, शृणु तावत्त्वामाश्रित्य निशास्वप्नवृत्तान्तमुदाहरत्यायुष्मान्परामर्षः।

**पक्षता**—(अपवार्य।) भअवइ, एण्हिं विपरिणओ मे संसारो। येहिं सुव्वन्तेहिं आसिं दद्धा हिमेण भिसिणि व्व निव्वावअन्ति ते व्विअ पिअवअणा मं संभविज्जन्ता। (ग)

**परामर्षः**—वयस्य, अवलम्बस्व माम्। तिरयति चेतनां प्रियजनकथाप्रसङ्गोत्थितो मोहः। (इति मूर्छति।)

**कथा**—संप्रति सांप्रतं तवोपसर्तुम्। (इति पक्षतामाकर्षति।)

---

(क) भगवति, प्रणिपतामि तव पादयोः। ईदृशदुर्विनीतजनगृहीतहृदया क्षणमपि न जीवितुमिच्छामि। अनुमन्यस्व माम्। परित्यक्ष्यामि तावदेतच्छरीरम्। दुर्लभः खल्वस्मिञ्जन्मनि परकलत्रप्रसक्तहृदयो जनः।

(ख) ततः।

(ग) भगवति, इदानीं विपरिणतो मे संसारः। यैः श्रूयमाणैरासन्दग्धा हिमेन बिसिनीव निर्वापयन्ति तान्येव प्रियवचनानि मां स्मर्यमाणानि।

**पक्षता**—(उपसृत्य परामर्षस्य ललाटे हस्तं दत्वा।) बुज्झस्व महाभाअ, ण जुज्जदि ते मोहो। (क)

**परामर्षः**—(संज्ञां लब्ध्वा।) भगवति, नमस्ते। स्वागतमस्मै नूतनातिथये जनाय।

**कथा**—अद्य भगवतीभ्यां श्रुत्यान्वीक्षकीभ्यामदिष्टया मया सकलवाङ्मयसाम्राज्यसुभगस्य स्वीकृतप्रमाणसमवायस्य न्यायस्य प्रथमपुत्राय गोतमगोत्राय तुभ्यमयोनिजन्मा संशयानुमित्सयोरपत्यकृतिका पक्षता नाम कन्यका प्रतिपाद्यते[1]।

**परामर्षः**—स्वस्ति। प्रतिगृहीतोऽयमार्याप्रसादः।

**विदूषकः**—कथं बह्मणो इमो न परमण्णं भोजिओ ण सोत्थिवाअणं पडिवादिओ। (ख)

(सर्वे स्मयन्ते।)

(नेपथ्ये कलकलः।)

**विदूषकः**—कीस एसो कप्पन्तघडन्तघणघडाघोरणिग्घोसघग्घरभीसणो धरणिभारुद्धरणुद्धुरमहावराहघोणाघुरीघुग्घुराइअगहिओ बहिरिअसअलजीअलोओ लोआलोअन्तमहिवेट्ठणभइरओ दुन्दुही ताडीअदि। (ग)

**कथा**—ननु समासन्नमिदमुदग्रसर्वाङ्गदुर्वारतरं चार्वाकबलम्। पश्य।

माद्यद्दर्पान्धगन्धद्विपघटितघटाबन्धमास्कन्द्य बन्ध-
प्रेङ्खत्पर्याणपर्याकुलतुरगबलक्रुष्टहेषाविशेषम्।
एतत्सूतप्रतोदाहतहयचलितस्यन्दनोद्धातधाटी-
धावत्पादातपादक्षुभितगति समभ्येति पारक्यचक्रम्॥ ११॥

---

(क) बुध्यस्व महाभाग, न युज्यते ते मोहः।

(ख) कथं ब्राह्मणोऽयं न परमान्नं भोजितो न स्वस्तिवादनं प्रतिपादितः।

(ग) किमित्येष कल्पान्तघटमानघनघटाघोरनिर्घोषघर्घरभीषणः धरणिभारोद्धरणोद्धुरमहावराहघोणाघुरीघुर्घुरायितगभीरो बधिरितसकलजीवलोको लोकालोकान्तमहीवेष्टनभरितभैरवो दुन्दुभिः ताड्यते।

---

१. सर्वाणि प्रमाणानि छायया महावाक्ये समवयन्तीति भाष्ये स्थितम्.

**परामर्षः**—(निरूप्य । सहर्षम् ।) तथा निमित्तानि सूचयन्ति यदचिरेण नश्यत्यसौ सेनेति । पश्य ।

ऊर्ध्वं धावन्ति मूर्धस्खलितभटशिरस्त्राणनिष्पिष्टशस्त्र-
श्रेणीसंसर्गदूरज्वलदहनकणप्लुष्यमाणाः पताकाः ।
उत्पातोल्कानिपातव्यतिकरवशतो विष्वगावर्तमाना
निर्मान्ति भ्रान्तियोगादपरमिव रवेरम्बरे बिम्बवर्गम् ॥ १२ ॥

**पक्षता**—को क्खु एसो सरअचन्दचन्दिआसोहणसरीरेण तुवएण परबलाहिमुहं पअट्टो । (क)

**कथा**—नूनमसौ न्यायनिबन्धप्रणेता विद्वानुदयनो निर्दयं परेषु प्रहर्तुमभिधावति । (निरूप्य ।) अहो न्यायविद्वदुदयनाधिष्ठितस्य शीतकरश्वेतस्याश्वस्य प्लुतगतिपाटवम् ।

क्ष्मापृष्ठे क्षुरलक्षणेन पदवीमालक्ष्य शिक्षां गतैः
काङ्क्षन्तोऽनुसरन्ति धूलिमलिना दूरादमी वायवः ।
तस्माल्लोचनवञ्चनोऽयमवनौ पादं न दत्ते प्लुतै-
र्बिम्बार्धाङ्कपरम्परामिव लिखत्याकाशभित्तौ हयः ॥ १३ ॥

अपि च ।

काष्ठान्तसंघटितदूरविलम्बमान-
मार्तण्डरश्मिवलयानवलम्बमानः ।
गामस्पृशन्नपि दधन्नतिमुन्नतिं च
हिन्दोलयेव तुरगो रमते प्लुतेषु ॥ १४ ॥

**परामर्षः**—अहो धावितलाघवमुदयनहयस्य ।

विच्छिन्नाममुनैव यावदवनौ भानुः प्रभां पातये-
त्प्रायस्तावदयं रयेण तुरगो गव्यूतिमुल्लङ्घते ।

---

(क) कः खल्वेष शरच्चन्द्रचन्द्रिकाशोभनशरीरेण तुरगेण परबलाभिमुखं प्रवृत्तः ।

---

१. वेगेन.

ग्रामीणा जनता नितान्तचकिता दूराञ्चिते चक्षुषी
निक्षिप्य क्षणमीक्षते पथि हयच्छायामयीं विद्युतम् ॥ १५ ॥

अपि चायमुदयनः

अमुना हयवेगेन क्षणोत्तीर्णाध्वविस्तरः ।
समभिव्याहृतं वेत्ति नानाजनपदाक्षरम् ॥ १६ ॥

आश्चर्यम् ।

यो वेगतो गतो दूरमध्वानमुदलङ्घत ।
पश्चादनुसरत्येषा हेषा तस्यैव वाजिनः ॥ १७ ॥

**कथा**—कथमगणयित्वा शस्त्रवृष्टिमेष

उदयनतुषारधामा लोकं सहजं निजं परित्यज्य ।
प्रविशति परचक्ररविं प्रतिपदमनुवृद्धये कलाराशेः[1] ॥ १८ ॥

**परामर्षः**—परितः पतदस्त्रवर्षमिषुधारया वारयन्नयमुदयनो हयरयवशात्तथा भ्रमणिकामातनोति यथा

भूमौ तुरङ्गममयं गगने मुखेन्दु-
ज्योत्स्नामयं नतधनुर्मयमन्तराले ।
आशासु सायकमयं तदिति क्रमेण
चत्वारि चक्षुषि चकासति मण्डलानि ॥ १९ ॥

**कथा**—इमौ किल कुमारिलप्रभाकरौ परान्पराभवन्तमुदयनमनुसृत्य मन्त्रयेते—'भ्रातरुदयन, किमात्मानमायासयसि । हेरन्तु पक्षतां किल खण्डयन्तु परे परामर्षम् । ननु द्विधाविभक्ततनुरप्यसौ पक्षतया धर्मेदारैर्विनापि प्रभवति जनयितुमयोनिजां निजामनुमितिम्'[2] इति ।

**पक्षता**—अहो कुडिलत्तणमिमाणम् । (क)

(क) अहो कुटिलत्वमनयोः ।

१. 'शेषः' इति पाठः. २. ज्ञानद्वयमनुमितिजनकम्, न तु पक्षतेति मीमांसकमतम्.

**विदूषकः**—भअवइ, भआमि इमासुं । तदो पक्खदं कत्थ अवाहिए त्थले ठवेसि । (क) (इति पक्षतया सह निष्क्रान्तः ।)

**परामर्शः**—इमौ कुमारिलप्रभाकरौ स्मितपूर्वमुदयनेनावधीरितौ कोपकपिलाननौ भूत्वा मां सदारं शपतः—

'गर्भं धत्तां परामर्शसंनिकर्षेण पक्षता ।
[1]अपत्ये जातमात्रे तु दम्पती न भविष्यतः ॥ २० ॥

**कथा**—अहो दुराचारयोरनयोर्दारुणानि दुरन्तवचनानि ।

**परामर्शः**—भगवति, तथाविधापत्यवदनदर्शनकृतार्थयोरावयोः क्षणमात्रमपि प्राणनं परमनिःश्रेयसाय ।

(नेपथ्ये कलकलः ।)

**कथा**—हा, किमेतत् । जगदवसानदिवसोदित्वरदिवाकरप्रकरकरचक्रनिष्क्वथनकदर्थितमिव युगविगमवर्धमानवडवावीतिहोत्रहेतिलिह्यमानमिव धूर्जटिललाटलोचनपुटपच्यमानमिव जनजातमकाण्डचण्डिमापन्नशुष्मोष्मणा कृच्छ्रं प्राणिति । (प्रणिधाय ।) नूनमुदयनेन परेषां क्षुद्राणामुपद्रवमसहमानेनोदीरितमिदमाग्नेयमस्त्रम् ।

**परामर्शः**—अहो, दहनक्रियालाघवमुदयनोदीरिताग्नेयशस्त्रानलस्य । तथा हि ।

सेनेति धूमपटलीति हुताशवीथी-
त्यङ्गारराजिरिति भस्मपरम्परेति ।
दृष्टिर्विचित्रमतिमादधती विहाय
वस्तुक्रमं युगपदुल्लिखति प्रकारान् ॥ २१ ॥

---

(क) भगवति, बिभेम्याभ्याम् । ततः पक्षतां क्वचिदप्यबाधिते स्थले स्थापयामि ।

---

१. अनुमितौ जातायां सिद्ध्यभावस्वरूपा पक्षता तिरोभवति, ततः परामर्शो नश्यतीति भावः.

(नेपथ्ये ।)

अरे दुरात्मन्, अयं न भवसि ।

**कथा**—अयमसावुदयनेन दग्धे सकलबले समरमवतरन्नेक एव

चार्वाकाणां सार्वभौमः समग्रा-
मुर्वीं क्रामन्नर्वता कर्बुरेण ।
सर्वैर्वन्द्यैर्विक्रमैर्वीरवर्गं
खर्वीकुर्वन्नेति दुर्वारगर्वः ॥ २२ ॥

**परामर्षः**—हा, कथमापतन्नेव चार्वाकवीरोऽयमुदयनकरनुन्नशरभिन्न-वर्मा[1] प्राणानपहाय पतितः ।

खलः पाटच्चरीं वृत्तिमवसानेऽपि नोज्झति ।
असावसूनां व्रजतामादत्ते पञ्चताधनम् ॥ २३ ॥

**कथा**—श्लाघनीयोऽयमीदृशः शूरस्य प्रतिशूरशरशीर्णस्य शरीरक्षयः । तथा हि ।

उच्चैरु[2]द्धूयमाने क्षरदसृगुदके पक्षपालीजलार्द्रा-
स्तोमे स्तोमावदातद्युतिभृति यशसा तायमाने विताने ।
चार्वाकोर्वीभुजङ्गः समरभुवमसौ संविभक्तानुरागा-
मङ्गेनालिङ्ग्य निद्रां निरवधिमधुना सेवते वीरतल्पे ॥ २४ ॥

**परामर्षः**—भगवति, जानामि चार्वाकमपहाय सांप्रतमुदयनमसौ विश्वंभरा कामयते ।

**कथा**—एवंविधप्रकृतिरेव कुलपांशुला काश्यपी कस्य परिचयं प्रमाणयति ।

पश्यैषा नरकप्रसूर्वसुमती गर्जद्गजग्रामणी-
पर्जन्यच्युतदानवारिसमरप्रावृण्णिशीथे पुनः ।
बद्धाश्लेषमपास्य वीरशयने निद्रान्तमेकं पतिं
को जानात्वभिसृत्य गच्छति कया गत्या परं कामुकम् ॥२५॥

---

१. 'मर्मा' इति पाठः. २. 'गृध्रैः' इति पाठः.

**परामर्षः**—क एष नाम न्यायाचार्यमुदयनं मूलराज्येऽभिषिञ्चति।

**कथा**—एष परिशिष्टप्रकाशकवयिता[1] बुधो वर्धमानः। तं किल चार्वाकस्य बन्धुरतिनृशंसः सोमसिद्धान्तः[2] समरायाह्वयते।

**परामर्षः**—हन्त, आहूतकुपितो वर्धमानो मण्डलाग्रमुद्यम्य सोमसिद्धान्तमभिधावति।

**कथा**—वत्स, पश्य।

स्कन्धे व्यापारयन्नस्य कृपाणमुपवीतवत्।
वर्धमानो द्विजवरः संस्करोतीव वैरिणम्॥ २६॥

**परामर्षः**—नूनमसावस्य पाखण्डाखण्डलस्य

कण्ठे गृह्णाति, वक्षो विमृशति, वलते पार्श्वतो, मध्यभागे
श्लिष्यत्यूरुं रुणद्धि प्रणिपतति पदे वर्धमानासिवल्ली।
इत्थं व्यक्तानुरागाप्यनुनयविमुखे सोमतन्त्रस्य पत्या-
वुत्पत्य स्वर्वधूटी प्रणयिनि धरणौ लज्जया मज्जतीयम्॥ २७॥

अपि च।

प्रौढच्छेदोच्छलितो व्योमगतः सोमतन्त्रकायार्धः।
रूढैकबाहुराहुभ्रान्त्या मिहिरं विभीषयति॥ २८॥

**कथा**—दृढासिप्रहारपतिते सोमसिद्धान्ते कापालिकनीललोहितमहाभैरवभूतडामरोमामहेश्वरादयो[3] रणादपक्रान्ताः। वत्स परामर्ष, जातं निष्कण्टकम्। एते च (?) प्रतिबन्धसाधनसिद्धिभ्यां[4] प्रतिसंस्कृताः कार्यायोजनधृतिसंहतिपदप्रत्ययप्रभृतयः साधनप्रासादप्रदेशाः। तेषु पक्षतया सह विहरमाणो जनयिष्यसि भगवतीमनुमितिम्। अनया च संघटितः पुरुषः प्राप्स्यति सिद्धिमिति। प्रवर्तते चेयमुत्तमचामीकरद्रवनिकरैरिवाम्बरपरभागमापूरयन्ती पितृप्रसूः।

---

१. कुसुमाञ्जलिप्रकाशः. २. बौद्धाधिकारटीकायां वादिविनोदे च शंकरमिश्रचरणैरुक्तम्—'सोमसिद्धान्तोऽपि चार्वाकरीत्या संगमनीयः' इति. ३. एते सोमसिद्धान्ताचार्याः. ४. प्रतिबन्धो व्याप्तिः, साधनसिद्धिः पक्षधर्मता, कार्यायोजनं धृतिरित्यादीनि भगवत्साधकानि लिङ्गानि कुसुमाञ्जलौ प्रसिद्धानि.

यदपि[1] सृजति पूर्ववन्न तापं
समयवशेन विलीनपश्चिमार्धः।
अवतमसमलीमसं तथापि
त्यजति न रागसमागमं पतङ्गः॥ २९॥

(इति निष्क्रान्ताः सर्वे।)

**इति मननसिद्धिर्नाम द्वितीयोऽङ्कः।**

---

तृतीयोऽङ्कः।

(ततः प्रविशति श्रद्धा निर्वेदश्च।)

**निर्वेदः**[2]—हन्त हन्त, बिभ्रति विश्वमदभ्रवैभवे भगवति विश्वंभरे कमन्यमाश्रयाम्यगाधगर्ध[3]गदगृहीतः। तेन हि।

जहिहि तरलां लक्ष्मीमेतां त्यजामरपादपा-
न्हृदयहतया किं ते चिन्तामणेरपि चिन्तया।
जठरदहनज्वालाशान्त्यै यदि स्युरमी तदा
स्वपितुरुदधेरौर्वं निर्वापयेयुरुषर्बुधः॥ १॥

**श्रद्धा**—वत्स, ज्वलितं जगज्जीवित[4]मनेन तृष्णाज्वरैर्जनं जरयता

---

१. पताकास्थानके श्लेषः समासोक्तिः साधारणधर्मोपन्यासश्चेति त्रयः प्रकाराः. तत्र यदपीत्यादिसमासोक्त्या पतङ्गपदोपात्तस्य तीर(?)स्य श्रवणमननसिद्धावपि परोक्षानुभवेन परोक्षस्यैव दोषत्रैराश्यस्य हानिः, तत्प्रयुक्ता कियतां क्लेशानां हानिः सिध्यति, तदप्यपरोक्षमोहजनितो रागादिर्न विरमतीति साक्षात्कारसिद्धये तृतीयाङ्कावतार इति बिन्दुरपि सूचितः. २. श्रवणमननाभ्यां संसारविषयकालं प्रत्ययरूपस्य आत्मावमानरूपस्य वा निर्वेदस्य दृढभूमिकता स एव विवेकः. विवेकिनस्त्वायतिमालोचयन्तः संसारसुखमपि कुपितफणिफणामण्डलच्छायप्रतिममित्यपजहतीति टीकादर्शनात् निर्वेददृढभूमिके सति श्रद्धा विविदिषां साक्षाच्चिकीर्षां प्रसूते. तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति—'यज्ञेन दानेन तपसानाशकेन' इति श्रुतेः. विविदिषाव्यापारितपुरुषो निदिध्यासनादौ प्रवर्तते. सेयं निदिध्यासनपूर्वारम्भा विष्कम्भकेण प्रस्तूयते. ३. गर्धो नाम विषयबुभुक्षा। सा द्विधा—तृष्णा काम इति। तत्राप्यगर्धान्निर्विद्यते—'तेन हि' इत्यादि. ४. जीवता गर्धो न परिहर्तुं शक्यते. स हि सर्वजनस्य जठरानलसाध्यः, स चाजीवनमनुवर्तते इति श्रद्धया आक्षेपः.

दुर्जातेन जठरजातवेदसा। न जातु कोऽपि जन्तुरनेनानभिजातेनागोचरीकृतो जीवति। पश्य।

का मैत्री मरुता समं हुतभुजो भौमस्य यद्वायुना
स्पृष्टः प्रज्वलति प्रतीपवलनां धत्ते च वैश्वानरः।
तथ्यं प्राणसमीरकोष्ठशिखिनोः सख्यं यतस्ताविमौ
विश्वेषामुदरं सहैव विशतः काले सहोत्क्रामतः॥ २॥

किंच महदनादरबीजमिदम्, यदकिंचनता नाम, यया गृहीतो धनोपायमनुसरन्नै[1]वगृह्यते जनः। पश्य।

कन्यारत्नं हयपरिवृढं नागराजं मणीनां
श्रेष्ठं दत्वा विबुधपरिषत्तोषिता सागरेण।
धिग्दारिद्र्यं परिभवपदं यस्य दोषात्पुरारे-
र्मूर्ध्नि क्षिप्तो वि[2]बुधविघसग्रासपिण्डस्य खण्डः॥ ३॥

**निर्वेदः**—[3]जननि, गर्ध एव गर्हामूलममुष्य, न पुनरकिंचनता। तथा हि।

[4]जातिं विहाय कनके रमते पशूनां
भर्ता बिभर्ति शिरसा कृपणः कपर्दम्।
राजेति वक्रशशिनं तिलकीकरोति
तस्मादसौ परिभवास्पदमीश्वरोऽपि॥ ४॥

**श्रद्धा**—[5]वत्स, न तथा किमपीतरद्वस्तुगर्धगोचरो यथा स्त्रियो नाम।

**निर्वेदः**—शान्तम्। अविषयो विदुषाम[6]भिलाषस्य मानुषगणः। विशेषतस्तु

१. तव दारिद्र्यदुःखपरिहाराय धनगर्धोपि न परिहर्तुं शक्यते इति भावः. २. चन्द्रस्य. ३. प्राणयात्रामात्रगोचरो गर्धो यावज्जीवमवतिष्ठत इति बाढम्. तथाप्यधिकधनगर्धः सुपरिहरः, स एव च परिभवायेत्याह—'जननि' इति. ४. उन्मत्तकुसुमे मालतीं विहाय मोदते; पक्षे—जातिव्यवहारमुल्लङ्घ्यापि सुवर्णार्जने यतते. कपर्दं जटाजूटं वराटकं वा. राजेति चन्द्रमसो नाम. ५. कामं निन्दितुं प्रस्तौति. ६. 'अनुरागस्य' इति पाठः.

अशुचिवपुषामेषां मध्येऽप्यमेध्यतमाः स्त्रियः
क्वचिदपि न हि श्रौते कर्मण्यमूरधिकुर्वते।
विगलदसृजःपूयग्रन्थिप्ररूढदुरुद्धर-
द्विपदकृमयो नित्यं यासां गलन्त्यधरव्रणाः॥ ५॥

**श्रद्धा**—वत्स, प्रबलयोरनयोर्गधकामयोर्विरामाय किमपि यतते श्रुतिः।

**निर्वेदः**—मातः, तदभिसंधाय दुहितरं प्रमितिमर्पयति स्म पुरुषाय।

**श्रद्धा**—वत्स निर्वेद, जानासि पुरुषमाश्रित्य वर्तते श्रौती प्रमितिः।

**निर्वेदः**—परैः प्रसह्यापहृतामपि प्रमितिमान्वीक्षकी प्रत्याहृत्य पुरुषसादकरोत्। परं तु

परबलपरिमर्दायासतान्तां[१] नितान्तं
पुरुषमुपगतान्तां कापि शङ्का पिशाची।
अविशदवशमस्या येन सर्वं शरीरं
प्रभवति न कथंचित्कर्मणः साधनाय॥ ६॥

पिशाचावेशविवशां प्रमितिं तनयां श्रुतेः।
न श्रद्दधाति पुरुषः प्रमाणयतु तां कुतः॥ ७॥

पठति चायमतिमात्रप्रवृद्धमहामोहः पुरुषो दुरक्षराणि।

'अपरिचिततातजन्मा श्रुतिरभिजातिं न चेद्भजते।
कथमनभिजातवंश्यां प्रमितिं पुरुषः प्रमाणयतु॥ ८॥'

इति।

**श्रद्धा**—ततस्ततः।

**निर्वेदः**—ततो भगवती श्रुतिरान्वीक्षकीमादिष्टवती—'घटय पक्षतया परामर्षम्। प्रभवति हि दुर्घटघटने त्वदनुशिष्टानां कथानां प्रथमा' इति।

**श्रद्धा**—तत्किं घटितः पक्षतया परामर्षः।

**निर्वेदः**—न केवलं घटितो, यावदनुमितिं नाम कन्यकामजनयत्। तामिमां[२] दारिकाम्, अन्तःकरणाय बादरायणी, बुद्धिसत्त्वाय कापिली,

१. 'तान्तं' इति पाठः. २. अनुमितिरन्तःकरणस्य वृत्तिरित्यौपनिषदाः. प्रकृतिपरिणामस्य बुद्धिसत्त्वस्य महतो नामेति सांख्ययोगौ. प्रवृत्तिविज्ञानसंततावन्तर्भूतेयमालयविज्ञानसंततौ समवैतीति सौगताः. पुरुषाणामेवासौ गुण इति नैयायिकादयः.

चिदालयसंतानाय सौगतीसंहिता दातुमारभते । गौतमी काणादी जैमिनीया च पुरुषसात्कर्तुमीहन्ते ।

**श्रद्धा**—अपि नाम सिद्धये संपद्येत पुरुषानुमित्योः संगतम् ।

(प्रविश्य)

**विविदिषा**—भगवति श्रद्धे, पुरुषस्त्वां द्रष्टुमिच्छति ।

**श्रद्धा**—पुरुषः प्रथमं तथाभजमानामपि मां निराकरोत् । अधुना मम केन हेतुना वदनालोकनमीहते शठः ।

**विविदिषा**—भगवति, सांप्रतमनुमित्या सह संगतः पुरुषस्तस्या जल्पितेन बोधितः श्रौतीं प्रमितिं भवतीं च बहु मन्यते । शशाम किलानुमितिजल्पितेन श्रौतप्रमितेः पिशाचावेशः, पुरुषस्य च श्रुतावनभिजातभ्रमः ।

**श्रद्धा**—कथय कीदृशमनुमितिजल्पितम् ।

**विविदिषा**—एवमाह पुरुषसंगतानुमितिः—

'भुवनघटनभङ्गौ निर्मिमाणस्य यस्य
प्रभवति परमाणुप्रेरणाय प्रयत्नः ।
परिणतिहितहेतौ[2] विश्ववृत्तिं[1] विधत्ते
विधिवचनविधातुस्तस्य पुंसो नियोगः ॥ ९ ॥

अपि च ।

यस्य त्रैगुण्यशक्तिद्रढिमभरवतः सिद्धिलिङ्गानि कार्यं[3]
वाक्यं संख्याविशेषश्रुतिपदधृतयः प्रत्ययायोजने च ।
कर्ता कार्यस्य धर्ता भुवननिगमयोः संप्रदायप्रवक्ता
विश्वस्याश्वासमूलं स जयति पुरुषश्चेतनाराशिरेकः ॥ १० ॥'

---

१. यज्ञादौ विश्वस्य प्रवृत्तिम्. २. ज्ञानेच्छाप्रयत्नाः. ३. कार्यं जन्यभावः संख्याविशेषः, सर्गाद्यकालपरमाण्वादिसंख्यापदं व्यवहारः, धृतिर्ब्रह्माण्डादेः प्रलय आश्वासः, आयोजनं परमाण्वादिषु आरम्भजनकं सर्गाद्यकालीनं कर्म । अथ वा कार्यं विधिरासाभिप्रायः । विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे प्रमाणमिति सर्वं कुसुमाञ्जलावनुसंधेयम्.

**श्रद्धा**—घटितः प्रमित्यानुमित्या च पुरुषः। सांप्रतमवसरोऽस्य सिद्धिसंगमाय।

**निर्वेदः**—भगवति, भगवान्पतञ्जलिः संयमदुहितुः सिद्धेः पुरुषसंगमाय व्यवस्यति।

**विविदिषा**—भगवति श्रद्धे, सखे निर्वेद, सर्वे वयमुपसर्पाम पुरुषम्।

(इति निष्क्रान्ताः सर्वे।)

**इति विष्कम्भकः।**

---

(ततः प्रविशति पतञ्जलिः।)

**पतञ्जलिः**—प्रसादयति बुद्धिवृद्धिमसौ चतुर्दशो निशामुहूर्तः।

परिणतनिशाकेशस्तोमे प्रभापलितोन्मुखे
भजति तमसश्चक्रे चक्रीवदङ्गपिशङ्गताम्।
अपगतगुणद्वन्द्वासत्त्वे स्थिता समयक्रमा-
न्मलिनविषयाकारस्पर्शं विमुञ्चति चेतना॥ ११॥

(निरूप्य।) नूनमवसानदशायां वर्तते विभावरीतुरीययामः।

निर्वान्त्यः पुनरुद्भवन्ति भवने प्रातःप्रदीपत्विषः
प्रान्तेभ्यो मुहुरन्तरं विविशते निर्याति चान्धंतमः।
औदर्यानलमान्द्यदोषशमनीमासेवमानः क्रियां
सौधो धूममिव प्रणालनलकैः पीत्वायमुन्मुञ्चति॥ १२॥

अपि च।

सौधस्य प्रतिफलितं निकुञ्जगर्भे-
ष्वभ्यर्णोन्मिषितकपोतनादपुष्टम्।
एकस्याप्यनुगुणने कृतोद्यमस्य
स्वाध्यायध्वनितमनेकधा विभाति॥ १३॥

---

१. उपनायकः पुरुषः। तदिति वृत्तं प्रासङ्गिकं व्यापकं च पताकेत्युच्यते। पताकप्राप्त्याशायोगाद्गर्भसंधिः। प्राप्त्याशा तु मुहुर्विघ्नैः प्रतिहन्यमानः फलानुकूलो व्यापारः प्रादेशिकमितिवृत्तम्। प्रकरो यथा रामचरिते श्रावणवृत्तान्तः। तथेह पतञ्जलिव्यापारः। स चेह नियताप्तिसंवलितो विमर्षसंधिरित्यादि यथायथमनुसंधेयम्.

(नेपथ्ये ।)

नाथ, कथमुपेक्षसे ।

[1]क्व जगति कतमाह्निकस्य हेतो-
रहमिह बद्ध इति त्वमेव वेत्थ ।
स्वमपि यदि न चेतये न च त्वां
मम करुणामय तत्र कोऽपराधः ॥ १४ ॥

**पतञ्जलिः**—अहह, करुणानि चिरात्प्राप्तचेतनस्य पुरुषस्य पुरुषोत्तमं प्रति परिदेवितवचनानि ।

(पुनर्नेपथ्ये ।)

हन्त भोः,

[2]अविदितगतिना प्रमादनिद्रा-
मुषितमतिः कि[3]तव त्वयास्मि बद्धः ।
कथमिव मम दृष्टिवर्त्मवर्ती
[4]भवपथतस्कर बन्धने [5]प्रभुः स्याः ॥ १५ ॥

**पतञ्जलिः**—हन्त, पुरुषस्य परममात्मानं दिदृक्षमाणस्य भगवन्तं प्रति बलवदेतान्युपालम्भाक्षराणि ।

(नेपथ्ये ।)

अये, आयतुमायकिमायासयसि दीनजनम् ।

कि[6]तव तव वशे ममेन्द्रियाणि
श्रुतिविषयावधिवर्तमानदृष्टेः ।

---

१. अन्योऽपि हि कारागारप्रसूतो दस्युदारकादिर्बन्धकर्तारमात्मानं च न परिचिनोति, न चायमपराध्यति पित्रोरपराधादिनेति मोचयितुमेवोचितः. २. अविदितेति । गति-र्विचेष्टितम्, पदसंचारो वा । तथा च निभृतपदमागत्य तस्करेण निद्रादशायां बद्धस्य जाग्रद्दशायामभिमुखातप्रतिभटनिवारपटोः पथिकस्य वृत्तान्तो ध्वननगम्यो भगवद्बद्ध-पुरुषवृत्तान्ते तादात्म्येनाध्यारोपितः—इति गुणीभूतव्यङ्ग्यतावृत्तान्तयोः, उपमाध्वनिर्वा. ३. दृश्यन्ते हि तव निवर्तनाभिप्रायेण प्रवर्तनादयः कूटव्यवहाराः. ४. न हि त्वद्दर्श-नात् परतो भवाध्वनिकोऽपि संसर्तुं क्षमते. ५. त्वद्दर्शिनां त्वद्व्यापारेणापि बन्धो न संभवतीति भावः. ६. तव सन्निहितप्रपञ्चतया कितवत्वम् । जगदपक्रमकारणत्वाच्च मुखत्वम् । जगतो मुखमसि चेत् सुतरां ममेति । तव हृषीकेशस्य वशे सर्वेन्द्रियाणि त्वद-

मुखमसि जगतो न वेद्मि दृष्टौ
त्वमवतरिष्यसि केन दर्पणेन ॥ १६ ॥

**पतञ्जलिः**—नूनमसौ विविदिषया गाढमुपगूढः पुरुषो निर्विद्य परमात्मदर्शनोपायमनुसरति।

(नेपथ्ये।)

हन्त, सांप्रतमायासनिःसहोऽस्मि।

[1]बहुविध भवभूमिकाभिराभि-
र्नटयसि नाथ यथा तथा नटामि।
कृपण गमयिता भवानविद्या-
जमनिकयान्तरितः कियन्त्यहानि ॥ १७ ॥

**पतञ्जलिः**—हन्त, द्रवयन्ति मम चित्तवृत्तिमेतानि विविदिषतः पुरुषस्य निर्वेदोपबृंहितानि परिदेवितानि। तत्संघटयामि [2]सिद्धिममुना। तया सह पश्यतु परमात्मानम्। कः कोऽत्र भोः।

(प्रविश्य।)

**बटुः**—उपाध्याय, शाण्डिल्यो जाबालिरभिवादये।

**पतञ्जलिः**—वत्स, स्फुरतु ते परं चापरं च ब्रह्म। आयुष्मन्, निरुध्यन्तामन्तरायभूताश्[3]चित्तवृत्तयः। पुरुषसंगमाय सिद्धिमभिसारयतु महाव्रतनामा मम कञ्चुकी।

---

धिष्ठितान्येव प्रवर्तन्ते। मुखे च घ्राणरसनचक्षुःश्रोत्राण्यन्तर्भवन्ति। तत्र दृष्टिर्वेदैकविषयधर्माधर्मपर्यन्तं प्रवर्तते। मुखस्यापि दीर्घा दृष्टिः श्रवणदेशावधि तिष्ठति। स्वमुखं च स्वयं दर्पणं विना न दृश्यते, त्वमपि निर्विकल्पसमाधिमुकुरप्रतिफलितो दृष्टिपथमवतरिष्यसि। तदुपायोऽधुना जिज्ञासित इति समुदायार्थः.

१. अत्र नृत्तावसानपारितोषिकार्पणभीत्या नाटकपरिसमापयतावान्तरप्रसादयाचनभयादन्तर्धाय निरीक्षमाणेन कुतुकिना कृपणेन प्रभुना चिरमनेकभूमिकाभिर्निर्देशमात्रेण नर्तितस्य निर्विण्णनटस्य वृत्तान्तः पुरुषवृत्तान्ते गुणीकृत्याध्यारोपितः। अत एव पुरुषे निर्वेदभावो व्यञ्जनापथमवतरति। अप्रस्तुतप्रशंसास्वीकारे तु नटमालम्ब्यैव निर्वेदः सामाजिकाय स्वदेत. २. सिद्धिर्योगजो धर्मः, स एव भगवत्साक्षात्कारहेतुरिति कुसुमाञ्जलौ स्थितम्. ३. 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जलं सूत्रम्.

(प्रविश्य ।)

[1]महाव्रतकापालिकः—एशे म्हि हके । कीश आणवेदु भावे । (क)

जाबालिः—(सभयम् ।) क एष नरकपालमालया भीषणकलेवरः सुराचषकास्वादकषायलोचनः समुच्चित इव नरकराशिरुपाध्यायमनुधावति ।

पतञ्जलिः—वत्स, पाषण्डमहाव्रतसिद्धान्तोऽयम् । अलमनेन ।

महाव्रतकापालिकः—ममं पि तुए णत्थि पओअणम् । (ख) (इति निष्क्रान्तः ।)

पतञ्जलिः—वत्स महाव्रत, सार्वभौमः साधयतु पुरुषम्, अभिसारयतु च सिद्धिम् । यस्य खलु

[2]जात्यादेशेन कालेन व्यवस्थाभिरविप्लुतम् ।
हिंसारत्यनृतस्तेयपरिग्रहविवर्जनम् ॥ १८ ॥

(नेपथ्ये ।)

अयमसौ बध्नाति पञ्चप्रकारं परिकरं पुरुषप्रसाधनाय सार्वभौमो महाव्रतानाम् । न पुनर्दवीयसी सिद्धिरनेनाभिसारयितुं शक्यते ।

पतञ्जलिः—वत्स जाबाले, नियमगणो यमानामग्रतो भूत्वा सिद्धिमाहरतु ।

(प्रविश्य ।)

निर्जरः—एशे म्हि अलिहन्तशासणशलाहणिज्जे णिज्जलेणाम णियमे । (ग)

---

(क) एषोऽस्म्यहम् । किमाज्ञापयति भावः ।

(ख) ममापि त्वया नास्ति प्रयोजनम् ।

(ग) एषोऽस्म्यहमहच्छासनश्लाघनीयो निर्जरनामा नियमः ।

---

१. कापालिका हि 'रुद्रो ह वै महाव्रतं चकार स नरशिरः कपालं दधार' इति श्रुतेर्भगवतो भैरवस्य कपालधारणाच्च तदेव महाव्रतमिति मन्यन्ते. २. 'ब्राह्मणो न हन्तव्यः' इति जात्या, 'तीर्थे पर्वणि यज्ञं विना कोऽपि न हन्तव्यः' इति कालदेशव्यवस्थाभिर्नियमिनाहिंसा । एवमस्तेयम्, सत्यम्, ब्रह्मचर्यम्, अपरिग्रहश्च कालजातिदेशव्यवस्थानियमितश्चेत् तदा यम इत्युच्यते । स एव 'कोऽपि कदापि कुत्रापि कथमपि न बध्यः' इत्यादिरूपो महाव्रतमित्युच्यते.

**पतञ्जलिः**—(विलोक्य ।) वत्स, [1]निर्याप्यतामयमार्यजनगर्हणीयः पुद्गलाधमः, योऽयमस्नानमौनमलपङ्कधारणतिष्ठद्भोजन्तप्तशिलाधिरोहणकेशोलुञ्चनादिना जीर्यति जीवाजीवसीवनहेतुः संवर इति मन्यते।

**निर्जरः**—हदाशा, तुमंपि शावआह पलिअलिदव्वदंशणेत्ति शअं जेव्व शाहमि। (क) (इति निष्क्रान्तः।)

**जाबालिः**—भगवन् उपाध्याय, [2]नियमगणो निवेदयति—'अन्यदपि दवीयसी सिद्धिः। अतः पुरुष एवास्माभिस्तपसा स्वाध्यायेनेश्वरप्रणिधानेन च पावनीयः' इति।

**पतञ्जलिः**—बाढम्। अर्पयतु कर्माणि विश्वनिर्मातरि पुरुषोत्तमे प्रणिहितः पुरुषः।

(नेपथ्ये।)

अरे करुणामहार्णव,

[3]स्वरसमपि वरं न भोक्तुमीहे
हर मम संवलसंचयं गृहाण।
उपदिश कतरद्विदूरयात्रा-
श्रमशमनं भववर्त्मनोऽवसानम् ॥ १९ ॥

**पतञ्जलिः**—श्लाघ्यमिदं वैराग्यमुमुक्षयोरनुरूपं पुरुषस्य वचनम्।

---

(क) हताश, त्वमपि श्रावकस्य परिहरणीयदर्शन इति स्वयमेव साधयामि।

---

१. दिगम्बरा हि सप्त···लान्मन्यन्ते। जीवो विहङ्गप्रकृतिः, अजीवो देहादिः, यस्य मलेन निर्मलस्यात्मनो भोगः, आस्रवा इन्द्रियाणि, संवरो जीवाजीवतादात्म्याभिमानः, निर्जरस्तपः, बन्धोऽज्ञानम्, मोक्षो निरावरणता. २. तपःस्वाध्यायेश्वरप्रणिधानानि नियमाः—इति पातञ्जलम्। तत्र तपश्चान्द्रायणादि, स्वाध्यायः प्रणवजपः, प्रणिधानं कर्मार्पणम्. ३. स्वरसं स्वर्गादिफलकम्। अत्र पथविरामविश्राममात्रकामुकस्य संवलोपभोगविरक्तस्य दूरपथिकस्य वृत्तान्तः संसारसुखविमुखस्येश्वरे कर्माण्यर्पयतो मुमुक्षोर्वृत्तान्ते तादात्म्येनाध्यारोपितः पुरुषमालम्ब्य श्रमविषादनिर्वेदानुल्लासयति स्वादयति प्रेयांसं नाम भक्तिरसम्. [संवलः पाथेयं प्रतिवसति भोग्यत्वात्.]

(पुनर्नेपथ्ये ।)

सकलमपि[1] मया स्वकर्मबीजं
त्वयि वृषवाह समर्पयांबभूवे ।
तव मम च न चेत्फलं प्रसूते
कथमधुनाप्यहमेव दोषभूमिः ॥ २० ॥

पतञ्जलिः—स्वदोषक्षयाशंसनपिशुनोऽयमस्य पुरुषोत्तमं प्रत्युपालम्भः ।

(नेपथ्ये ।)

अये नित्यप्रबुद्ध,

मम[2] भवपथिकस्य कर्मभोग्यं
प्रलयनिशि त्वमपालयः शयालोः ।
इति सकलमकिंचनो बुभूषुः
प्रहरकवेतनमेतदर्पयामि ॥ २१ ॥

पतञ्जलिः—साधु, तावदिदं व्यपदेशेन भगवति सर्वकर्मणामर्पणम् ।

(नेपथ्ये ।)

भगवन्[3], अवतर नयनवर्त्मनीत्येवाशास्महे । न खलु त्वया नेदीयसोप्ताः फलन्ति क्षेत्रज्ञक्षेत्रे कर्माशयाः[4] । पश्य ।

---

१. अन्यो बीजस्वामी स्वबीजानि हलवृषवाहके समर्प्य स्वयं निर्दोषो भवति । सस्यानुत्पत्तौ हलवाहको दैवं वापराध्यति । मया तु त्वयि धर्माधिष्ठातरि वृषभवाहने कर्माण्यर्पितानि, तानि च निर्दोषतया मयि निष्कामतया फलं न प्रसुवते, मम तु दोषाः रागद्वेषमोहा न विरमन्तीति व्यतिरेकव्यञ्जनमुखेन दोषक्षयाभिलाषं भावमुल्लासयति. २. प्रलये निरुद्धवृत्तेः भवपथिकस्य पुरुषस्य कर्मणामवेक्षणम् पुरुषोत्तमकर्तृकम् निशि यामिकेन पथिकोपभोग्यसंवलपालनत्वेनाध्यवसीयते । तच्च सकलोपभोग्यकर्मणां ब्रह्मणि पुरुषकर्तृकमर्पणम् । प्रतीतिशब्देन हेतुरित्युच्यते । कर्मार्पणे प्रहरकवेतनत्वेनाध्यवसिते संवलपालनाभेदेनाध्यवसितकर्मावेक्षणस्य हेतुताध्यवसायसंभवत्वात् । वरमेतावतेतिशब्दोपात्तहेतुतोपपादकतया व्यङ्ग्यार्थस्य गुणीभूतव्यङ्ग्यत्वमनुमन्यते. ३. सकलमपीत्यादिना दोषक्षयाशंसा व्यञ्जिता । अधुना तु दोषक्षयोऽपि कर्मफलानुत्पत्त्यर्थमपेक्ष्यते । सा च त्वद्दर्शनान्तरीयकफलत्वात् पृथक्तया नाशास्यत इत्याह—'भगवन्' इति । एतेन कर्मार्पणमपि त्वद्दर्शने चरितार्थमित्युक्तं भवति विरहितभोग्यभोग्येतिपरिकरेण दुर्भगहालिकोपमा वृषाङ्कस्य व्यज्यते । वृषाङ्कपदयोगार्थस्तु साधारणो धर्मः. ४. फलपर्यन्तमाशेरते इत्याशया अदृष्टानि.

यदि विरहितभोगभायदूरा-
द्वयसि वृषाङ्क तदा फलानि सूते।
स्वपदमुपदधासि यत्र तस्मि-
न्भवति कडङ्गरमेव कर्मबीजम्[1] ॥ २२ ॥

**पतञ्जलिः**—वत्स जाबाले, सत्यमाह पुरुषः। भगवति परात्परे दृष्टे स्वत एव क्षीयन्ते कर्माणि। तदस्मै सूनृतमधुरवचसे तावदासनमुपनीयताम्।

**जाबालिः**—इदमर्हदनुशासनावशिष्टं वीरासनमुपतिष्ठते।

**पतञ्जलिः**—नहि नहि। मृदुस्थिरं सुखमासनमुपनीयताम्।

स्थिरसुखवृषी निषण्णः प्राणानायास्य दीर्घपथदूनान्।
प्रत्याहृतेन्द्रियगणो विश्राम्यतु निर्भरं पुरुषः[2] ॥ २३ ॥

(नेपथ्ये।)

प्रत्याहृतानि विषयेभ्यः करणानि।

वहति करणमान्तरं स्ववृत्तौ
बत विलयं बहिरिन्द्रियव्रजस्य।
कमठ इव कठोरपृष्ठकुक्षौ
चरणचतुष्टयकन्धरामि कोचम् ॥ २४ ॥

**पतञ्जलिः**—तदधुना ध्यायते धारयते समादधते पुरुषाय संयमो दुहितरं प्रयच्छतु सिद्धिम्[3]।

**जाबालिः**—आचार्य, किमेतत्। पश्य तावद्दिवापि दीप्यमाने दिवाकरे

कर्पूरैः परिपूरिता इव बिसच्छेदैर्विकीर्णा इव
प्रालेयोपलसंचिता इव सुधासिन्धौ निमग्ना इव।

---

१. तुच्छसस्यम्. २. एतावता यमनियमासनप्राणायामप्रत्याहाराणां संपत्तिः सूचिता। तत्र प्रत्याहारो बहिर्वृत्तिनिरोधेनान्तःकरणमात्रस्य वृत्तिप्रसरः. ३. विषयान्तरोपरक्ते ब्रह्मणि प्रत्याहृतचित्तस्य निवेशनं धारणा, तत्परम्परैव ध्यानम्, विषयान्तरपरिहारेण ब्रह्मध्यानं समाधिरिति त्रयाणां समुदितानां संयम इति संज्ञा। स एव दृढभूमिः सिद्धिं नाम योगजधर्मं जनयति.

कस्मात्कैरवकाननस्मितरुचा संबन्धिनां कौमुदी-
मुद्रीवप्रचरच्चकोरतरुणी पीतां दिशो बिभ्रते ॥ २५ ॥

**पतञ्जलिः**—वत्स, इयमसौ पुरुषमभिसरन्त्याः सिद्धेः शरीरज्योत्स्ना कृत्स्नमपि जगदुद्द्योतयति।

**जाबालिः**—आचार्य, क एष कतिपयपुरुषपरिवारितो रुचिविजितराजपट्टो राजलक्ष्मीलाञ्छितो विद्रुत्य वने निलीयते।

**पतञ्जलिः**—वत्स, क्षेत्रज्ञनगरनरपतिरसौ तामसप्रकृतिर्महामोहः सिद्धिकौमुदीवृद्धिमसहमानो रिद्र(?)वनकुमाराभ्यां द्वेषरागाभ्यामनुगम्यते।

**जाबालिः**—कथमिदमाचार्येण राजविद्विष्टमनुष्ठितं कर्म, यदसौ सिद्धिः पुरुषप्राप्त्या परमप्रगल्भतां नीता।

**पतञ्जलिः**—श्रुतिनिर्देशवशंवदा वयमस्वतन्त्रास्तया प्रेरिताः प्रवर्तामहे।

**जाबालिः**—ननु महामोहपरिवारेष्वेवान्तर्भूतेयमिति विश्वजनीनवृत्तिरतिनृशंसमनुतिष्ठति भगवती। तथा हि।

इयतो दिवसानसौ श्रुतिस्तनयौ मोहपतेरलालयत्।
चरमे वयसि स्थिता कथं बत विश्वस्तवधं विधित्सते ॥ २६ ॥

**पतञ्जलिः**—वत्स, निसर्गसुन्दरस्यापवर्गस्य साम्राज्यमभिसंधाय सर्वमचेष्टत भगवती श्रुतिः। सर्वा एव रागद्वेषलालनविधिव्यासेधप्रवृत्तयो निवृत्तिपराः। निवृत्तिः सान्वयमहामोहोन्मूलनपरेति।

**जाबालिः**—एवमनया सिद्ध्या नगरविषयान्निर्वासितोऽपि सूक्ष्मविषयवननिलीनो महामोहः केन व्यापारेण प्रापणीयः परं लोकमिति।

**पतञ्जलिः**—

पूर्वं प्रमित्या परतोऽनुमित्या सिद्ध्या ततोऽस्मिन्पुरुषे प्रसक्ते।
संगच्छमाने पुरुषोत्तमेन मोहः स्वयं प्राप्स्यति नाशमेषः ॥ २७ ॥

(नेपथ्ये।)

अरे पुरुष, किमितस्ततो धृतिमलभमानः किमपि वस्तु मृगयसे।

---

१. सिद्धिसंपदा स्थूलाभिमानो नश्यति, न तु सूक्ष्माणामन्तःकरणलिङ्गशरीरादिवस्तूनामभेदभ्रमः सिद्ध्या विरमति, किंतु विवेकात्.

शब्दाः श्रोत्रसुखाः पदार्थगुरवो रूपाणि चित्राणि च
स्पर्शाः पक्ष्मलकोमलाः सुरभयो गन्धा रसाः स्वादवः।
लोका भोगमया गुणाः प्रगुणतां प्राप्ताः स्वतन्त्रा गतिः
सिद्ध्या सार्धममीषु वत्स विहरञ्जीव्याः सहस्रं समाः॥ २८॥

**पतञ्जलिः**—इयमसौ मधुमती[1] महामोहप्रेरिता पुरुषोत्तमदर्शनविरोधिषु विषयभोगोपसर्गेषु पुरुषं व्यापारयति।

(नेपथ्ये।)

भगवति[2] नियते विदूरयात्रासहचरि संसरणाध्वनोऽयमन्तः।
जरति विरम निःसहासि संविन्नगरमतः परमद्वयोपभोग्यम्॥ २९॥

**पतञ्जलिः**—साधु वत्स, नियतिरपि त्वयावधीरिता, का नाम मधुमती। तदचिरादेव संयमदुहितृसिद्धिधर्मव्यापारेण पुरुषोत्तममासादयिष्यसि। वत्स शाण्डिल्य, सिद्धमस्मत्साधनीयम्। अधुना चामुना व्यापारेण न चेतितं परिणतमहः। तथा हि।

पश्यामि ध्रुवधामतोरण[3]शिलादारुस्खलत्केतना-
दस्मात्सौधनिकेतनाज्जलनिधेः संध्यापिशङ्गीरपः।
विक्षिप्तान्परितो हरित्सु युगपत्संक्षिप्य पादानसौ
यासां कुक्षिबिले निर्मङ्क्षति[4] जगत्कासारकूर्मो रविः॥ ३०॥

अपि च।

पौरस्त्येतर[5]सिन्धुनायकपयःपूराजिरे चुम्बित-
द्राघीयः[6] प्रतिबिम्बमम्बरतटव्यालम्बि बिम्बं रवेः।

---

१. समाधिसाक्षात्कृतव्यवहितविप्रकृष्टवस्तुसमुत्थो भोगो मधुमती. २. 'न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः' इति श्रुत्या कर्मनिरपेक्षज्ञानसाध्ये फले केवलं साभिलाषतामभिव्यञ्जयती मधुमती भोगे समाधिधर्मसाध्ये सुतरामनभिलाषं व्यञ्जयति—भगवतीत्यादि। विरम स्वव्यापारमुपसंहर। संविन्नगरे आत्मनिर्विकल्पके। मोक्षहेतावद्वितीयस्य मम प्रवेशो विद्यते विषयतया, तव तु सहकारितयापि तत्र प्रवेशो नास्तीति हृदयम्. ३. तोरणं द्वारम्। शिलादारु अधःस्थितदारु। केतनात् पताकायाः। 'तोरणोऽस्त्री बहिर्द्वारम्' इति, 'अधःस्ताद्दारुणि शिला' इति चामरः। तथा च—'स्तम्भाधारभूतमस्थनि शिला' इत्यमरटीकायां क्षीरस्वामी. ४. मङ्क्तुमिच्छति, मज्जनं कर्तुमिच्छतीत्यर्थः. ५. पूर्वेतरे पश्चिमे. ६. जलोपरिगते रवौ दीर्घः प्रतिबिम्बः स्तम्भत्वेन, रविः कनककलशत्वेन, समुद्रः शक्रध्वजनिखननरङ्गवाटत्वेनाध्यवसीयते.

संध्यानाटकरङ्गवाटविषये शक्रध्वजं हाटक-
स्तम्भोत्तम्भितशातकुम्भकलशोपेतं समाधित्सति ॥ ३१ ॥

**जाबालिः**—भगवन् उपाध्याय, दर्शनीयमिदमग्रतः । पश्य ।

मग्नार्धो वरुणालयाम्बुनिधिमद्भूमोद्गमो[1] लक्ष्यते
[2]गोकर्णायतरश्मिसूचिजटिलः पृष्ठावशिष्टो रविः ।
वासश्वभ्रमभिप्रवेष्टुमवनीमर्माविधः श्वाविधो
व्याधास्त्रव्यधशोणिताक्तशललीशालीव पश्चाद्वपुः ॥ ३२ ॥

**पतञ्जलिः**—(निरूप्य ।) कथमयमामूलोत्खातमयूखजालविवरावलिजर्जरो गगननागरङ्गफलनिस्तलस्तुलितसंध्याभिषेकसहस्रधारताम्रकलशः सशिखमुण्डितरूणमुण्डपिण्डायमानमण्डलो भगवान्मार्तण्डो वारुणवरुणालये निमग्न एव । पश्य ।

धूमायते सिमसिमायितमातनोति
फेनायते विवृतबुद्बुदधारमम्भः ।
मग्नोऽपि पश्चिमसरस्वति दूरमाभि-
र्निर्द्धूयते न रविरच्छतराभिरद्भिः ॥ ३३ ॥

किं च ।

अद्भिः करप्रकरनिर्गमरन्ध्रमार्ग-
निःशूषिताभिरतिभारगुरूदरोऽर्कः ।
निर्वाति लुञ्चितकदम्बतुलामुपैति
क्षिप्रं निमज्जति च पश्चिमसिन्धुपूरे ॥ ३४ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति निदिध्यासनधर्मसंपन्नाम तृतीयोऽङ्कः ।**

---

१. उपतपत् तेजसो जलसंबन्धादुद्गतो धूमो धूम्रशल्यकमावर्ण्यसंपादकः. २. अङ्गुष्ठानामिकयोः प्रसारितयोरन्तरालपरिमाणं गोकर्णः.

चतुर्थोऽङ्कः।

(ततः प्रविशति पुरुषः।)

**पुरुषः**—हन्त हन्त, प्रसन्नं मे भगवता समाधिधर्मसिद्धिमुत्पादयता संयमेन। यतः।

कर्मभ्यः परमक्षिपाणिचरणश्रोत्रोज्झितं चेतना-
मात्रोपेतमितस्ततश्च फलितब्रह्माण्डलिक्षाचयम्।
आम्नायान्तनिकेतकोणशयितं पश्यामि मायाजर-
त्कन्थाग्रन्थिविदारणेन विवृतं वृद्धं परं पूरुषम्॥ १॥

(प्रणम्य।) भगवन् आपन्नकरुणानिधे,

विषमनिगमकाननान्तशाखाव्यतिकरवेष्टितमूर्तये नमोऽस्तु।
बहुतरजगदण्डबीजपूरप्रसवफलेग्रहिपादपाय तुभ्यम्॥ २॥

(प्रविश्य पटावृतः पुरुषोत्तमः।)

**पुरुषोत्तमः**—अरे पुरुष, कच्चित्त्वया दृष्टमात्मनः स्वरूपम्।

**पुरुषः**—भगवन् अनादिनिधनचिदानन्दनिधे,

जगदिदमुपजीवयत्यविद्यातिमिररिपौ त्वयि न स्वमप्यवैमि।
प्रतपति तपनातपे तप(पा)र्तो भजति यदान्ध्यमसावुलूकलोकः॥ ३॥

**पुरुषोत्तमः**—अपि त्वया विदितो मम महिमा।

**पुरुषः**—अपारमहिमन् अनन्त,

बहुतरजगदण्डभारभर्तुर्नहि महिमानमहं तवावयामि।
मशक इव शलाटुगर्भजन्मा विटपबृहत्त्वमुदुम्बरद्रुमस्य॥ ४॥

**पुरुषोत्तमः**—एवमप्यनन्यशरणः कथं मामाश्रितवानसि।

**पुरुषः**—भो भूतभावन,

---

१. 'परं कर्मभ्योऽमृतत्वमानशुः' इति श्रुतेः. २. 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति श्रुतेः. ३. चेतनापदेन ज्ञानेच्छाप्रयत्ना उच्यन्ते, मात्रपदेन शरीरेन्द्रियाणि व्यवच्छिद्यन्ते. ४. प्रथमं बहिरर्थावृत एव आत्मा प्रकाशत इति. ५. आमफलं शलाटुः.

भवदभिमतमेव सेवमानो हितमहितं च वृथा त्वयास्मि बद्धः ।
तदपि कतममाश्रये शरण्यं बत परवानितरः पतिस्त्वमेकः ॥ ५ ॥

**पुरुषोत्तमः**—कथमात्थ मदीहितमिदं वृथेति ।

**पुरुषः**—नाथ, विमृशन्नपि नेदमवधारयामि किमत्राभिसंहितं भगवतः । यतः ।

नव इव वशगो भवामि यासामहमपहस्तितसर्वभूतपूर्वः ।
[1]प्रकृतिचरितनाट्यसूत्रधार भ्रमयसि मामियतीषु भूमिकासु ॥ ६ ॥

**पुरुषोत्तमः**—ननु नटा इव भूमिकाभिः पुरुषा अप्यारोपिताभिः शरीरपरम्पराभिर्हासयन्तीति तावत्प्रथमं मम संसारप्रवर्तने निमित्तम् ।

**पुरुषः**—हन्त भोः, अद्यापि मामनुकम्पस्व ।

वरमुपहसनीयवर्णिकोऽहं विविधविकारविडम्बितस्वरूपः ।
तदपि [2]कृतकहासमात्रहेतोर्विरम निवारय निःसहोऽस्मि मायाम् ॥ ७ ॥

**पुरुषोत्तमः**—केन हेतुना मयानुकम्पनीयोऽसि ।

**पुरुषः**—ननु ममानन्यशरणतया त्वदायत्तता प्रथमो हेतुः । पश्य ।

भवदभिरुचितासु मे क्रियासु व्यवहरतोऽनुदिनं हिताहितासु ।
जननिधनबन्धमोचनेषु प्रभुरसि भूतपते तवास्मि दासः ॥ ८ ॥

**पुरुषोत्तमः**—कथमनन्यशरणोऽसि । स्मरसि नाम मामचिन्तयन्नेव चिरतरममीषु विविधप्रकारेषु कलेवरेषु विहरमाणो गमयसि स्म समयम् ।

**पुरुषः**—एवमेतत् ।

पुरि पुरि विहरामहे भ्रमन्तः पुरहर पश्यसि भोगवञ्चितोऽस्मान् ।
किमिति न विहरेम नाथवन्तो वयमितरे त्वमनाथ एक एव ॥ ९ ॥

**पुरुषोत्तमः**—यदि मया नाथवानसि कुतो मामियन्ति दिनानि नाद्राक्षीः ।

---

१. प्रकृतिः माया । अन्यत्र नटभूमिकायां नरः । सोऽहमपि तु नट इति स्मर्यत एव, न च पूर्ववृत्तमनुपस्थितं भवति । अत्र तु भूमिकायां नव(र) इव वशीभवन्न स्मरति भूतपूर्वमिति व्यतिरेकः. २. कृतक एव तव हासः, न हि विकृतवस्तुदर्शनजन्मा हर्षो हासहेतुस्तव विद्यते.

**पुरुषः**—सखिद्विषदुदासीनेषु समवृत्तेस्तवायमकिंचनताविलासः।
[1]स्वपिषि न परकर्मसु प्रसक्तः परमुपभोजयतस्तव क्व भोगः।
परचरितमवैषि [2]निर्निमेषः [3]प्रकृतिदरिद्र न कोऽपि पश्यति त्वाम् ॥१०॥

**पुरुषोत्तमः**—कथमकिंचनोऽस्मि। तुभ्यमधुना समर्पयामि नूतनातिथिसमुचितान्भोगान्।

**पुरुषः**—गतः स भोगसमयः। संप्रति तु
[4]श्रुतिजनक रटत्यसौ कुमारी तव दुहिता बहिरेत्य नेति नेति।
व्यवहितनिकटस्थितोऽसि यस्मात्त्वयि मिलितेऽपि ममातिथेः क्व भोगः ११

**पुरुषोत्तमः**—हंहो पुरुष, प्रभवतो [5]ममापकर्षं सूचयता वचसा कुतो नापत्रपसे।

**पुरुषः**—प्रभुतोपकरणेषु परिजनेषु तथा तथा निष्कारणबन्धपीडनान्याचरतस्तवापि क्वागादपत्रपा घृणा च।
स्मरसि [6]कथमनन्यसाक्षिवृत्तां प्रभवकथाविधुरां निजामवस्थाम्।
पुनरपि न [7]चिराज्जनार्दन त्वां न परिचरिष्यति चेतनो द्वितीयः ॥१२॥

**पुरुषोत्तमः**—अक्षीणचेतनाकोषस्य मम न परिजनायत्ता प्रभुता।

**पुरुषः**—तव चैतन्यधनागमेऽपि विमर्षणीयमेतत्।

---

१. 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेः. २. 'न द्रष्टुः' इत्यादिश्रुतेः. ३. न तव कुत्रापि वस्तुनि परिग्रहः संभवति, लाभदायादीनां वित्तागमानामभावात्. ४. श्रुतिजनक नहि जनकान्यस्य पुंसः श्रुतौ स्वाम्यम्। बहिरेत्य करणगोचरतामागत्य। नेति नेति 'अथात आदेशो नेति नेति' इति श्रुतिः। व्यवहित इति व्यापकोऽपि न दृश्यते। त्वयि इति तैस्तैरुपायैरन्विष्य साक्षात्कृतेऽपि न भोगः, 'अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः' इति श्रुतेः. ५. अनया व्याजस्तुत्या कार्पण्यगर्हितगृहमेधितादात्म्येनाहमध्यवसितः. ६. 'एको ह वै नारायणः आसीत्' इति श्रुत्या त्वदन्यस्य सर्गादौ चैतन्याभावे त्वद्वृत्तमन्यो नाज्ञासीत्, न हि संसारिणां तदा प्रसवः शरीरपरिग्रहः. ७. जनानामर्दनकर्तेति परिकरेण क्रोधनप्रभुचरितमभिव्यज्यते.

मतिधनमितरे सुदीर्घनिद्रा[1]प्रवणधियस्त्वयि निक्षिपन्त्यतन्द्रे।
तदपहरणसंचितो न जातु [2]व्ययमुपगच्छति चेतनानिधिस्ते ॥ १३ ॥

**पुरुषोत्तमः**—ननु कर्मानुरूपफलदाय मह्यमसमञ्जसमसूयसि। कुरु तथा कर्माणि, प्राप्स्यसि सोमरसमवलिहन्नमरलोकम्।

**पुरुषः**—किमद्यापि मां विप्रलम्भसे।

व्यरमदवसरः स यत्र कर्मप्रकरमकार्षममर्त्यलेह्यलोभात्।
न पुनरपि पिबामि सो[3]मपात्रामृतदधि राहुबिडाललीढशेषम् ॥ १४ ॥

**पुरुषोत्तमः**—एवमतिकलहायमानेन त्वया मया सह विग्रहः किमारब्धः।

**पुरुषः**—परविग्रहरचनव्यसनितया तवैव कोपः क्षीयते। मम तु भवदुपरचितकोषनिकायस्वीकारलब्धात्मनो भोगाय विग्रहवत्ता। पश्य।

क्षितिविर्लेपिहितं जरायुपेशीस्थगितमथाण्डसमुद्गके निगूढम्।[4]
त्वयि रचयति विग्रहान्प्रसह्य द्रुहिण तवापहरामि [5]धातुकोषम् ॥ १५ ॥

अपि च।

परेषां वधबन्धार्थमुत्पादयसि विग्रहान्।
अविग्रहः स्वयं तूष्णीं ताटस्थ्यमवलम्बसे ॥ १६ ॥

**पुरुषोत्तमः**—कथं मम निसर्गनिर्मत्सरस्य खलताकलङ्कमुपन्यस्यसि।

**पुरुषः**—कः खलु खलो भवन्तमतिशेते।

---

१. परनिक्षेपापहरणसंचितधनस्य वसुव्ययमसहमानस्य कृपणस्य तादात्म्यमध्यारोप्य प्रथमतो गर्हा ततोऽपवर्गनिद्राप्राक्कालिकक्षणविनश्वरसाक्षात्कारविषयस्य भगवतश्चैतन्यघनस्याक्षयतया तदालम्बितो भक्तिभावः स्वदते. २. सर्वमुक्तौ जीवचैतन्याभावात्. ३. सोमस्थितामृतविरक्तस्य तल्लाभोपायभूते सोमलतारसे सुतरां विराग इति भावः. ४. तवायं सकलोऽपि धातुकोषस्त्वन्निर्मितत्वात्, स त्वया क्षितिविवरे जरायुपेश्यामण्डे च निगूढः शरीरस्योद्भिज्जरायुजाण्डजभेदात्। तं चाहमात्मसाक्षात्करोमि। तदेतद्विग्रहवचनायास्तव फलम्। शरीरघटना हि युद्धवचनत्वेनाध्यवसीयते. ५. धातूनां रसादिशुक्रान्तानां संचयः कोषः शरीरम्, स कनकादिधातुकोषत्वेनाध्यवसीयते.

[1]अचिरपरिचितो हरेः समूलं हरसि विशेषगुणव्रजं परस्य।
प्रथयसि खलतामिमामपूर्वां कथयसि यद्विगुणत्वमात्मनोऽपि॥ १७॥

**पुरुषोत्तमः**—निरस्तसमस्तविभ्रमस्य खलु कुतः खलत्वस्यावकाशः।

**पुरुषः**—ननु भवतोऽप्यन्यथावस्तूल्लिखन्ति विभ्रमाः।

मयि फलकतया त्वया कियन्त्यः प्रतिकृतयो लिखितास्तथा विलुप्ताः।
रजसि विगलिते विभूतियोगात्प्रमृज्[2]मलं मम पश्य [3]दर्पणोऽस्मि॥ १८॥

**पुरुषोत्तमः**—नित्यप्रबोधविधूतविधुरस्य मम न संभाव्यते भ्रमः।

**पुरुषः**—हन्त भोः, विविधविकारमूलमायाविलाससाक्षिणो दुष्टदु-[4]र्विपाकमप्रतिघ्नतस्तव प्रबोधो न कस्यापि निश्रेयसाय।

[5]अलमवगलितेन्द्रियप्रवृत्तेस्तव जरतः पुरुषस्य जागरेण।
प्रभवति दमनाय दोषदस्योः सपदि मनागपि मादृशां प्रबोधः॥ १९॥

अपि च कलत्रदुश्चरितमर्षस्येर्ष्याकषायमुषितमनसस्तव किमनेन प्रबोधेन।

विगतवि[6]परितोपदृष्टि पश्यन्[7]वशयसि यं पुरुषप्रकाण्डमायाम्।
प्रकृतिचपलया तया [8]विकारैर्बहुविधवर्णिकया वशीकृताः स्मः॥ २०॥

किं च।

प्रकृतिरियमनश्वरस्वभावा सृजति महान्तमसौ यतो वि[9]कारम्।
अविकृतमभिपश्यतः सतस्ते सह रमते ह्यनया [10]सखा त्वदीयः॥ २१॥

**पुरुषोत्तमः**—नन्वेवमपि मामबहुमन्यमानः कथमाश्रयितुमीहसे।

---

१. समूलविशेषगुणसामान्योच्छेदो मोक्षः, स त्वद्दर्शनसमनन्तरं भावी क्षणपरिचितखलतिरोहितपरगुणाभेदेनाध्यवसीयते। अन्यः खलः परगुणास्तिरोदधदपि स्वगुणानाविष्करोत्येव। त्वं तूपनिषद्वाक्यैः स्वस्यापि नैर्गुण्यमेव प्रकाशयसि। ततः खलान्तरव्यतिरेकः सूचितः। खलतापदोपात्तावगणनं लताफलतः परमेश्वरनैर्गुण्ये विशेषणम्, तेनासदेव तव नैर्गुण्यमपि सूच्यते. २. मोहम्. ३. त्वमपि हि मयि प्रतिबिम्बित इव दृश्यसे. ४. तव प्रबोधो न तव निश्रेयसं साधयति, तव नित्यमुक्तत्वात्, नाप्यस्माकं निश्रेयसाय, त्वयि प्रवुद्धेऽप्यस्मद्बन्धदर्शनात्. ५. न खलु जरापुरुषो जाग्रदपि दुष्टनिग्रहाय प्रभवति, करणपाटवाभावात्. ६. 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेः. ७. 'स ईशो यद्वशे माया स जीवो यस्तया जितः' इति. ८. 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतेः. ९. 'प्रकृतेर्विकारो महान्' इति. १०. 'इमौ सुपर्णौ सहजौ सखायौ' इति श्रुतेः.

**पुरुषः**—न त्वामाश्रित्यानाश्रित्य वा सुखमासे ।

क्वचिदपि विषये त्वया वियुज्य स्थितिमनवाप्य चिराय संसरामि ।
भवगिरिम(?)विदस्मि चित्संमुद्रं स्वमपि जहामि तदा लभे यदि त्वाम् २२

**पुरुषोत्तमः**—नन्वेवमपि मयि वान्यत्र वा क्वचित्संयम्य बधान धृतिम् ।

**पुरुषः**—नेदानीं मनसः क्वापि त्वामपहाय समाधानमुपपद्यते ।

अभिसरति परम्परं पुरारे विषयमनेकमपास्य पूर्वपूर्वम् ।
वरुणनिलयमापगेव यावद्व्रजति भवन्तमसौ न चित्तवृत्तिः ॥ २३ ॥

अपि च ।

परिमितविभवं कषायपाकं विषमतरं विषयान्तरं विहाय ।
निरवधिविबुधे समे समन्तात्त्वयि पुरुषोत्तम चित्तविभ्रमोऽस्तु ॥ २४ ॥

**पुरुषोत्तमः**—एवमपि मयि लीनचित्तवृत्तिः किमस्मदपकर्षपिशुनां वाचमुदाहरसि ।

**पुरुषः**—नाथ,

गुणमपि तव निर्गुणत्वपक्षे गमयति दोषकुलाकुलः प्रबन्धः ।
मलिनयतु नवेन्दुसुन्दराणि स्फटिकशिलाशकलानि काचसङ्गः ॥ २५ ॥

किं चेदमपि ममाभिप्रेतम् ।

अपगतपदपाटवोऽपि गर्भादुपनिषदामधुनोद्गतः प्रबन्धः ।
जनयतु तव कौतुकं कलेन प्रतिपदविस्खलितेन जल्पितेन ॥ २६ ॥

अपि चैतदाशासे पृच्छामि च ।

अपटुभिरभिधित्सितार्थबुद्धावनभिमतानपि बोधयद्भिरर्थान् ।
पुरमथन पराहतैरमीभिः कथय कदा विहसिष्यसि प्रलापैः ॥ २७ ॥

---

१. भगवता भवता सह वियुक्तस्य मम क्वापि विषये लोकद्वयेऽपि चिरावस्थानं न घटते, त्वल्लाभे त्वात्महानमेव । तथा हि—'विज्ञानघन एवैतेभ्यः भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति श्रूयते । तत्र विनाशो मूलक्षय इति सौगताः, विलय इति त्रिदण्डिनः । निर्मनस्कत्वश्रुत्या विमनो विरहान्मुक्तस्य न स्ववेदनम् । आत्मानुमापकप्रयत्नाद्यभावाच्च न परेण वेद्यत इत्यवेद्यत्वमेव मुक्तात्मनो विनाश इति नैयायिकादयः.
२. स्तोत्रादिस्वरूपोपासनाया अपवर्गोपयोगमाक्षिपति.

**पुरुषोत्तमः**—ननु मनसा सह वाचो न मामासादयन्तीत्याम्नायते।

**पुरुषः**—हन्त नाथ,

यदि सह मनसा तवाभिसारात्कुलगुरुभिर्निगमैर्निवारितासौ।
स्वयमभिसर तर्हि वाचमेनां परपुरुषं निगमो न पश्यति त्वाम्॥ २८॥

तेन हि लीलापरिगृहीतगिरिशविग्रहराजखण्डचूडामणे,

मम वचनजलानि कर्णशुक्तौ तव पतितानि गतानि मौक्तिकत्वम्।
त्रिगुणविलुठितानि लाजबुद्ध्या वसयतु कुण्डलकुण्डलिप्रकाण्डम्॥२९॥

**पुरुषोत्तमः**—प्रसादय वत्स, बन्धविध्वंसिनीमनादिमादिप्रकृतिम्।

**पुरुषः**—(आकाशे।) हेरम्बकुमारयोरम्ब,

न तव पुरि शिलादपुत्रवेत्रव्रततिनिरुद्धतया लभे प्रवेशम्।
गिरिशगृहिणि गौरि गोपुरेभ्यो बहिरुपविश्य शपामि नौमि च त्वाम् ३०

**पुरुषोत्तमः**—अपि पश्यसि माम्।

**पुरुषः**—

[1]पुरहर परदृष्टिदोषशान्त्यै कति जगदण्डकगण्डकान्बिभर्षि।
त्वदुपरि सहजप्रमोहदुष्टां कथमिव नाथ निपातयामि दृष्टिम्॥ ३१॥

**पुरुषोत्तमः**—वत्स, सूनृतवचनोऽसि। प्रसन्नोऽसि ते। प्रयच्छामि संयमवशोपनतमप्रतिहतभौतिकं चक्षुः। पश्य मे स्वरूपम्। (इत्यावरणमपसारयति।)

**पुरुषः**—(निरूप्य।) अहो नु खलु भोः, इह[2] बृहतामपि बृहत्तमे

---

१. एतावता प्रबन्धेन भवदभिनिविष्टबुद्धेर्वाचिकादिबाह्योपासनायाः प्रकृतिपुरुषादिगोचराया यथाकथंचिदुपयोगो दर्शितः। तथाविधोपासनासमवहितसमाधिवशाद्भगवत्स्वरूपसाक्षात्कारप्रकरणमिदानीमारभ्यते। साधितं हि भगवतोऽपि साक्षात्कारविषयत्वं न्यायकुसुमाञ्जलौ। पुरहरेत्यादि—बालादयो रक्षागण्डकधारिणो न डाकिन्यादिदृष्टिदोषैरभिभूयन्ते। त्वमपि नूनं जगदण्डगण्डकगणाभरणत्वादेव नास्मादृशां दुष्टदृष्टिपथमवतरसीत्युत्प्रेक्षया निर्दोषस्य मनसः समाधिधर्मसहकारेण त्वत्साक्षात्कारकारणत्वमिति सूच्यते. २. अपरिमितस्य प्रथमतः संयमवशाद्बहिरर्थाकारोपरक्तो भगवान् भासते, स एव हि विराडिति महता संदर्भेण विव्रियते—निरूप्येत्यादिना.

निःसीममहिमभूमनि चिदकूपारे प्लवन्ते च मज्जन्ति चोन्मज्जन्ति च जगदलाबूनिं ।

कुत्राप्युद्ध्रियते जलात्क्वचिदपां गर्भे चिरादुप्यते
क्वापि भ्राम्यति कुत्रचिद्विदलति द्वेधा नखैर्ब्रह्मणः ।
कुत्रापि ज्वलति क्वचिद्भसितसाद्भूतं समुद्धूयते
तेजोभिः क्वचन क्वचिच्च तिमिरैर्ब्रह्माण्डमापूर्यते ॥ ३२ ॥

अपि च ।

ब्रह्माण्डानि हिरण्यगर्भगुरुभिर्गर्भैरपां संप्लवे
निर्मग्नानि समुद्धरन्ति कतिचिन्नीलत्विषः पूरुषाः ।
संवर्तानलहेतिभिर्भसितसाद्भूतानि यान्यन्यत-
स्तैरुद्धूलनमाचरन्ति विकटभ्राम्यज्जटाग्रा नटाः ॥ ३३ ॥

किंचेदमत्र परिपच्यमानोदरमर्मरितोपरितनपुटे विघटमानध्रुवबुध्नबन्धने गगनगोले किमपि कौतुकमालोक्यते ।

आविर्भवन्ति विदलज्जगदण्डगर्भा-
दश्वामुखानलशिखाः प्रलयप्रगल्भाः ।
बीजानि कालपरिपाकवशाद्विदीर्य-
माणस्य दाडिमफलस्य यथोच्छ्वसन्ति ॥ ३४ ॥

**पुरुषोत्तमः**—वत्स, संयमवशेन प्रथमतो दृश्यमाने विराड्भवे किमपरं पश्यसि ।

**पुरुषः**—एतावत्पश्यामि ।

अविरतपरिवृत्तदण्ड[1]काष्ठाकुलमतुलव्यतिवर्तमानवेगम् ।
भ्रमयसि जगदण्डगोलमालाकलशकलापकुलालकालचक्रम् ॥ ३५ ॥

इदं चापरं च तर्कयामि—

अपरिमितविभागभूमिरेकस्त्वमसि ततो जगदण्डबिन्दुरासीत् ।
तदिति दशविधादिशामधीश त्वदवतरागणितक्रमेण सिद्धाः ॥ ३६ ॥

**पुरुषोत्तमः**—किमपरं ते प्रतिभाति ।

---

१. दण्डः काष्ठा च कालावयवौ; (पक्षे) दण्डकाव्यम्.

**पुरुषः**—भगवन्ननन्त,

ग्रहगृहसरसीरुहाणि राहुभ्रमरविमर्दसहार्ककर्णिकानि ।

नियतिपवनवेगघट्टितानि त्वयि करुणाकमलाकरे भ्रमन्ति ॥ ३७ ॥

**पुरुषोत्तमः**—कथय एवंविधं मम स्वरूपमवलोक्य कीदृशी चित्तवृत्तौ[1] वर्तसे ।

**पुरुषः**—अरे दिगम्बर,

प्रकृतिमलिनमृक्षलक्षलिक्षाचयचितमम्बरचीवरं वसानम् ।

प्रकटितबृहदण्डमत्रपं त्वां पुरुषमुदीक्ष्य हसामि चोल्लसामि ॥ ३८ ॥

**पुरुषोत्तमः**—वत्स,[2] प्रणिधेहि तावदन्तर्मुखेन संयतचेतसा मम संहरणलीलाम् ।

**पुरुषः**—(प्रणिदधत् ।) इदं पश्यामि ।

किरति[3] सकलभूतवञ्चनाय त्वदुपरि पिष्टपसर्षपानविद्या ।

तदपि निमिषमात्रनिर्गतोऽपि प्रविशति भूतगणो भवन्तमेव ॥ ३९ ॥

अपि च ।

परपुर[4]मभिविश्य सर्वलोकं भ्रमयति सर्वदिनेषु भूतवर्गः ।

भवपितृवनवाटबोधिवृक्षप्रलयनिशासु निलीय सेवते त्वाम् ॥ ४० ॥

**पुरुषोत्तमः**—अपि नाम पश्यसि संवर्तसमये मदीहितम् ।

**पुरुषः**—कथं न पश्यामि ।

---

१. बहिर्विषयसंकलितं भगवन्तमुपासीनस्यापि न विलीयन्ते चित्तविकारा इति भावः. २. सृष्टिलीलानुध्यानापेक्षया संहारलीलानुध्यानं वैराग्यप्रकर्षकत्वादन्तर्मुखचित्तवेद्यमित्याशयेनाह—'वत्स, प्रणिधेहि' इत्यादि. ३. भूतापसारणक्रियायां सिद्धर्थप्रक्षेपोऽभिचारतन्त्रे विधीयते । तदभेदेन भूतानां प्राणिनामाविद्यकप्रपञ्चाध्यासस्वरूपं वञ्चनमध्यवसीयते । पञ्चानां भूतानामाविर्भावविलयौ निर्गमप्रवेशत्वाभ्यामध्यवसीयते । निमिषादिपलादिभिश्च सृष्टिकालापेक्षया महाप्रलयसमयस्य दैर्घ्यमभिव्यज्यते । एतेन च 'यतो वा इमानि भूतानि जायन्ते' इत्याद्याः श्रुतयो व्याख्याताः. ४. भूता नाम देवयोनयः परस्य पुरं प्रविश्य लोकानां भ्रमं जनयन्तो दिवसमतिवाहयन्ति । निशासु श्मशानपिप्पलादिद्रुममधिरुह्य तिष्ठन्ति । तद्वृत्तान्तो व्यञ्जनपथावतीर्णः प्रकृतमहाभूतवृत्तान्ते गुणीभूतः प्रतिभासते.

[1]प्रकृतिचटुलसूक्ष्मभूतिशेषप्रकृतिविकारनिकोचभाजि काले।
अविरतपरिवृत्तिखेदखिन्ने स्वपतिजने प्रतिबुध्यसे त्वमेकः॥ ४१॥

अपि च।

[2]विलयमुपजगाम चेदखण्डस्त्वयि जरठो जगदण्डगुल्मपिण्डः।
क्षपयसि तदपि क्षपासनिद्रः कतिभिरसौ हि बुभूषति प्ररोहैः॥ ४२॥

**पुरुषोत्तमः**—वत्स, पश्य क्षयसमयदग्धजगदण्डगणावशिष्यमाणस्य रुद्रगणस्य व्यवसितम्।

**पुरुषः**—नाथ, पश्यामि।

ब्रह्मस्तम्बकदम्बडिम्बफलिते दग्धे जगत्कानने
[3]येषां नैष ललाटकोटरगतो निर्वाति कालानलः।
ते वक्रेन्दुबकाधिवासविकृतोत्तंसभ्रमत्पन्नगाः
शिष्यन्ते जलवेगजर्जरजटाजालाविलाः स्थाणवः॥ ४३॥

अये विश्वंभर, किमपि पृच्छामि।

खपुटपटलमभ्युदीर्यदाशावृतिरदलन्निरवाद्रविप्रदीपः।
विलयमवनिवास्त्वगात्तथापि क्व जगदगारगृहस्थ निश्यवात्सीः॥ ४४॥

कथं च।

प्रकृतिचपलपीलुबीजवर्गं दलितखगोलकुशूलविप्रकीर्णम्।
अघटितमितरेतरेण कल्पप्रशमदिने समचीकलस्त्वमेकः॥ ४५॥

**पुरुषोत्तमः**—वत्स, विश्वाधारस्य किमधिकरणम्, ऐश्वर्यसहायस्य किमुपकरणमन्विष्यसि। परिभावय तावत्सर्गलीलाम्।

**पुरुषः**—भूतभावन, भावयन्पश्यामि।

---

१. दोधूयमानपरमाणुशेषे प्रकृतेर्मायाया विकाराणां जन्यद्रव्याणां निकोचमवसानं भजमाने काले त्वमेव चेतनावान्, इतरस्तु निरुद्धकरणवृत्तित्वादचेतन इत्यर्थः। परिवृत्तिः प्रेत्यभावपरम्परा. २. विलयमिति। अस्फुटितस्य गुल्मव्याधेर्बहिर्विलयेऽपि व्यथा न गच्छति, प्रत्युत बहुधा गुल्मानामुद्भव इति वस्तुस्थितिर्गुणीभूता ध्वन्यते. ३. काननदाहे कोटरादिषु ज्वालाशालिनः सर्पबकाद्यधिवासभूताः नदीतटस्थाणव एवावशिष्यन्ते, तदभेदेन कालरुद्राणामध्यवसायः.

प्रलयदहनदग्धशेषपीलुप्रकरशिलोञ्छपवित्रवृत्तिरादौ ।
घटयसि भुवनानि तेषु [1]जीवप्रकृतिचलैः परमाणुभिः शरीरम् ॥ ४६ ॥

**पुरुषोत्तमः**—ननु किमनेन सर्गादिशरीरेण प्रयोजनमुपपद्यते ।

**पुरुषः**—

जनशरण शरीरिणां प्रवृत्तैः करणगणैरुपलब्धचेतनानाम् ।
कतिचनजनुरन्तरानुभूतिप्रसृमरवासनया [2]स्मृतीः प्रसूषे ॥ ४७ ॥

अथ शयितविबुद्धवत्पुराणः स्मरति मुनिर्निगमं हिरण्यगर्भः ।
गगनपवनसंनिपातकर्ता कथयसि वा करुणानपेक्ष एव ॥ ४८ ॥

**पुरुषोत्तमः**—आः, किमनेन मदीयाम्नायेनाप्रतिपन्नसमयस्य सर्गादिजनस्योपकृतं भवति ।

**पुरुषः**—

ननु कृतककलेवरद्वयेन व्यवहरता च निदेशदायिना च ।
अवगमितपदप्रवृत्तिमादौ कवयसि लोकहिताय संप्रदायम् ॥ ४९ ॥

**पुरुषोत्तमः**—किमिव लोकहितं मम वचो जनयति ।

**पुरुषः**—

प्रभवति परमाप्तयो दुरन्तादपसरणाय हिते प्रवर्तनाय ।
सहचरति [3]चतुर्भिरर्थवादैर्निगमकवे स तवैव सूक्तसारः ॥ ५० ॥

**पुरुषोत्तमः**—ननु स्वतःप्रमाणमसौ चोदनाविधिनिषेधौ बोधयन्ती प्रवर्तयति निवर्तयति च मदीयमिदं वचनमिति कुतो निरचायि ।

**पुरुषः**—अये निवृत्तिधर्मोपदेशगुरो,

---

१. जीवादृष्टप्रेरणया कर्मवद्भिः. २. तथा च शरीरं स्मरणाय, स्मरणं हिरण्यगर्भादेरागमोच्चारापानादिरेवासावाम्नायः । प्रतिकल्पं हिरण्यगर्भादयः प्रणष्टमनुस्मरन्तीत्येकः कल्पः । वर्णोच्चारणे कण्ठादीनां कण्ठत्वादिस्वरूपेणैव नापेक्षणीयत्वम्, किंतु विलक्षणपवनव्योमसंयोगाय, स पुनरशरीरशरीरस्यापि तव प्रयत्नेन संभवतीति किमाम्नायप्रवर्तने शरीरेणोपकर्तव्यमित्यपरः कल्पः. ३. स्तुतिःनिन्दा-परकृतिः-पुराकल्प इत्यर्थवादाः.

भवतु[1] विधिरपूर्वकार्यतत्त्वाशयहितसाधनताभिधासु कश्चित् ।
तदपि मुषितदोषमन्तरा त्वां न भवितुमर्हति चोदना प्रमाणम् ॥ ९१ ॥

**पुरुषोत्तमः**—प्रवर्तनामप्युपदिशतो मम निवृत्त्युपदेशमेव कुतः श्लाघसे ।

**पुरुषः**—नन्वधुना विज्ञातं नास्ति तव वचसि प्रवृत्तिपरतेति ।

हितविधिकपटान्निसर्गमूढप्रकृतिरसाविह तान्निवर्तनीयः ।
इति विषमतमेऽपि संविधाने गणयतु कस्तव नाथ [2]कौशलानि ॥९२॥

संसार इव श्रुतिरपि त्वत्परैव । तथा हि ।

विकिरति परितो घनावलीव श्रुतिरमृतानि तवाशयादुदस्य ।
विलयमयमुपैति चित्समुद्र त्वयि जगतो नि[3]गमस्य च प्रवाहः ॥ ९३ ॥

**पुरुषोत्तमः**—ननु यज्ञेषु श्रुतिर्विश्राम्यति ।

**पुरुषः**—हन्त, यज्ञा अपि त्वत्परा एव ।

अजिनसु(मु)शलवेदिशूर्पशय्यां दृषदुपलस्य हविःकपालपूपैः ।
अथ गुरुयजमानहोतृगातृप्रभृतिभिरध्वरकर्मसु त्वमिज्यः ॥ ९४ ॥

**पुरुषोत्तमः**—ननु पालनलीलासु मम प्रवेशय मनः ।

**पुरुषः**—इदमिदमवलोक्यते तवावनविलसितम् ।

---

१. अपूर्वं संकल्पो वा विधिरित्येकदेशिनः । कार्यं वैदिकलिङां मुख्योऽर्थ इति प्राभाकराः । कार्यतायां लिङो निरूढलक्षणेति त एव । आशय आप्ताभिप्रायो लिङर्थ इत्याचार्याः । इष्टसाधनता तथेति मण्डनः । अभिधाविधिरिति भट्टाः । तदपि विधेराप्ताभिप्रायकत्वाभावेऽपि संप्रदायप्रामाण्यार्थं मूलभूते त्वत्प्रत्यक्षप्रामाण्यमपेक्षणीयमित्यर्थः. २. उपनिषद्भागास्तावदर्थवादान्तरवन्न विधिशेषीभूताः, तेषां परमपुरुषार्थसाधनीभूतार्थज्ञानफलकत्वेन स्वाध्यायविषयतासंभवेन विध्यन्तरनिराकाङ्क्षत्वात् । किंतूपनिषदामेव सर्वे विषय इतिकर्तव्यतापूरकत्वेनोपयुज्यन्ते । यागादीनां च ब्रह्मज्ञाने आशयशुद्धिद्वारैवोपयोगः । सा च वैधेतरहिंसानिवृत्त्यादेरेव संभवतीति । न 'यजेत' इत्यादिवाक्यानां यागविधौ तात्पर्यम्, किंतु हिंसाविशेषपरिसंख्यायाम् । विधानं तु गुडजिह्विकान्यायेन प्ररोचनामात्रमिति तव कौशलम्. ३. वेदान्तेषु गीयसे । परिणामे च त्वमेवावशिष्यस इति भावः.

[1]प्रथमसमयसंगमाय नैतज्जगदुपजीवति केवलं भवन्तम् ।
भवतु सततसन्तमन्तरा त्वां कथमनिदं प्रथमापि वस्तुसत्ता ॥ ९५ ॥

पुरुषधौरेय, स्वस्ति तव धारणशक्तये ।

[2]न धरणिरुपरि प्रयाति नाधः पतति न च प्लवते न बम्भ्रमीति ।
न च दिवि वसति स्वशक्तियोगादपि च भवानचलास्थिरत्वहेतुः॥९६॥

अपि च ।

प्रवहपवनवेगघट्टितोऽपि स्खलति नयज्जगदण्डपिण्डभारः ।
लघुगुरुतुलनातुलाप्रकाण्डद्रढिमगुणः स भवद्गुणत्रयस्य[3] ॥ ९७ ॥

इयमपि तव जगदवनलीलैव । यत्किल

[4]भ्रमयति नवधा खमण्डलानि द्रढयसि सप्तपुटानि भूतधात्र्याः ।
उपदिशति च षड्गतीर्ग्रहाणां ध्रुवमवधि ध्रुवयोरपि ध्रुवत्वम् ॥ ९८ ॥

इदमपि जमावस्थानसुखाय तवावनिघटनम् ।

---

१. यथा प्रथमक्षणसंबन्धाय त्वं कारणत्वेनापेक्ष्यसे तथा द्वितीयादिक्षणावच्छिन्नायां सत्तायां त्वमधिष्ठात्वेनापेक्षणीयः । त्वदीयसत्त्वौपाधिकमेव हि सर्वेषां सत्त्वमित्यौपनिषदमताभिप्रायेणैतत्. २. ग्रहनक्षत्रादिभिरुदाकृष्यमाणा भूमिरनारतमुपरि गच्छति । वृक्षाद्विभक्तं पत्रमूर्ध्वं धावन्त्या भुवा संसृज्यते न तु पततीति क्षपणकाः । तन्न । ग्रहादिभिः सह भुवः संनिकर्षप्रसङ्गात् । गुरुत्वादनारतमधो गच्छतीति त एव । तदप्यसत् । वियति विक्षिप्तानां शराणां कदापि भूपृष्ठाप्राप्तिप्रसङ्गात् । रिक्तगर्भो भूगोलो महत्यर्णवतोये तुम्बिकावत्तरतीति यवनाः । तन्मन्दम् । 'सलिले विलयो मृदो भवेदिति गोरप्सु न युज्यते स्थितिः' इत्यादिना लल्लेन दूषितत्वात् । भूचक्रस्यैवाभिमुखं भ्रमणं न तु ग्रहगोलादेः प्रत्यगभिमुखमिति दिगम्बराः । तदपि हेयम् । 'पूर्वाभिमुखे भ्रमे भुवः स्वकुलायं कथमाप्नुयुः खगाः' इत्यादिना लल्लेन निरस्तत्वात् । स्वशक्त्या वियति स्थिरमवतिष्ठते भूगोल इति सिद्धान्तविदः । तत्र स्वशक्तिपदार्थो भगवदधिष्ठानमेवेति भावः. ३. अन्यत्रापि तुलाप्रकाण्डे सूत्रतयावलम्बितफलकारोपितो भारो न स्खलति । तुल्या च लघुगुरुणी परीक्ष्येते इति ध्वनिः. ४. चन्द्रादीनां ग्रहाणां सप्तनक्षत्राणामेकं क्रान्तिपातस्याधिकरणं नवमं खमण्डलम् । सप्तपृथिवीपुटानि, तान्येव पाताललोकाः प्राक्प्रत्यग्दक्षिणोत्तराधरोर्ध्वाः षड्गतयः, सर्वग्रहाणां दक्षिणोत्तरौ ध्रुवाविति ज्यौतिषसिद्धान्तः.

[१]अविषमैचतुरस्रषड्विभागां न सृजसि कन्दुकनिस्तलां नमूषे ।
घटयसि पृथिवीमिमां भचक्रभ्रमणकुलालविशालदर्पणाभम् ॥ ५९ ॥

**पुरुषोत्तमः**—अपि मम प्रलयसर्गावसानसमर्थं शरीरमपि पश्यसि ।

**पुरुषः**—नहि नहि ।

अपरिमितकृतेर्निराशयस्य भ्रमरहितस्य निरस्तचेष्टितस्य ।
दृषदुदरदरीषु दर्दुराणां घटनपटोस्तव कीदृशं शरीरम् ॥ ६० ॥

**पुरुषोत्तमः**—किमिमामाकस्मिकीं प्राकृतिकीं वा सृष्टिमभिमन्यसे ।

**पुरुषः**—

[२]न जगदिदमहेतुतो न शून्यादवधिमतां कथमुद्भवोऽस्त्वकस्मात् ।
प्रकृतिरियमधर्मधर्मरूपा पुरुषगुणः कथमारभेत विश्वम् ॥ ६१ ॥

**पुरुषोत्तमः**—ननु मामुपादानं निमित्तं वा जगतोऽनुमन्यसे ।

**पुरुषः**—

विशकलितमनुव्रजन्निचित्य स्थपतिरिव त्वमजीघटः प्रपञ्चम् ।
विभुरसि च न युज्यसे विकारैस्त्वयि समवैतु कथं स भूतवर्गः ॥६२॥

**पुरुषोत्तमः**—हन्त, तर्हि प्रपञ्चमसन्तं प्रतिपद्यसे ।

**पुरुषः**—न खलु न खलु ।

[३]त्वमखिलजगदीश षड्भिरङ्गैरुपचितवेदमजीजनः षडङ्गम् ।
कथय कथमसावुपैत्वसत्तां सततसतो भवतः स्वतः प्रपञ्चः ॥ ६३ ॥

१. द्वौ चन्द्रौ द्वौ सूर्यावित्यादिक्रमेणाष्टादशग्रहाः । चतुःपञ्चाशन्नक्षत्राणि भुवः समचतुरस्राः पार्श्वचतुष्टयोर्ध्वाधरभागाः। एकत्र भागे एकः सूर्यः,ततस्तृतीयभागे द्वितीयः। परिशिष्टप्राक्प्रत्यग्भागयोस्तु रात्रिरिति दिगम्बराः। ते च 'किं गण्यं तव वैगुण्यं द्वैगुण्यं यो वृथा कृथाः । भार्गेन्दूनां विलोक्याङ्गा ध्रुवमन्ये परिभ्रमम् ॥' इत्यादिना भास्करेण निरस्ताः । कन्दुकवर्तुला भूमिरिति ज्यौतिषिकाः, तेऽपि मया भूमाद्यसाधनप्रकरणे निराकृताः इति भावः. २. अहेतोर्भवतीत्यर्थकमकस्माद्भवतीति वाक्यम् । शून्योपादानकः संसार इति माध्यमिकाः। प्रकृत्युपादानक इति संचष्काणका नाम सांख्यैकान्तवादिनः कापिलाः । ब्रह्मोपादानक इत्यपरे सांख्यैकान्तवादिनो बादरायणाः । तान् निरस्य भगवत्कर्तृकत्वम्, 'विश्वस्य कर्ता' इति श्रुतिसिद्धमिह व्यवस्थापितम्. ३. सर्वज्ञतातृप्त्यनादिबोधस्वातन्त्र्यनित्या लुप्तशक्तिः अनन्तशक्तयः षडीश्वराङ्गानि, शिक्षादयः षट् वेदाङ्गानि । तथा च त्वया षडङ्गेन षडङ्गो वेद इव सता सन्नेव प्रपञ्चो जन्यत इति भावः

**पुरुषोत्तमः**—वत्स, किमनेनासता सता वा प्रपञ्चेन। विहायैनमान्तरान्विषयान्परिशीलय।

**पुरुषः**—इदं तावदन्तः प्रणिधाय पश्यामि। आलोचनविकल्पाभिमानव्यवसायवृत्तिमतीन्द्रियमनोऽहंकारबुद्धीस्त्रिगुणमेकं प्रसूते, तदपरमविकारि पश्यतीति।

**पुरुषोत्तमः**—वत्स, कपिलकल्पितभेदमपहाय कर्तृचेतनयोरभेदमनुशीलय।

**पुरुषः**—एवमनुध्यायमाने कर्तृचेतनयोरभेदे तव मम च मध्ये जडं प्रतिभाति प्रधानव्यवधानम्।

**पुरुषोत्तमः**—तेन किं मामावृतं पश्यसि।

**पुरुषः**—नहि नहि।

शिवं[1] तव मम चान्तरालभूमौ विविधविधिं व्यवधां व्यधात्प्रधानम्।
तदपि हि पिहितोऽहमेव भित्तिर्भवति वृतिः सदनस्य नाजिरस्य॥६४॥

किंतु विकारमलिनप्रधानान्तरितेन चक्षुषा त्वामनुशीलयन्निदं पश्यामि।

किमपि निविशति प्रकाशराशौ त्वयि यमुनेव रवौ विधाविवाङ्कः।
असिततनुचतुर्भुजं[2] स्वरूपं यदवतराहृदयं हरन्ति रामाः॥ ६५ ॥

**पुरुषोत्तमः**—वत्स, त्रैगुण्यमयप्रधानव्यवधानमपहाय मां निपुणं निरूपयन्नाकलयिष्यसि तत्त्वम्।

**पुरुषः**—हन्त भो, निपुणनिरूप्यमाणे त्वयि विच्छिद्यत एव द्वैतम्।

---

१. 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिसिद्धा काचिदेकैवाविद्या। 'इन्द्रो मायाभिः पुरुरूप ईयत' इति श्रुतिसिद्धास्तु तद्विपरिणामभूता नानाविद्याः, तदवच्छिन्नं चैतन्यं जीवपदेनोच्यते, मूलभूताविद्यावच्छिन्नमीश्वरपदेन, अत एव मूलप्रकृतेः सर्वप्रपञ्चोपादानत्वात्तद्वृत्तौ प्रतिमितम् चैतन्यं सर्वज्ञपदेन व्यवह्रियते। अत एव न केनचिदज्ञानेनावृतोऽसौ, किंतु अयमुपासकानां चतुर्भुजादिशरीरोपेत इवापाततः परिस्फुरतीत्यभिप्रायेणौपनिषदमतसिद्धब्रह्माभेदविज्ञानप्रकरणमिदानीमारभ्यते. २. उपासकैः परमे ब्रह्मण्यध्यस्तः कालीविग्रहः कृष्णविग्रहो वा ध्येय इत्युपदेशोऽयम्। रामाः भार्गवादयः स्त्रियो वा तदवतरा भवन्तीति उपासकैर्ध्येयमिति.

[1]त्वममृतविषयप्रवेशभूमौ भवसि दृशोः पथि यस्य स द्वितीयम्।
जगति न परिपश्यतीति जिह्मा स्मरहर दृष्टिविषाधिका गतिस्ते ॥६६॥

**पुरुषोत्तमः**—एवमेव विषयान्तरप्रकाशदोषमोषनिरस्तद्वैतमद्वितीयतया दलितमहाभयमपवर्गगोपानसीचरमसोपानभूतमस्मद्दर्शनम्।

**पुरुषः**—हा, किमेतत्।

[2]उडुनि मयि रवे प्रकाशलेशं व्यवधिवशादपरीक्षितो व्यतारीः।
तदपहरसि संनिकर्षमेत्य त्वदुपरि तर्हि निजं वपुस्त्यजामि ॥ ६७ ॥

**पुरुषोत्तमः**—न केवलं बहिर्विषयप्रकाशमेव मुष्णाम्यात्मदर्शिनाम्, अपि त्वशेषामेव विशेषगुणसंपदम्।

**पुरुषः**—का पुनरत्र प्रतिक्रिया। अथ वा जानामि त्वयि कृतप्रतिकृतिम्।

भवपथपथिकोऽस्मि वाटपाटच्चर मिलितोऽसि विलुण्टसंपदो मे।
[3]अहमपि भवदन्तरं प्रविश्य ध्रुवमचिरेण हरामि ते विभूतीः ॥ ६८ ॥

**पुरुषोत्तमः**—[4]मन्ये ममापहरिष्यसे विभूतिम्। आकलय तावदस्ति मयि किंचित्, आहोस्विदकिंचनोऽस्मि।

**पुरुषः**—हन्त, प्रपञ्चप्रसारणाकुञ्चनैन्द्रजालिकस्य तव नाधुना कमपि प्रकारमुपलक्षयामि।

---

१. अमृतनिधानस्थानस्य द्वारि दृष्टिविषो नाम सर्पः, स यं पश्यति तं द्वितीयो जनो न पश्यतीति तस्य भस्मीभूतत्वात्। त्वां तु मोक्षद्वारि वर्तमानं यः पश्यति स द्वितीयं न पश्यति। अतः कुटिलगतित्वेन सधर्मणो दृष्टिविषात् त्वमतिरिच्यस इति भावः. २. अविद्यावशादपरीक्षितस्त्वम्। प्रकाशलेशमन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं पूर्वं वितीर्णवानसि। संप्रति तु संनिकृष्टे त्वयि विषयाकारान्तःकरणवृत्तेरभावात्तदपहार इति त्वयि मत्स्वरूपस्य विलयः त्रिदण्डिसिद्धः प्राप्त इति प्रस्तुतोऽर्थः। अप्रस्तुतेनोडुरविवृत्तान्तेन प्रतीयते। बलवतापहृतधनः क्षुद्रः शरीरं त्यजति इति लोकसिद्धो वृत्तान्तश्चात्र गुणीभूय भासते। नैयायिकमते तु नित्यचैतन्यस्त्वमनित्यं मयि व्यतारीः, इदानीमनुध्यानसाक्षात्कृतः, तदपि जिहीर्षसि चेत्त्वदुपरि त्वामुद्दिश्यैव निजं वपुरपुनर्भवाय त्यजामीति योज्यम्. ३. अनेन भेदापगमावस्थालक्षणो मोक्ष उपलक्ष्यते. ४. प्रहासे पुरुषव्यत्ययः.

गुणगणमपनीय चित्तकूपे मम निगमैः सहसा निपातितोऽसि ।
अमृतकलश तिष्ठ तिष्ठ नातः परमपि जीवनमुद्धरिष्यसे नः ॥ ६९ ॥

**पुरुषोत्तमः**—वत्स, औपनिषदैरदृश्यमानोऽपि मम गुणगणो न प्राकृतपुरुषस्यवत्परमार्थतो विलीयते । पश्य ।

सपदि गुणगणोऽयमूर्णनाभेर्विलयमुपैति वितायते च भूयः ।
जनजडिमभिदा पटुः पटस्तु क्षणमपि न क्षमते क्षयं गुणानाम् ॥७०॥

**पुरुषः**—अधुना प्रबोध्यमानोऽप्यात्मानमपि गुणवन्तं नावधारयामि, कुतो भवन्तम् ।

भुवनभवनभासनप्रदीप न्यपतदसौ त्वयि चेतनापतङ्गी ।
क्षणमधिकमदीप्यत ज्वलन्ती पुनरजहात्प्रथमामपि स्वसत्ताम् ॥ ७१ ॥

**पुरुषोत्तमः**—तत्त्वतो ज्ञाते मयि तत्त्वविदामात्मा प्रतिभाति । तत्कथय कीदृशं स्वमवधारयसि ।

**पुरुषः**—देव, पश्यामि ।

न धरणिसलिला न चापि वायुर्न खमत एव न खानि नापि वर्ष्म ।
न समयककुभौ न चिन्न चित्तं पुरुषपुरंदर पूरुषस्तवास्मि ॥ ७२ ॥

**पुरुषोत्तमः**—मया नाथवन्तमात्मानमनुध्यायतस्तव स्फुरन्निवोपलक्ष्यते मयि स्वतादात्म्यारोपः ।

**पुरुषः**—एवमेतत् ।

---

१. निर्गुणं ब्रह्म उपनिषदा हृदि प्रवेशितं जीवनोद्धरणलक्षणां प्रेत्यभावपरम्परां निराकरोति। यथा त्रुटितगुणः कलशः कूपे प्रविष्टः स्थिरमवतिष्ठते, न तु जलमुद्धरतीति ध्वनिः. २. त्वयि निवेशिता चेतना कर्तृत्वादिप्रकारानुल्लिखन्ती सार्वज्ञरूपेण प्रथमं परिणनाम । ततः कर्तृत्वादिप्रकारानपहाय निर्धर्मकं त्वामवल[ल]म्बे । अथ स्वरूपेणापि निर्वाति । यथा पतङ्गी प्रदीपे पतिता क्षणं ज्वलति ततो भस्मभूता स्वशरीरं त्यजतीति गम्यते. ३. स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोतीति टीकादर्शनात्. ४. प्रथममितरत्वेनात्मसाक्षात्कारः, स एव संसारबीजवासनामूलं करस्थं सहकारिणमासाद्योपनिषद्वाक्यार्थबोधसहकृतेन मनसा जीवपरमात्मनोरभेदः साक्षात्क्रियते.

असकृदनटदस्मिता नटी मे विहितपदा मशके मतङ्गजेन[1]।
ध्रुवमुपरि तवाधिरोहतीयं भव महतोऽपि महानणोरणीयान् ॥ ७३ ॥

हा, किमेतत्।

विगलदवयवं विकारमात्रारहितमनिन्द्रियमक्रियं पुराणम्।
त्वमसि तदिति चेतनामयं मामुपनिषदोऽपि बत प्रमोहयन्ति ॥ ७४ ॥

जगज्जनक, जानामि गतमिदानीं मम संचरचर्चया।

दिगपदिशविपर्ययोऽपि पुंसामभिमतसंसरणक्रियां रुणद्धि।
मम तु भवकदध्वगस्य कोऽपि त्वमहमिति प्रथितो महान्प्रमोहः ॥७५॥

किं वा कृते प्रतिकृतमेवैतत्।

मयि परमविभौ विशुद्धसत्त्वे यदिह शरीरतदात्मतामधास्त्वम्।
निगमपुरुष तत्प्रतिक्रियायै त्वयि निदधामि समस्तवस्त्वभेदम् ॥७६॥

**पुरुषोत्तमः**—वत्स, सेयमपवर्गनगरगोपुरायमाणा दशा भवतु मोहमयी[2] न पुनरेनामवधीरयिष्यसि।

**पुरुषः**—एवमेतत्।

शमितजडतदात्मताप्रमोहो विमलयति त्वदभेदविभ्रमो माम्।
प्रकृतिमुपनयन्ति वारिधानीं कतकरजांसि रजोऽन्तरापकर्षात् ॥ ७७ ॥

**पुरुषोत्तमः**—पुरुष, कथय कमर्थमिदानीमर्थयसे।

**पुरुषः**—पुराणपुरुष,

व्यवधिरुपरराम[3] भूर्विविक्ता प्रभवसि गूढगतिर्न मां प्रहर्तुम्।
तदिह भवतु तावदेकशेषापरविलयावधिरावयोर्विमर्दः ॥ ७८ ॥

---

१. नटी स्थूलसूक्ष्मेषु वस्तुषु विहितारोहणाभ्यासा सूक्ष्मतरं सूत्रादौ स्थूलतरे प्राकारादावारोहणे क्षमते। इयमस्मिता तु मशकमतङ्गजशरीरपरिग्रहदशायां सूक्ष्मस्थूलवस्त्वारोहणे कृताभ्यासा स्थूलतरं सूक्ष्मतरत्वात् त्वामारोढुमर्हति। त्वं तु श्रुत्या द्वेधापि प्रतिपाद्यस इति भावः. २. तत्त्वमसीत्याद्याः श्रुतयोऽमुमेव जीवन्मोक्षमात्मनोरभेदारोपमुत्पाद्य कृतार्था भवन्ति। स चारोपः स्वात्मसाक्षात्कारे उपयुज्यते। स निर्वाणनामनि निश्रेयसेन खल्वेता उपनिषदः कुत्रापि विधौ शेषीभूताः परम्परया परमपुरुषार्थसंबन्धादेव स्वाध्यायविधिविषयत्वोपपत्तेरिति भावः. ३. व्यवधिरित्यादित्रिदण्डिमतसिद्धः परमात्मनि जीवात्मविलयो नाम मोक्षः प्रस्तूयते। स च पूर्वं दुर्गादिनिगूढस्य प्रच्छन्नं प्रहरता पश्चादुद्घाटितव्यवधेर्विविक्तभुवमागत्य विमर्दमाचरत एक···विनाशफलको वृत्तान्त इवेति ध्वन्यते.

**पुरुषोत्तमः**—न[1] संभवति नित्ययोरावयोरेकतरस्यापि विलयः । त[2]न्मया सह भेदाभेदताटस्थ्येन निखिलेतरविषयपरिहारेण च स्वमात्मानमनुशीलय । अहमपि हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोमि पुरुषाणामिति ।

**पुरुषः**—(सकरुणम् ।) अरे अनारतप्रबोधमहिमन् अभङ्गुरगुणनिधे,

सुभगपरिचयं जहाति चेत्त्वामतिचपला मम चित्तचेतनेयम् ।

परिणतिजडिमप्रकर्षदुःस्थे भिदुरगुणे मयि सा कथं रमेत ॥ ७९ ॥

तथापि भवदादेशतः पश्यामि केवलमात्मानम् ।

(नेपथ्ये ।)

हंहो पुरिसाण उत्तम, अणुप्पण्णप्पसवा अम्हे। ण जुज्जइ अम्हाकं मूलुच्छेदो । (क)

**पुरुषोत्तमः**—सोऽयमनारब्धव्यापारकः कर्मगणो विलीयते ।

**पुरुषः**—त्यक्ता मया तर्हि संसारकान्तारमरुषु संसरणचर्चा ।

स्तनकलशमुखेन वा जनन्यास्तनयकराङ्गुलिमध्यकुल्यया वा ।

मुहुरहमपिबं पयांसि यस्मात्तदिदमशुष्यत [3]जालमाशयानाम् ॥ ८० ॥

(नेपथ्ये ।)

हा आवुअ, सिसिरभिसिणिसण्डो व्व तुमं विलीनो मा जाण क्खणंपि अम्हे जीआमो त्ति । हा वच्छे पउत्ति, तुअं पि अणाहा असरणा विपज्जिहसि । (ख)

---

(क) हंहो पुरुषाणामुत्तम, अनुत्पन्नप्रसवा वयम् । न युज्यतेऽस्माकं मूलोच्छेदः

(ख) हा आवुक, शिशिरबिसिनिखण्ड इव त्वं विलीनो मा ज्ञासीः क्षणमपि वयं जीवाम इति । हा वत्से प्रवृत्ति, त्वमप्यनाथाशरणा विपत्स्यसे ।

---

१. विलयो न ध्वंसो न वा भेदध्वंसः, तयोर्नित्यत्वादिति भावः. २. अभेदसाक्षात्कारानन्तरं केवलात्मालोचनम्। तदाहत्यैवानारब्धव्यापारकाणि कर्माणि क्षिणोति, तदिदानीं प्रस्तूयते—तन्मयेत्यादिना. ३. प्रेत्यभावप्रयोजनकः कर्माशयगणो जलाशयाभेदेनाध्यवसीयते.

**पुरुषोत्तमः**—पश्य पुरुष, तव विवेकप्रदीपे पतङ्गवृत्तिमाश्रित्य विलीने महामोहे[1] कुमारौ रागद्वेषावपि प्रवृत्तिविलयाय विरमतः।

**पुरुषः**—हन्त, विरतेषु चिरंतनप्रियसुहृत्सु दोषेषु विरतजन्मफलो[2] विदलद्विनश्यदाशयग्रन्थिर्मुहूर्तं क्वचिद्विश्रमितुमिच्छामि।

**पुरुषोत्तमः**—वत्स, तदिदमग्रतः कायारण्यम्। इह विश्राम्य तावदचिरमिह परिचरिष्यन्तस्त्वां प्रतिपालयन्ति फलवन्तः कर्माशयतरवः।

**पुरुषः**—नाथ, भुक्तानि कायारण्ये कर्मतरुफलानि। विलीनं सपादपमरण्यम्। अयं[3] पुनः को नाम।

नोर्ध्वं धावन्नवनिवलयान्नाम्बरालम्बमानो
दिग्भ्यस्तिर्यङ् न च विचलितो नान्तरैव प्रसूतः।
आनन्दाब्धेरपगततटद्वीपवेलाविभागः
पूरः पारे वचनमचिराद्विश्वमेकीकरोति॥ ८१॥

**पुरुषोत्तमः**—अयमानन्दसमुद्रोऽनुषङ्गलभ्यो हेय एव दृष्टानुश्रविकानन्दवदपवर्गपान्थानाम्।

सुखकामः[4] परानन्दमप्राप्यैहिकमिच्छति।
अभावे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता॥ ८२॥

तदिमामानन्दकक्षामतिक्रम्य कैवल्यभूमौ निर्वाणं[5] नामापवरकमाश्रित्य विश्राम्यतु भवान्।

---

१. यद्यपि बाह्यविषयाभेदभ्रममूलवासनास्वरूपो महामोहः प्रागेव विलीनः, तथापि जीवपरमात्माभेदभ्रममूलं(ला) वासना सांप्रतमेव लीयते। तेनेदानीं महामोहविलयोऽनुशोचितः. २. मोहविलयाद्रागद्वेषयोर्विलयः, तद्विलयात्प्रवृत्तेर्विलयो जन्मनस्ततः—इति जन्मविलयान्तो जीवन्मोक्ष इह प्रस्तुतः। तदेतत्सूचयति—विरतजन्मफल इति। एतेन 'दुःखजन्मप्रवृत्तिमिथ्याज्ञानानामुत्तरोत्तरापायेन तदनन्तरापायादपवर्गः' इति पारमर्षं सूत्रं व्याख्यातम्. ३. निर्वाणनाम्नोऽपवर्गस्य प्राक्काले कायारण्यद्वारारब्धव्यापारकर्मफलानामशेषतो भोगः। ततो ज्ञानफलमानन्दभोगः 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्' इति श्रुतिसिद्धः। तं प्रस्तौति—अयं पुनरित्यादिना. ४. दृष्टो वैषयिक आनुश्रविको वैदिक आनन्दो यथा न कमनीयः वैज्ञानिकोऽपि। तस्याकाम्यत्वे न्यायमाह—सुखकाम इति. ५. दुःखानामत्यन्तविलयो निर्वाणम्.

**पुरुषः**—इदं तावत्प्रागपि सुषुपता मया ध्यासितमासीदिति[1] प्रत्यभिज्ञायते ।

इदमपवरकं तदेव यस्मिन्नसकृदहं निरगां निशि प्रविश्य ।
विगलितवरणाद्बहिर्विहीनात्कथमधुना सदनादितो निरीयाम् ॥ ८३ ॥

**पुरुषोत्तमः**—विद्यते भवदध्यासिताध्यासयिष्यमाणयोर्निवृत्त्य पवरकयोः सूक्ष्मो भेदः । तदधुना विरमति भवदिवसे प्रकाशराशिरयमपि तिरोभवति । तदसौ सुदृष्टः क्रियताम् ।

**पुरुषः**—(नाट्येनार्घ्यविधिं निर्वर्त्य ।) भगवन् अशेषभुवनभावनत्रयीपुरुष,
ध्रुवमियमपवर्गरात्रिसंध्या भवति यतस्त्वयि निर्भरोऽनुरागः ।
रुचिमयचरमोऽयमञ्जलिस्ते ननु न चिराद्भविता भवानदृश्यः ॥ ८४ ॥

(इति निष्क्रान्ताः सर्वे ।)

**इति तुरीयोऽयमात्मदर्शनं नामाङ्कः ।**

---

पञ्चमोऽङ्कः ।

(ततः प्रविशति श्रुतिरान्वीक्षकी च ।)

**श्रुतिः**—ततस्ततः ।

**आन्वीक्षकी**—ततश्च प्रमित्यनुमितिसिद्धिभिः सहचरिद्भर्मणः पुरुषस्य प्रादुर्बभूव विलीने च सान्वये महामोहे कैवल्यभुवमागते पुरुषे तिरोबभूव पुरुषोत्तमः ।

(नेपथ्ये ।)

भगवन् अनिमित्तमैत्रीमयचरित्र निष्कारणकरुणारत्नाकर शंकर,
त्यक्ताध्वन्यसुहृज्जनस्य तरतः कान्तारमेकाकिनः
प्रच्छन्नेन सखे त्वया वसतयो भोगाय मे निर्मिताः ।
संसाराध्वविरामसीमनि मनागेकात्मवत्संगते
विश्लिष्टे त्वयि केवलस्य गलितः सर्वः प्रकारो मम ॥ १ ॥

---

१. सुषुप्त्यवस्थासजातीयमेव निर्वाणम्—'अहरहरस्माल्लोकादमुं लोकमपि यान्ति' इति श्रुतेः—इति प्रकरणार्थः.

विगलितगुणसामान्यं केवलमात्मानमालोच्य।
पुरुषोऽननुभूतचरं चरमतरं दुःखमनुभवति ॥ २ ॥

**श्रुतिः**—वत्से, एतदवसानानि पुरुषस्य व्यवसितानि। असावेव चास्य दुःखाणामत्यन्तविमोक्षाय यदपवर्गप्रतिष्ठा नाम। प्रतिष्ठिते च प्रशान्तिसामैकधने राजन्यपवर्गे

पुरुषस्यास्य नगरे न भेदो न च विग्रहः।
भेदविग्रहमूलस्तु दुःखदण्डः पतेत्कुतः ॥ ३ ॥

तदभिषिच्यतामपवर्गः क्षेत्रज्ञनगराधिपत्ये।

(प्रविश्य।)

**बुद्धमार्गः**—नमो भगवते तथागताय।

क्षणिकाणुसंचयमये त्रिविष्टपे स्थिरता कथं भवतु चेतनात्मनः।
चितिसंततिर्गलितवासनावलिर्विषयोपरागरहिता निरुध्यते ॥ ४ ॥

स एष ममापत्यं क्षीणवासनो विलीनक्लेशत्रयनिरुद्धो विषयोपरागरहितो वा चेतनासंतानो नामापवर्गः साम्राज्येऽभिषिच्यताम्।

**आन्वीक्षकी**—भद्र श्रवणकमार्ग, कस्ते विषयः।

**मार्गः**—नैरात्म्यं क्षणिकता च। मया गृहीतो हि पुरुषो न दवीयः कलं कामयते, न प्रवर्तते, न कर्मसंस्कारस्कन्धेन सीव्यते, न संसरतीति।

**आन्वीक्षकी**—दुर्दर्शनकथामपि मादृशेन जनेन नार्हसि, यस्तावदात्मानमेव न चेतयसे।

**मार्गः**—स्त्रीत्यवज्ञाता प्राणिहि। न हि त्यजाम्यहिंसाधर्मम्। (इति निष्क्रान्तः।)

**श्रुतिः**—अरे विद्याः, प्रवेशयतापवर्गम्।

---

१. पुरुषस्य लिङ्गशरीरावच्छिन्नस्य जी[व]क्षेत्रज्ञनगरे शरीरोपाधिप्रयुक्त एव भेदः। विग्रहशून्यतायां च न भेदसंभव इति वृत्तान्तः सामाद्युपायचतुष्टयवृत्तान्ताभेदेनाध्यवसीयते. २. क्षीणवासनाचित्तसंततिरपवर्ग इति योगाचाराः। रागद्वेषमोहात्मकक्लेशत्रयविलयस्वरूपनिरोधवती सा तथेति सौत्रान्तिकाः। विषयोपरागरहिता चित्तसंततिरसाविति वैभाषिकाः.

(प्रविश्य)

**अर्हत्सिद्धान्तः**—णमो अलिहन्ताणम्।

णिज्जरजज्जलसंवलविहुडिअगलिअट्ठविधबन्धा।
अच्छिण्णघणाणन्दा मुत्तप्पाणो जअन्ति जिणा॥ ९॥

एषे मह पुड्डे पडे अवले अ ओवग्गे। (क)

**आन्वीक्षकी**—भद्र भदन्तसिद्धान्त, कस्ते विषयः। कोऽयमपरः परस्तवापवर्गः।

**सिद्धान्तः**—णिम्मले विण्णाणमए सलीलपरिणामे अप्पा मह विसए णिलावलणाह जीअविहङ्गाह अबाहआ सुहदसा ठिई णाम अबले ओवग्गे। उद्धगइ णाम पलममोक्खे। (ख)

**आन्वीक्षकी**—(सक्रोधम्।) अरे दौवारिकदर्शनानि, निरुध्यन्ताममी पाखण्डाः।

**सिद्धान्तः**—कडुअभाशिणि, अज्जेव्व शाहेमि। (ग) (इति निष्क्रान्तः।)

(ततः प्रविशतः सिद्धान्तौ पाशुपतो वैष्णवश्च।)

**पाशुपतः**—अये, लोकविरुद्धैः सर्पदहनधारणगरप्राशनादिभिर्वेदविरुद्धैर्ब्रह्ममूर्धव्रश्चनदारुवनद्विजविध्वंसनादिभिरपि निर्लेपस्य स्वतन्त्रतया वशीकृतसिद्धेर्न केवलं पशूनामेव किंतु पशुपाशबन्धमोक्षाणामपि प्रभवतो दुरवगाहा विभूतयः।

---

(क) नमो अर्हद्भ्यः।

निर्जरजर्जरसंबरविघटितगलिताष्टविधबन्धाः।
अच्छिन्नघनानन्दा मुक्तात्मानो जयन्ति जिनाः॥

एष मम पुत्रः परश्चापरश्चापवर्गः।

(ख) निर्मलो विज्ञानमयः शरीरपरिणाम आत्मा मम विषयो निरावरणस्य जीवविहङ्गस्याव्याहता सुखदशा स्थितिर्नामापरोऽपवर्गः। ऊर्ध्वगतिर्नाम परममोक्षः।

(ग) कटुभाषिणि, अद्यैव साधयामि।

विधिवशमिलितो भवाध्वयात्रां हरसि जगत्तिलपेषतैलिकोऽसि ।
न तव पशुपते विदन्ति पाशं पिहितदृशः पशवः परिभ्रमन्ति ॥ ६ ॥

अपि च ।

दुर्दम्भजम्भरिपुधर्षितधर्मदार-
रूपानुरूपवचसो बत गोतमस्य ।
कः श्रद्दधीत गिरि किंतु भवच्छरीर-
सारूप्यलब्धविभवं वपुरेव मोक्षः ॥ ७ ॥

स एव विरूपाक्षसारूप्यं नामापवर्गोऽभिषिच्यताम् ।

**वैष्णवसिद्धान्तः**—

दहनमभिविशन्तु कर्मतन्त्राण्युपनिषदा सह दह्यतां विवेकः ।
मम तु भवतु भूतिभाजि भक्तिर्भगवति वारिदभासि वासुदेवे ॥ ८ ॥

अपि च ।

वरं वृन्दावने रम्ये शृगालोऽपि भवाम्यहम् ।
गोतमोक्तां पुनर्मुक्तिं गोतमः प्रतिपद्यताम् ॥ ९ ॥

स एष साम्राज्यमर्हति वैकुण्ठसालोक्यं नामापवर्गः ।

**आन्वीक्षकी**—अरे, स्वर्गप्रभेदेष्वपवर्गाभिमानिनोरुपासनाभक्तिश्च निःश्रेयसोपाय इत्यापाततो भ्राम्यतोर्भवतोर्भविष्यति काले विज्ञानाधिकारः ।

(प्रविश्य)

**कर्मकाण्डः**—अरे आङ्गिरसि, किं नाम विज्ञानम्, कस्मै प्रयोजनाय कल्पते । नित्यनैमित्तिकानुष्ठाननिषिद्धाननुष्ठानाभ्यां पापस्य काम्यकर्मसंन्यसनात्पुण्यस्यानुत्पत्तौ प्रागुत्पन्नयोस्तयोर्भोगात्प्रक्षय इति प्रव्रज्याकर्मैव निःश्रेयसं साधयति । कर्मणैव हि संसिद्धिमास्थिता जनकादयः श्रूयन्ते ।

**आन्वीक्षकी**—अरे निरीश्वरतया स्वतन्त्र, कथमेकेन जनुषा विना समाधिमनुत्पन्नकायारण्यो जन्मसहस्रोपभोग्यानि सुकृतदुष्कृतानि भुञ्जीत, भुञ्जानो वा कर्माशयैः कथं न सीव्येतासति विज्ञाने(ऽ)संन्यासिजनः । भाव, भावयतु भवानन्यः को नाम समाधेरगस्त्य इव समुद्रमाचामति, स इव दण्डकारण्यं सृजतीति ।

**पाशुपतवैष्णवसिद्धान्तकर्मकाण्डाः**—नास्त्यवकाशोऽस्माकमिह। (इति निष्क्रान्ताः।)

(ततः प्रविशति सेश्वरमीमांसाद्वयम्।)

**प्रथमा**—सोऽयं विज्ञानसमुच्चितस्य कर्मणोऽपत्यमानन्दभोगो नामापवर्गः।

आनन्दोऽयमखण्डसुन्दरवपुर्मूढस्य संसारिणः
प्रच्छन्नो वसति स्म तेन हि नृणां नासीदसौ गोचरः।
संन्यासेन कृताकृते प्रशमिते ज्ञानेन मोहे हते
धन्योऽनन्यधनो निरन्तरममुं मोक्षं जनो भोक्ष्यते॥ १० ॥

**द्वितीया**—सखि, साधु मन्त्रयसे। स्वरूपलाभ एवायं पुरुषस्य यदानन्दाभिव्यक्तिर्नाम।

निस्तीर्णः सरिति पुरा गिरा परेषामात्मानं दशममजीगणन्त भीताः।
आनन्दस्थगितनिजस्वरूपलाभः पुंसोऽभूदुपनिषदा प्रबोधितस्य॥ ११ ॥

**श्रुतिः**—पुत्रि धर्ममीमांसे, वत्से ब्रह्मविद्ये, शरीरपरतन्त्रो युवयोरानन्दभोगः, न ह्यशरीरं प्रियाप्रिये स्पृशतः। तदयं जीवन्मोक्षोऽपवर्गस्य द्वारि तिष्ठतु। [वत्से बादरायणि,] त्वमेनमेकं दण्डं गृहीत्वा प्रतिपालय।

**ब्रह्मविद्या**—भगवति, किमेकेन दण्डेन। मयास्य प्रतिपालनाय गृहीतास्त्रयो दण्डाः। अयं पुनरानन्दमये परमात्मनि जीवस्य जीवभेदस्य वा लयो नामापवर्गः परमदेऽभिषिच्यताम्।

**श्रुतिः**—अयि सरले, सहजौ सखायाविमौ सुपर्णौ। ये नाम परापरे ब्रह्मणी तयोरेकतरस्यान्यत्र न युज्यते विलयः। भेदस्तु पाषाण इव पयसि पातितः प्रयत्नशतेनापि न विलीयते।

**ब्रह्मविद्या**—तदयमाम्नायविशुद्धो निरन्तरप्रेत्यभावनिदानस्य लिङ्गशरीरस्य विलयो भवत्याः प्रसादमर्हति।

**आन्वीक्षकी**—भगवति श्रुते, को दोषः। सदा तिष्ठत्वयमग्रतो निर्वाणस्य।

**श्रुतिः**—बाढम् ।

**ब्रह्मविद्या**—महानयमनुग्रहो भगवत्याः ।

(प्रविश्य)

**सांख्ययोगौ**—भगवति, बुद्धिवृत्तिनिगमादपगतविषयोपरागविप्लवायाश्चित्ति(ति)शक्तेः स्वरूपावस्थानं नाम विवेकख्यातिपुत्रोऽयमपवर्गपदेऽभिषिच्यताम् ।

**श्रुतिः**—नन्वयं केवलस्यात्मनो निष्प्राकारकमालोचनं नाम ब्रह्मबोधोऽपवर्गस्य पितापि चपलप्राणतया नाभिषिच्यते ।

**आन्वीक्षकी**—आयुष्मन् निर्वाणनामन् अपवर्ग, इत इतः ।

(ततः प्रविशत्यपवर्गः ।)

**अपवर्गः**—भगवति श्रुते, कनिष्ठे भगवत्यान्वीक्षकि, भगवत्यः प्रमाणविद्याः, विवेकपुत्रो निषेधगोत्रोऽहमपवर्गनामाभिवादये ।

**सर्वाः**—वत्स, दीर्घतमेनायुषा वर्धस्व ।

**मीमांसा**—वत्स, प्रभाकरालोकेन प्रत्यभिज्ञातोऽसि । सत्यमसि निषेधगोत्रः, विवेकेन तु पालितः केवलमभूर्न पुनः कस्याप्यपत्यं भवसि ।

**अपवर्गः**—मातर्, अहमधुनैव जातः ।

**श्रुतिः**—वत्स अपवर्ग, इह सिंहासने तावदुपविश । त्वामभिषेक्ष्यामः क्षेत्रज्ञनगराधिराज्ये ।

(अपवर्ग उपविशति ।)

**सर्वाः**—(रत्नकलशैरभिषिच्य निरूप्य ।) यत्सत्यमेवंविधमखिलविषयातिशायिनमपवर्गस्य सुभगभावमवलोक्य जानीमः ।

बुद्धिः शरीरं विषयेन्द्रियाणि सुखं च दुःखैकनिकेतनानि ।
विवेकिने केवलमात्मविद्याविद्योतितात्मा स्वदतेऽपवर्गः ॥ १२ ॥

**श्रुतिः**—वत्स अपवर्ग, अभिषिक्तः क्षणं दृष्टोऽसि । द्रक्ष्यमाणः प्रीणयस्यास्मान् । इच्छामि तव प्रतिष्ठेतिवृत्तस्य केनापि कविना प्रणीतं सारस्वतं प्रबन्धम् ।

**मीमांसा**—प्रत्यक्षपरिकलितेऽर्थे किं कविप्रबन्धेन ।

**आन्वीक्षकी**—मा मैवम् ।

संकेतकेतनोन्मुखदयिताकरतर्जनीव कविसूक्तिः ।
दृष्टमपि दर्शयन्ती रमयति चेतांसि चतुराणाम् ॥ १३ ॥

(श्रुतिः सरस्वतीमनुध्यायति ।)

(ततः प्रविशति सरस्वती ।)

**सरस्वती**—साधु रे नवनवसारस्वतसंसारनिर्माणनूतनप्रजापतयो वात्स्यायनवंशवर्धनाः कवयः,

न स्पृष्टाः कुशकर्कशैस्त्रिभुवनस्रष्टुः करैरष्टभिः
श्रीभर्तुर्न कदर्थिताः करुणया कोपेन वा धूर्जटेः ।
ते स्वप्नेऽपि मया पदैर्न मृदिताः सत्यं रसेभ्यः शपे
युष्माभिर्विषयेषु येष्वभिनवः पन्था ममोन्मीलितः ॥ १४ ॥

(निरूप्य ।) इयमपूर्वा कापि पद्धतिः ।

कथमेकतः शशधराश्मकर्कशा क्षरति क्षपाकृदुदयादिवामृतम् ।
परतः पयोरुहपलाशपेलवा परिवाहिणं रसमसौ निषिञ्चति ॥ १५ ॥

तन्नूनममीषामपारसारस्वतसंसारसरणिपरिकर्मनिर्माणमर्मविदां विदुषां वात्स्यायनवत्सानामेकतमस्य प्रातिभोऽयं पन्थाः । ते हि माध्यंदिनमूर्धन्याः

सुभाषितेर्ष्याकलुषसुलोचनविषानलैः ।
फणं[1] दहन्ति शेषस्य ततः फणदहा मताः ॥ १६ ॥

**श्रुतिः**—वत्से आन्वीक्षकि, सत्यमाह गिरां देवी । भवन्त्येवंविधा एव फणदहद्विजाः । पश्य ।

निगमसरसोमाने दण्डाः प्रमत्तसरस्वती-
स्खलनपतनारम्भे हस्तावलम्बनयष्टयः ।

---

१. 'फन्नावार' इत्याधुनिकमैथिलपञ्जीप्रचरितः. अद्याप्येतद्वंशजा द्विजा भूषयन्ति मिथिलास्थमङ्गरौनीग्राममम्.

सुकृतसदनोपादानं ते भवन्ति भजन्ति ये
रुचिपतिकवेर्वंशस्तम्बप्ररोहकरीरताम् ॥ १७ ॥

**सरस्वती**—(उपसृत्य ।) नमोऽस्तु तुभ्यं पाठ्यगीताभिनयरसानामुत्पत्तये गृहीत ऋक्सामयजुरथर्वमूर्तये भगवत्यै श्रुतये ।

**श्रुतिः**—स्वदन्तां सामाजिकजनाय तव भावा रसाश्च ।

**सरस्वती**—भगवति निखिलवाङ्मयलतासंतानमूलशलाके, कथमनुध्यानेन पावितोऽयं जनः ।

**श्रुतिः**—वत्से, प्रतिष्ठितमपवर्गे सरसेन वाक्प्रबन्धेनोपश्लोकयितुमादिश क्वापि देशे कमपि कवयितारम् ।

**सरस्वती**—नान्यत्र निमिजनपदादीदृशाः कार्कश्यकोमलताकरम्बितप्रबन्धकवयः संभवन्ति । पश्य ।

गाढोपगूढदयितापुलकाङ्कितार्धो
निष्टप्ततैलपरिमृष्टतदन्यभागः ।
सीरध्वजो नरपतिः प्रबभूव येषां
ते तादृशान्प्रसुवते विदुषो विदेहाः ॥ १८ ॥

तेषामपि मध्ये माध्यंदिनचरणगुरवो वत्सवंशवर्धनाः फणदहद्विजा एव जानते समाधिजमथ च ध्वनिजन्मानमानन्दमेकपदेऽनुभावयितुम् ।

**श्रुतिः**—तत्र वंशे विद्यत एव विद्यानिधिः पीताम्बरो नाम, यः किल

प्रकृतिगहने तन्त्रे वैशेषिके विवृतिं व्यधा-
दकुरुत चतुर्वर्गव्याख्यामृतानि च भारते ।
भरतवचसां तत्त्वख्यात्यै निबन्धमभाषत
व्यतनुत तथा तिस्रो वाणीविलासकविः कथाः ॥ १९ ॥

**सरस्वती**—(सास्रम् ।) देवि, मुषिता वयममुना मध्यमं भुवनमपजहता वत्सेन वंशवंशवर्धनेन विद्यानिधिना ।

अशरणमभूद्ब्राह्मं वर्चो निरिन्धनमैधत
ज्वर इव भुवो देव्या दुःसंवरः कलिसंज्वरः ।

अभजत कथाशेषो धर्मः परैरुपहास्यता-
मकुरुत यदा विद्वान्विद्यानिधिर्द्विगुरुं दिवम् ॥ २० ॥

**आन्वीक्षकी**—भगवति, सत्यमेषा मुषिता तपस्विनी। पश्य।

अवितथवचोबन्धे चिन्तावशंवदवाङ्मये
विदति निखिला विद्या विद्यानिधौ दिवमीयषि।
इयमशरणा वाचां देवी लभेत कमाश्रयं
विदितमथवा कृष्णद्वैपायनो भुवि जीवति ॥ २१ ॥

**श्रुतिः**—सत्यमेष न विशिष्यते बादरायणो विद्यानिधेः पीताम्बरात्। तथा हि तस्य

न धुतसमया न ग्राम्या न च्युतक्रमसंस्कृति-
र्न रसरहिता नाश्लीला न प्रसिद्धिविरोधिनी।
न जनितपरोद्वेगा न स्तोकमप्यनृते स्थिता
प्रकृतिगदिताप्यासीद्विद्यानिधेर्विबुधस्य वाक् ॥ २२ ॥

**सरस्वती**—भगवति, न केवलमहमेव निःशरणतया सीदामि। यावदसौ सर्वोऽपि गुणगण एकं समुदायस्थानमलभमानो विप्रकीर्णो यतः कुतश्चिदवतिष्ठते। किं च।

श्रुतमविनयः शौचं दम्भो दमं मतिविभ्रमः
शममलसता दानं गर्वः कुलं प्रबलो मदः।
इति दिवमितः प्राप्ते विद्यानिधौ समुदायतो
बत विघटितं धर्मं पाप्मा निहन्ति पदे पदे ॥ २३ ॥

**श्रुतिः**—वत्से, कथय कस्येदानीममृतोदयप्रबन्धघटनभारमारोपयिष्यसि।

**सरस्वती**—भगवति, अस्ति तस्य परापरब्रह्ममीमांसनमांसलविज्ञानवासनस्य सकलसारस्वतसंसारसरणिविभागविदो विद्यानिधेः पीताम्बरस्य चतुर्णां पुत्राणामेकतमो गोकुलनाथो नाम।

योो जन्मतश्च गुणतश्च मतः कनिष्ठः
श्रीमत्त्रिलोचनकवेश्च धनंजयाच्च।
स श्रीजगद्धरधरातिलकाग्रजन्मा
निर्मास्यति प्रगुणतत्त्वरसं प्रबन्धम् ॥ २४ ॥

यस्य खल्वियं वाचोयुक्तिः—

अधिगतमुपाध्यायाद्विद्यानिधेरनुचिन्तितं
विरलविषयग्राहिण्यापि स्वया जडया धिया।
बहुलमथवा स्तोकं यद्यन्मया श्रुतमर्जितं
परिणतिरियं तस्य प्रीतस्तयास्तु परः पुमान् ॥ २५ ॥

**श्रुतिः**—वत्स, प्रतिहतास्ते परिपन्थिनः। क्षेत्रज्ञनगराधिराज्याभिषिक्तः कविभिरुपश्लोक्यसे। किं ते भूयः प्रियमुपकरोमि।

**अपवर्गः**—मातः, अहं पूर्णोऽस्मि। तदापीदमस्तु—

संसारात्प्राप्य निर्वेदं सर्वे निर्वाणलिप्सया।
श्रवणान्मननाद्ध्यानात्पश्यन्तु पुरुषोत्तमम् ॥ २६ ॥

इति ॥

(निष्क्रान्ताः सर्वे।)

**इत्यपवर्गप्रतिष्ठा नाम पञ्चमोऽङ्कः।**

समाप्तमिदं श्रीगोकुलनाथोपाध्यायकृतममृतोदयं नाम नाटकम् ॥

---

काव्यमाला. ४६.

श्रीमथुरादासविरचिता

# वृषभानुजा।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादद्दारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधिता।

सा च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम्।

१८९५



मूल्यं ६ आणकाः।

# काव्यमाला ।

## कायस्थकुलोद्भवमथुरादासविरचिता
## वृषभानुजा ।

प्रथमोऽङ्कः ।

कपोले पत्रालीं पुलकिनि विधातुं व्यवसितः
स्वयं श्रीराधायाः करकलितवर्तिर्मधुरिपुः ।
यदासीत्तद्बक्रे निहितनयनः कम्पितभुज-
स्तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति ॥ १ ॥

अपि च ।

सुधाधाम्नः कान्तिस्तव वदनपङ्केरुहगुणै-
र्जितेव म्लानत्वं व्रजति सहसा प्राणदयिते ।
वदत्येवं कान्ते दिवसविरहातङ्कचकिता
मुधा सुप्ता राधा तव दिशतु नित्यं प्रियशतम् ॥ २ ॥

अपि च ।

वामांशस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं
वंशीगीतिभवत्रिभङ्गवपुषं भ्रूलास्यलीलाकुलम् ।

---

१. अयं च मथुरादासनामा कविः श्रीगङ्गायमुनातीरवसतौ सुवर्णशेखरनाम्नि नगरे प्रादुर्बभूवेति प्रारम्भ एव सूत्रधारवाक्येन प्रतीयते. परंतु तस्य नगरस्याधुना केनाभिधानेन प्रसिद्धिरिति न ज्ञायते. अतोऽस्य प्राचीनत्वेऽपि न संदेहः. २. अस्याश्च नाटिकायाः पुस्तकद्वयं प्राप्तम्. तत्रैकं पण्डितपत्रे मुद्रितं ख-संज्ञकम्. क-संज्ञकं तु मथुरास्थघुलेपाख्यरघुनाथभट्टानां जयपुरराजगुरुश्रीनारायणपर्वणीकरैः स्वयमेवानाय्य काव्यमालार्थमस्मभ्यं दत्तमिति तेषामुपकारं वर्णयितुमशक्तास्ताननामयाशिषा योजयामः. पण्डितपत्रे मुद्रितस्याप्यस्य सर्वासुलभतामवलोक्य काव्यमालायां योजनं बहूनां प्रार्थनया कृतमिति बोध्यम्. ३. 'अभूद्वक्रेन्दौ यत्' ख. ४. 'तदङ्के संलग्ना तव दिशतु राधा प्रियशतम्' ख. ५. 'पदम्' ख.

किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं
राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम् ॥ ३ ॥

अपि च ।

नीलाम्भोरुहकोशकोमलतनुं सेराननं मालिनं
सुस्निग्धं दधतं दुकूलयुगलं वाग्वैभवस्यास्पदम् ।
स्वीयानां मुदितामृतेन हृदयं संतर्पयन्तं सदा
राधाकेलिकथासु संततरतं ध्यायामि कृष्णाभिधम् ॥ ४ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिव्याहृतेन । अद्य खलु बल्लवविलासिनीभिर्विनिद्रारविन्दवेदनामोदिपरिमलवाहिनीभिः पद्मिनीभिरिव विलोभ्यमानमानसहंसस्य श्रीवृषभानुनन्दिनीपादपद्मरजोरञ्जितोपान्तेन मायूरमुकुटेनालंकृतमौलेः समदकलहंसकामिनीकुलकोलाहलेन पुलिनवलयेन मुखरमेखलया परिगतनितम्बबिम्बेनेव विराजितायास्तपनतनयाया वेलावनान्तलतामण्डपेषु समारब्धकन्दर्पकेलिकलाकलापस्य यशोदानन्दयोर्नयनानन्दजननस्य त्रिभुवनविलोभनीयाभिनवकिशोरवयसः श्रीराधामोहनस्य वृन्दारण्यान्तर्गतानां विहारवनस्थलीनामवलोकनसुखमनुभवितुमनेकदेशान्तरादुपस्थितेन साधुजनवृन्देन समाहूय सादरमभिहितोऽस्मि । यथा—अस्मत्प्रियसुहृदातिप्रबलया भगवद्भक्त्या कायस्थकुलावतंसतामुपगतेन जह्नुकन्यकाकालिन्दीतीरावलग्ने मध्यदेशशिरःशेखरभूते **सुवर्णशेखर**नाम्नि नगरे समवाप्तपरार्ध्यजन्मना श्री**मथुरादासेन** या विरचिता विदग्धजनहृदयकुमुदानन्दैककौमुदी **वृषभानुजा** नामापूर्वनाटिका सा भवताभिनेतव्या । यावन्नेपथ्यविधानं रचयित्वा यथासमीहितं समाचरामि । (परितो विलोक्य । सानन्दम् ।) अये, सुहृद्भूयिष्ठेयं परिषत्कौतुकापहृतचित्तवृत्तिर्लक्ष्यते । सर्वथा तस्य

---

१. 'अस्मिञ्श्लोके श्रीकृष्णस्य, श्रीकृष्णदासाख्यस्य गुरोश्च श्लेषेण वर्णनम्' इति क-पुस्तकटिप्पणी. २. 'वदनाभिः पद्मिनीभि' ख. ३. 'श्रीमद्वृष' ख. ४. 'रुन्मद' ख. ५. 'स्तीरान्तचालितलता' ख. ६. 'तदुपतिष्ठे । (अञ्जलिं बद्ध्वा) भो व्रजेन्द्रनन्दनलीलामृतरसाविष्टचित्तचञ्चरीकाः, क्षणं दत्तावधाना भवत । सोऽहं रङ्गतरङ्गनामधेयो

कवेरमृतरसनिष्यन्दिसूक्तीनां चरितार्थता । स्थाने चास्मत्कलाकलापविन्यासविलासानां प्रवृत्तिरिति । (पुनः सर्वतो विलोक्य । साशङ्कम् ।) ननु तस्य कवेर्मर्मानभिज्ञः कश्चिदिह न भवेत् । (विचिन्त्य ।) भवतु ।

ये वाञ्छन्ति भवच्छिदच्छमतयो ज्ञानं परं मुक्तये
　ते सायुज्यपदं व्रजन्तु सुतरां श्रान्ताः स्वविस्मारकम् ।
ये वैकुण्ठपतेश्च वासवसतौ स्निग्धाः स तैः सेव्यता-
　मेते तत्सुहृदो जयन्ति रसिका राधाधवाराधने ॥ ५ ॥

तदिदानीं गृहं गत्वा जायामाहूय रङ्गमङ्गलानि संपादयामि । (परिक्रम्य नेपथ्याभिमुखमवलोक्य च ।) आर्ये, इतस्तावत् ।

(प्रविश्य)

**नटी**—अज्जउत्त, इअह्मि । आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति । (क)

**सूत्रधारः**—आर्ये, वृषभानुजाप्रयोगाभिनयविलोकनाय कुतूहलिनः पारिषदाः । हृतहृदयोऽस्मि सहजसुहृदामेतेषां प्रीतिप्रकर्षेण प्रेमपुरःसरेण च सततमालापेनेति ।

कदा वृन्दारण्ये नवघननिभं नन्दतनयं
　परीतं गोपीभिः क्षणरुचिमनोज्ञाभिरभितः ।
गमिष्यामस्तोषं नयनविषयीकृत्य कृतिनो
　वयं प्रेमोद्रेकस्खलितगतयो वेपथुभृतः ॥ ६ ॥

तेन हि सत्वरमारभ्यतां गीतकमहोत्सवः ।

**नटी**—(साश्चर्यम् ।) अज्जउत्त, देसन्तरादो आअदेहिं एदेहिं सह पढम-

---

(क) आर्यपुत्र, इयमस्मि । आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति ।

---

नटस्तेन कविना कृतामभ्यर्थनामुदाहर्तुकामः । (प्रणिपत्य ।) प्रयोगबन्धः सरसः कवीनां दृष्टो भवद्भिर्बहुशः सुकान्तः । गुणेन शून्योऽपि मम प्रबन्धः कृष्णप्रसङ्गादवलोकनीयः ॥ (सर्वतो निर्वर्ण्य ।)' इति ख-पुस्तकपाठः.

१. 'तद्धर्मानभिज्ञः' ख. २. 'मेवंप्रायेणालापेन' ख. ३. 'संगीतक' ख.

दंसणेण जेव्व कुदो दे ईरिसी पीई संवुत्ता । जं अज्ज भोअणादिअं वि णाहिणन्दसि । (क)

**सूत्रधारः**—आर्ये, कुत ईदृशी प्रीतिः संवृत्तेत्यलमाशङ्कितेन । यतः ।

हेतुर्नैसर्गिकः कोऽपि प्रीतेर्यदि न वर्तते ।
मालती मधुरास्तीति मधुपः केन शिक्ष्यते ॥ ७ ॥

(नेपथ्ये ।)

साधु भरताधिराज, साधु । सत्यमेवैतत् । कः संशयः । ('हेतुर्नैसर्गिकः कोऽपि' (१।७) इति पठति ।)

**सूत्रधारः**—(समाकर्ण्य । नेपथ्याभिमुखमवलोक्य च ।) आर्ये, किमत्र कालातिपातेन । नन्वेष विरचितवृन्दावेषः समागत एव ममान्तेवासी मधुरप्रियो गृहीत¹तत्सहचरीवनरक्षिकाभूमिकश्च सखा मे रङ्गमङ्गलः । तदावामपि गत्वा रङ्गप्रवेशाय संनद्धीभवावः ।

(इति निष्क्रान्तौ ।)

**इति प्रस्तावना ।**

(ततः प्रविशति यथानिर्दिष्टा वृन्दा वनरक्षिका च ।)

**वृन्दा**—सत्यमेवैतत् । कः संशयः । ('हेतुर्नैसर्गिकः कोऽपि' इति पुनः पठति ।) अन्यथा राधाकृष्णयोः कुमुदिनीकुमुदबान्धवयोरिव कथं तादृशी प्रीतिः । (क्षणं विमृश्य ।) सखि वनरक्षिके, मयाप्यस्मिन्व्यतिकरे किंचिदिव साधु विहितम् ।

**वनरक्षिका**—आवेदेदु भअवदी कधं विअ । (ख)

**वृन्दा**—सखि, समाकर्ण्यताम् । गता यदृच्छयाहं वृषभानुगोपनिकेतनम् । तत्तनयां राधां सुमृष्टमणिकुट्टिमे प्राङ्गणैकप्रदेशे कन्यकासहस्रमध्य-

---

(क) आर्यपुत्र, देशान्तरादागतैरेतैः सह प्रथमदर्शनेनैव कुतस्त ईदृशी प्रीतिः संवृत्ता । यदद्य भोजनादिकमपि नाभिनन्दसि ।

(ख) आवेदयतु भगवती कथमिव ।

---

१. 'गृहीतवन' ख.

वर्तिनीं कुमारीभावोचितानेकलीलारसमनुभवन्तीं परिस्फुरन्त्या निजाङ्गकान्त्या काञ्चनमयीमिव कुर्वतीं स्वपरिसरभुवं विदूरादेवावलोक्य मनसि कृतवत्यस्मि ।

**वनरक्षिका**—तदो तदो । (क)

**वृन्दा**—इयं हि

आत्मानुरूपरमणीयगुणेन तन्वी
सौदामिनीव रुचिरेण नवाम्बुदेन ।
नन्दात्मजेन सह येन लभेत योगं
यत्नः स एव निपुणोऽत्र मया विधेयः ॥ ८ ॥

**वनरक्षिका**—भअवदि, तुह मुहचन्दादो विणिग्गदं इमं राहामोहणमिहुणस्स अण्णोण्णव्वइअरकधासुधारसं सुदिसुत्तिआएहिं समापिबन्तीं आमूलादो आकण्णेदुं तुवरेदि मं तुवाणुग्गहजणिदो मणोरहो । (ख)

**वृन्दा**—

अत्रान्तरे स वृषभानुरुपाजगाम
श्रुत्वा ममागमनमाशु तयानुयातः ।
वत्से समानय करौ सबहुप्रणामं
तामित्यभाषत ततश्च मया स उक्तः ॥ ९ ॥

महाभाग, किमायासयसि महानुभावामेनाम् । यतः ।

इयमतिललिताङ्गी रोचिषामग्रभूमिः
कुसुमशरजयश्री रूपसीमान्तलेखा ।
[1]व्रजपतितनयस्य प्रेमपात्री भवित्री
[2]भवति तव नितान्तं वाञ्छितानां विधात्री ॥ १० ॥

---

(क) ततस्ततः ।

(ख) भगवति, तव मुखचन्द्राद्विनिर्गतमिमं राधामोहनमिथुनस्यान्योन्यव्यतिकरकथासुधारसं श्रुतिशुक्तिकाभ्यां समापिबन्तीमामूलादाकर्णयितुं त्वरयति मां तवानुग्रहजनितो मनोरथः ।

---

१. 'समगुणवरयोगात्' ख. २. 'व्रजपतिरिव कृष्णं पालय त्वं तदेनाम्' ख.

**वनरक्षिका**—भअवदि, सा महाणुभावा राहिआ एदं आकण्णिअ तदो कीरिसी संवुत्ता । (क)

**वृन्दा**—मुग्धतया स्नेहरसानभिज्ञापि सा मदभिहितमुपश्रुत्य मुहुः श्रुतिपरिसरं प्रियवचनमाकर्णयितुमिवोपगतेन तिर्यगपाङ्गेन चक्षुषा मामवलोकयन्ती तत्कालोपजातलज्जयेव किंचिदवनतमुखी स्थिता।

**वनरक्षिका**—अध गोउलेन्दणन्दणस्स वि अणुराओ केण विहिणा समुल्लासिदो भअवदीए । (ख)

**वृन्दा**—सखि, श्रूयताम् । तदाहमिति चिन्तितवती । यदेनां महाभागां स्पृशतीव लज्जादिभावः कृतकृत्याहं संप्रति गोकुलं गत्वा बल्लवेन्द्रनन्दनस्यापि कर्णपथमुपनयाम्यप्रतिममाधुरीं दधानं राधाभिधानं केनचित्प्रसङ्गेन ।

**वनरक्षिका**—तदो तदो । (ग)

**वृन्दा**—ततो मुहूर्तादिव गोकुलमुपगत्य कलरुतैरुन्मत्तमधुकरकुलैरभ्यर्थ्यमानमकरन्दस्योपवनसहकारस्य वेदिकायां क्षणं स्थित्वा सविस्मयं तस्य प्रदेशस्य रामणीयकं निरूपितवत्यस्मि । तथा हि ।

क्वचिद्वैदूर्यस्य द्युतिमभिनवैः शाद्वलचयैः
क्वचित्सद्यः सूतैस्तरुकिसलयैर्विद्रुमरुचिम् ।
क्वचिन्मुक्ताकान्तिं सितमुकुलकैर्यत्परिसरे
हरत्येषा भूमिर्नयनसुभगं गोकुलमिदम् ॥ ११ ॥

अपि च ।

यस्योपान्ते तपनतनयातीरमासाद्य वत्सा
वीताशङ्काः सह खगमृगैर्मन्दमन्दं चरन्ति ।

(क) भगवति, सा महानुभावा राधिकैतदाकर्ण्य ततः कीदृशी संवृत्ता ।

(ख) अथ गोकुलेन्द्रनन्दनस्यापि अनुरागः केन विधिना समुल्लासितो भगवत्या ।

(ग) ततस्ततः ।

१. 'रमणीयतां' ख. २. 'प्रतानैर्दूर्वाणां क्वचिदमलनीलोत्पलरुचं' ख.

गोशालाभिर्बहुभिरभितः कल्पिताभिः किलोच्चैः
प्राकारस्य श्रियमविरलां यच्च कामं बिभर्ति ॥ १२ ॥

धन्याः खल्वेते यदत्र गोपरूपधारिणो मुनय इव विगतान्याभिलापचिन्ताः प्रेमोपरक्तचेतसः सततमस्य नन्दसूनोर्निमेषपराङ्मुखेन चक्षुषा मुखपङ्कजमापिबन्तो निवसन्ति ।

**वनरक्षिका**—तदो तदो । (क)

**वृन्दा**—एवमादिकं चिन्तयन्त्यामेव मयि परिजनादुपलभ्य मदागमनं गोपाधिपतिर्नन्दः सत्वरमुपागतः । सबहुमानं च मामितस्ततः संचरद्युवतिजनसहस्रमणिनूपुररवाहूतानां गृहदीर्घिकाकलहंससारसानां निनादैर्मनोहरम्, प्रस्फुरत्पताकाकोटिविलिखितनभस्तलाभिरायामिनीभिरुच्चैर्मणिस्तम्भसहस्रमुद्वहन्तीभिरतितुङ्गशालाभिरभिभूषितम्, देहलीवलयविनिर्मितनीलरत्नकिरणान्प्रमृष्टमणिकुट्टिमे प्राङ्गणे निपतितान्प्रत्यग्रदूर्वाप्रतानशङ्कया सलीलमालिहद्भिश्चटुलबालवत्सशतैः समुपशोभितम्, कैश्चिद्रत्नभित्तिषु संक्रान्तात्मप्रतिबिम्बकान्युद्वीक्ष्योद्वीक्ष्य कदाचित्समालिङ्गितुमायासितबाहुभिः कदाचिदन्तःशून्यं मुधा मुकुलीकृताङ्गुलिदलं करकमलं गृह्यतामेतदिति संज्ञया प्रहितमनन्तरमाकृष्योपहसद्भिः कदाचित्स्वयमुपरचितमुखभङ्गिविकारतयात्मानं विडम्ब्यमानमधिगम्य समुपजाताभिषङ्गमङ्गुल्या तर्जयद्भिः कदाचित्स्वैरत्नमालिकालंकृतानि संभाव्य ससंभ्रमं निजकण्ठदेशं स्पृशद्भिः कैश्चिदनुसृतभवनमृगशावकैः कैश्चिन्मुक्ताफलशकलप्रदानानन्दितकलहंसपोतकैः कैश्चिद्वनचरोपनीतदाडिमीफलप्रणयिभिरनेकलीलामनोहरिभिर्गोपकुमारकैर्विराजितम्, समुन्नतस्तनतटप्रेङ्खोलितस्थूलमुक्ताफलदामभिः प्रचलत्कनकवलयानुविद्धविविधरत्नोन्मुखमयूखैर्नखत्विषा विभिन्नैर्व्योमाभोगं सेन्द्रायुधमिव कुर्वतीभिः सरभसान्दोलनसंक्षोभोत्सर्पितैर्बिन्दुविसरैर्दुर्दिनतामिवोत्पादयन्तीभिर्गोपवधूभिर्मथ्यमानदधिसमुज्जृम्भितेन तासां

(क) ततस्ततः ।

१. 'गोशालानां ततिभिरभितः कल्पितानां' ख. २. 'धन्यास्ते खलु येऽत्र सततं नन्दसूनोर्मुख' ख. ३. 'च रत्न' ख.

च जघनतटास्फालनरणितमणिकिंकिणीझङ्काररवपीवरेण मङ्गलगीतिस्निग्धगम्भीरसप्तस्वरोपबृंहितेन वियद्व्यापिना निर्घोषेण जलदसंपदमुत्प्रेक्ष्य ससंभ्रममुन्मुक्तकेकानां कलापिकदम्बकानां प्रमोदनर्तितैरलंकृतम्, अनेकशुकसारिकाभिरुद्धुष्यमाणकृष्णाद्भुतचरित्रम्, एकदेशविनिहितैरनेकरसपूर्णैः सुवर्णरजतादिभाजनसहस्रैरुद्भासितम्, एकदेशे च मनोहारिणा क्रीडापर्वतकेन विराजमानमेकदेशे च हुताशनमुपर्युपरि स्थापिताभिः पयःपरिपूरितपात्रपङ्क्तिभिर्दिवसेऽपि भुवि विस्फूर्जिततारकावलीभिरिव संशोभमानम्, सर्वसिद्धीनामुपत्तिस्थानभूतं स्वभवनं नीतवान् ।

**वनरक्षिका**—(स्वगतम् ।) अहो ससिरिअत्तणं णन्दगेहस्स । अह वा सअललोअणिवासो भअवं वासुदेवो सअं जत्थ पडिवसइ तत्थ किं अच्चरिअं । (प्रकाशम् ।) तदो तदो । (क)

**वृन्दा**—तस्यैवंविधस्याङ्गणमध्यभागेऽशेषभुवनश्रियः प्रासादस्येव पारिजातस्याधस्तादलंकृतपद्मरागवेदिकां प्रस्फुरन्तीभिर्निजाभरणप्रभाभिरावृतविग्रहां वनगमनकामं सुतं प्रहर्षगर्भस्निग्धमधुरैर्वचोभिर्लालयन्तीं तत्रभवतीं यशोदाम्—(इति वागसमाप्तावेव ।)

**वनरक्षिका**—(प्रेमविशेषेण बाष्पपूरोपरुद्धकण्ठा कथंकथमपि ।) भअवदि, ताए महाभाआए सिणेहसिणिद्धमहुरवअणस्सवणत्थं सवणाइं मे आउली[1]होन्ति । ता वण्णेदु भअवदी । (ख)

**वृन्दा**—तद्यथा ।

त्वन्मुखाम्बुजविलोकनं विना नो मुहूर्तमपि नेतुमुत्सहे ।
त्वां कथं हि विपिनेऽनुवासरं प्रेष्य तात बत धारयाम्यसून् ॥ १३ ॥

---

(क) अहो सश्रीकत्वं नन्दगेहस्य । अथ वा सकललोकनिवासो भगवान्वासुदेवः स्वयं यत्र प्रतिवसति तत्र किमाश्चर्यम् । ततस्ततः ।

(ख) भगवति, तस्या महाभागायाः स्नेहस्निग्धमधुरवचनश्रवणार्थं श्रवणौ मे आकुलीभवतः । तद्वर्णयतु भगवती ।

---

१. 'आउलाइं होन्ति (=आकुले भवतः)' ख.

**वनरक्षिका**—(सविस्मयमात्मगतम् ।) हन्त, पआसिदो एत्थ पेम्मसंवलिदवच्छलरसो । (प्रकाशम् ।) तदो तदो । (क)

**वृन्दा**—(विलोक्य ।) भक्तिप्रवणेन मनसा प्रणामं ग(कृ)तवत्यस्मि ।

**वनरक्षिका**—तदो केण प्पसङ्गेण समक्खं पिदिरीणं कण्हस्स कण्णावदंसीकिदं राहाअभिधाणत्तवअं भअवदीए । (ख)

**वृन्दा**—ततश्च समुचितातिथिसत्कारसंभारैरुपकल्पितोपचारां मां व्रजेश्वरः सप्रश्रयम् 'कच्चित्कमुद्दिश्यमनुगृह्येहागमनं भगवत्याः' इत्यपृच्छत् । ततश्चावनतकन्धराहं तदा तं प्रति 'भगवन्, अस्मिन्व्रजमण्डले[१] संचरमाणाहं राधाभिधां वृषभानुगोपतनयामतिशयशीलरूपसंपन्नां सर्वलक्षणोपेततयातिधीरप्रकृतितया च विडम्बयन्तीमिव श्रियं विलोक्य रूपमाधुर्यवयःसदृशतया तव सूनोरनुसरन्समुपजातदर्शनकुतूहला चात्रायाता' इत्यवदम्[२] ।

**वनरक्षिका**—तदो तदो । (ग)

**वृन्दा**—अस्मिश्चान्तरे समुदपादि महान्कलकलः । तमाकर्ण्येति चिन्तितं मया—यदेष आपूर्यमाणशङ्खसहस्ररव[३]पूरितदिक्चक्रवालं समभिहन्यमानभेरीमृदङ्गकाहलानकमन्द्रमाङ्गलिकनिध्वानमधुकरम् 'इदमागृह्यताम्, इदमानीयताम्, इत एवागम्यताम्' एवंप्रायैर्गोपकुमाराणां ससंभ्रमालापैर्मुखरितरथ्यामुखं समुल्लसति कोलाहलः । तत्तर्कयामि वनमभि प्रस्थितः कृष्णः ।

**वनरक्षिका**—तदो तदो । (घ)

---

(क) हन्त, प्रकाशितोऽत्र प्रेमसंवलितवात्सल्यरसः । ततस्ततः ।

(ख) तदा केन प्रसङ्गेन समक्षं पित्रोः कृष्णस्य कर्णावतंसीकृतं राधाभिधानस्तबकं भगवत्या ।

(ग) ततस्ततः ।

(घ) ततस्ततः ।

१. 'मण्डले कौतुकेन संचर' ख. २. क-पुस्तके नास्ति. ३. 'रवापूरित' ख.

**वृन्दा**—तदा च परिक्रम्यावलोक्य तं निर्व्याजसुन्दरं मनसि विचारितवत्यस्मि । तथा हि ।

भूषाविभूषणमपि स्फुरदङ्गकान्त्या
माङ्गल्यमेतदिति यं जननी यशोदा ।
प्रायः प्रसाधितवती न तु दीप्तिबुद्ध्या
सोऽयं सुहृत्परिवृतः समुपैति कृष्णः ॥ १४ ॥

(वनरक्षिका सप्रेमातिशयं तत्पादयोः पतति ।)

**वृन्दा**—(पादावाक्षिप्य ।) सखि, इदानीं गत्वा कार्यान्तरमनुतिष्ठावः ।

(इति निष्क्रान्ते ।)

**इति विष्कम्भकः।**

---

(ततः प्रविशति श्रीकृष्णः प्रियालापश्च ।)

**कृष्णः**—(स्वगतम् ।) हन्त, यस्या अभिधानमात्राकर्णनादेवाकुलीभूतं चेतः परवशतामुपैति । दुर्लभदर्शनां तामनालोक्य कथमात्मानं विनोदयिष्ये तावत् । भवत्वेवम् । (प्रकाशम् ।) सखे प्रियालाप ।

**प्रियालापः**—आणवेदु भवं । (क)

**कृष्णः**—

संरुद्धा न भवेदियं समुदितैर्यावत्सुहृन्मण्डलै-
र्वृन्दारण्यविहारभूमिरभितस्तावत्पुरस्ताद्व्रयम् ।
वीक्ष्यैनां सफलप्रसूनसुभगां भृङ्गाङ्गनानिःस्वनां
नृत्यासक्तशिखण्डिमण्डिततरुं तृप्तिं व्रजामो मुदा ॥ १५ ॥

**प्रियालापः**—साहु भणिदं पिअवअस्सेण । अण्णो वि को वि अधिअदररमणिज्जो कोदुअविसेसो तस्सिं पदेसे संभावीअदि त्ति । (ख)

**कृष्णः**—(साभिलाषम् ।) क इव ।

---

(क) आज्ञापयतु भवान् ।

(ख) साधु भणितं प्रियवयस्येन । अन्योऽपि कोऽप्यधिकतररमणीयः कौतुकविशेषस्तस्मिन्प्रदेशे संभाव्यत इति ।

---

१. 'प्रकृतिमधुरं' ख. २. 'मनस्येवं' ख.

**प्रियालापः**—सुदं क्खु मए—एदेसु महुवासरेसु विसहाणुपुरादो भाणुणन्दिणीमज्जणव्ववदेसेण मअणमहूसवं माणेदुं पभादे राहापमुहो कुमारिआअणो वुन्दाडइणिउञ्जवीहिआसंणिवेसं आअच्छदि। (क)

**कृष्णः**—(सस्पृहम्।) ततस्ततः।

**प्रियालापः**—तहिं उण बालतमालविडवमूले पडिट्ठाविदकुसुमाउहस्स णिवत्तिदपूआसक्कारो विविहसुउमारकुसुमेहिं अत्ताणअं मण्डिअ जहासुहं लीलारसं च णिव्विसिअ सघरमग्गं अलंकरेदि त्ति। (ख)

**कृष्णः**—(सपुलकमात्मगतम्।) कथितमम्बाताततयोः समीपे भगवत्या वृन्दयाप्येतत्संबन्धि रहस्यम्। निवेदयति च निमित्तं किंचिदुच्छ्वसितेन मम बाहुरिति सत्वरमनुसरामि तावत्।

**प्रियालापः**—(कृष्णं किंचिदन्यादृशमालोक्यात्मगतम्।) गाढं उक्कण्ठिदो लक्खीअदि एसो। होदु। एव्वं दाव। (प्रकाशम्।) भो वअस्स, कधं दाणिं मं उवेक्खिअ तूण्हीभूदो सि तुमम्। (ग)

**कृष्णः**—किमपि चिन्तयता मया न संभावितोऽसि।

**प्रियालापः**—(विहस्य।) सुदिमग्गेण हिअए पविट्ठं विसहाणुकुमारिअं चिन्तअता त्ति किं ण भणासि। (घ)

---

(क) श्रुतं खलु मया—एतेषु मधुवासरेषु वृषभानुपुरतो भानुनन्दिनीमज्जनव्यपदेशेन मदनमहोत्सवं मानयितुं प्रभाते राधाप्रमुखः कुमारिकाजनो वृन्दाटवीनिकुञ्जवीथिकासंनिवेशमागच्छति।

(ख) तत्र पुनर्बालतमालविटपमूले प्रतिष्ठापितकुसुमायुधस्य निर्वर्तितपूजासत्कारो विविधसुकुमारकुसुमैरात्मानं मण्डयित्वा यथासुखं लीलारसं च निर्विश्य स्वगृहमार्गमलंकरोतीति।

(ग) गाढमुत्कण्ठितो लक्ष्यत एषः। भवतु। एवं तावत्। भो वयस्य, कथमिदानीं मामुपेक्ष्य तूष्णींभूतोऽसि त्वम्।

(घ) श्रुतिमार्गेण हृदये प्रविष्टां वृषभानुकुमारिकां चिन्तयतेति किं न भणसि।

---

१. 'श्रुतं तथा तावद्भगवतीवृन्दामुखात्। अयमप्येवं वदति' ख. २. 'जेव्व किं (एव किं)' ख.

**कृष्णः**—(स्वगतम् ।) लक्षितोऽस्मि धूर्तेन बटुना । (स्मित्वा प्रकाशम् ।) तदविलम्बेनैवादेशय वृन्दाटवीमार्गम् ।

**प्रियालापः**—(परिक्रम्य ।) एदु एदु पिअवअस्सो । एदं क्खु णादिदूरे रमणिज्जं वुन्दावणम् । (क)

**कृष्णः**—(परिक्रामन् । पुरो विलोक्य सहर्षम् ।) अहो अभिरामता वृन्दारण्यस्य । वयस्य, पश्य पश्य ।

इदं मधुरगीतिभिर्मधुकराङ्गनानां सखे
कलापिकुलनर्तितैः पिककदम्बकोलाहलैः ।
लतानववधूलसत्किसलयानुरागोद्गमै-
र्ममागमनमङ्गलं परितनोति मन्ये वनम् ॥ १६ ॥

अपि च ।

भृङ्गालीनयनैर्निमेषविमुखं दूरात्समालोक्य मा-
मानन्दाश्रुजलं स्रवन्ति विगलन्माध्वीकबिन्दुच्छलात् ।
आह्वानं मलयानिलप्रचलितैः शाखाग्रहस्तैश्च मे
सप्रेम प्रथयन्त्युपायनफलैर्नम्राः किलैते द्रुमाः ॥ १७ ॥

तद्वृन्दावननिवासिनां मनोरथसिद्धये त्वरिततरमुपगच्छावः ।

**प्रियालापः**—(सस्मितम् ।) कधं अत्तणो वि मणोरहसिद्धी फुडं ण कहीअदि । (ख)

**कृष्णः**—(स्मित्वा ।) अलं परिहास्येन । गच्छाग्रतः ।

(प्रियालापो नाट्येन तथा करोति ।)

**कृष्णः**—(परिक्रम्य समन्ततो निरूप्य ।) सखे प्रियालाप, परिश्रान्तोऽस्मि । मुहूर्तकमेतेषु मधुमासकुसुमसमृद्धिमधुपानमत्तमधुकरनिकरमधुरझङ्कारमुखरेषु मज्जदङ्गनाजनकदम्बनयनाञ्जनप्रसरसंपर्कतयातितरां श्यामायमानैः

(क) एत्वेतु प्रियवयस्यः । एतत्खलु नातिदूरे रमणीयं वृन्दावनम् ।
(ख) कथमात्मनोऽपि मनोरथसिद्धिः स्फुटं न कथ्यते ।

१ 'अवलोक्य' ख. २. 'परिहासेन' ख.

संसर्पितसीमन्तसिन्दूरप्रवाहलोहितीकृतैः स्तनतटावगलितनवकुङ्कुमपङ्कपुञ्जपिञ्जरितैरतिविमलतया प्रतिमागतैरम्बरतलोल्लसितैरिवेन्द्रायुधशतैस्तरङ्गलेखानिवहैः संशोभिते यमुनाम्भसि समुन्मिषत्कुवलयकह्लारमकरन्दबिन्दुनिकुरम्बकैरम्बितमतिशिशिरशीकरासारमुद्वहता ललितपल्लवाङ्गुलिलतालास्यलीलोपदेशदक्षेण दक्षिणानलेन संसेवितेषु लतानिकुञ्जेषु परिश्रममपनयावस्तावत्।

**प्रियालापः**—(अपवार्य।) कुदो तस्सिं कण्णारअणे समुप्पण्णाणुराअस्स दे परिस्समावणअणम्। (प्रकाशम्।) जं भवं आणवेदि। (क)

(उभौ परिक्रम्योपविशतः।)

(नेपथ्ये।)

चम्पअलदे, उवहर कुसुमाइं। (ख)

**प्रियालापः**—(पुरः कर्णं दत्वा किंचिदिव परिवर्तितकन्धरो नातिप्रकाशम्।) तुवरदु तुवरदु पिअवअस्सो। इमस्सिं माहवीमण्डवे मुद्धकण्णआणं मिदुसद्दो सुणीअदि। (ग)

(कृष्णः समुपसृत्य लतारन्ध्रे किंचिदाकुञ्चितचक्षुः सहर्षकौतुकं स्थितो विलोकयति।)

(ततः प्रविशति ससखीजना राधा।)

**राधा**—हला तमालिए, कुसुमावचअणिमित्तं गदा मे पिअसही चम्पअलदा अज्ज वि ण पडिणिउत्ता। (घ)

---

(क) कुतस्तस्मिन्कन्यारत्ने समुत्पन्नानुरागस्य ते परिश्रमापनयनम्। यद्भवानाज्ञापयति।

(ख) चम्पकलते, उपहर कुसुमानि।

(ग) त्वरयतु त्वरयतु प्रियवयस्यः। अस्मिन्माधवीमण्डपे मुग्धकन्यानां मृदुशब्दः श्रूयते।

(घ) हला तमालिके, कुसुमावचयनिमित्तं गता मे प्रियसखी चम्पकलताद्यापि न प्रतिनिवृत्ता।

---

१. 'करम्बितान्' ख. २. 'सारानुद्व' ख.

(प्रविश्य पुष्पपूर्णपर्णपुटहस्ता सस्मिता)

**चम्पकलता**—पिअसहि राहे, दिट्ठिआ वड्ढसे । कुसुमिदा दाणिं णो मणोरहलदा । (क)

**राधा**—(सभ्रूभङ्गम् ।) अइ कीरिसो मणोरहो । (ख)

**चम्पकलता**—जंदि कुतूहलं तदो अवहिदं सुणादु पिअसही । अज्ज णिसावसाणे दिट्ठो को वि सिविणो मए । विसुमरिदो आसि । (ग)

**राधा**—तदो तदो । (घ)

**चम्पकलता**—संपदं कुसुमावचअकिदे परिक्कमन्तीएँ कावि सुवण्णजूहिआ तमालसंगदा पुलोइदा । (ङ)

(राधा सलज्जमिव स्मेरमुखी तमालिकां सस्नेहं विलोकयति ।)
(चित्तज्ञा)

**तमालिका**—(चम्पकलतां प्रति ।) सहि, तदो किम् । (च)

**चम्पकलता**—सरिसदंसणेण मे सिमिदिपहं आरोहिदो त्ति । (छ)

**प्रियालापः**—(स्वगतम् ।) दढं विमुद्धो क्खु एसो राहारूवलावण्णविब्भमेहिं एत्थ। भोदु । एव्वम् । (समीपतरमागत्योत्सर्पितमुखः साकूतम् ।) भो वअस्स,

---

(क) प्रियसखि राधे, दिष्ट्या वर्धसे । कुसुमितेदानीं नो मनोरथलता ।

(ख) अयि, कीदृशो मनोरथः ।

(ग) यदि कुतूहलं तदावहितं शृणोतु प्रियसखी । अद्य निशावसाने दृष्टः कोऽपि स्वप्नो मया । विस्मृत आसीत् ।

(घ) ततस्ततः ।

(ङ) सांप्रतं कुसुमावचयकृते परिक्रामन्त्या कापि सुवर्णयूथिका तमालसंगता प्रलोकिता ।

(च) सखि, ततः किम् ।

(छ) सदृशदर्शनेन मे स्मृतिपथमारोहितोऽस्ति ।

---

१. 'जइ' ख. २. 'तीए मए' ख. ३. 'अनन्तरं चित्तज्ञा' क.

चिरं इह ट्ठिदेण तुए जं एव्वं पुलोईअदि इन्दीवलकोमलं लोअणजुअलं दे अलसत्तणं नो वअच्छदि । (क)

**कृष्णः**—(किं[1] चिद्विवर्त्याव्यक्तमिव।) सखे, ब्रवीमि भूतार्थम् ।

गच्छति न तृप्तिमेतत्सुललितमस्याः समापिबद्रूपम् ।
नयनयुगं मम नूनं प्रतिसमुपैति सफलतां चैवम् ॥ १८ ॥

**प्रियालापः**—(किंचिद्विवर्णतामापाद्यमानं तन्मुखं निर्वर्ण्योपजातकारुण्यमिव[2]ात्मगतम्।) हन्त, लक्खीकिदो दाणिं लद्धावसरेण कुसुमाउहेण राहारूवस्स अत्तणो अमोघप्पहरणस्स कोमलङ्गओ एसो। (प्रकाशम्।) अध सुदं सव्वं इमाणं मन्तिदम् । (ख)

**कृष्णः**—सखे, मधुरमासां मन्त्रितम् । तदन्यदपि श्रोतुमिच्छामि तावत् ।

**राधा**—(आत्मगतम्।) अवि णाम वदेदि इअं तं जेव्व दुल्लहजणं मं अहिकरिअ जो भअवदीए वुन्दाए तदो तादस्स समीवे पसङ्गेण अभिहिदो आसि । (दक्षिणेतराक्षिस्पन्दोपदर्शितेन शुभनिमित्तेन सप्रत्याशमिव) होदु । पुच्छेमि दाव । (प्रकाशम्।) कधं विअ । (ग)

**चम्पकलता**—(मनाग्भावानुविद्धं तदाकारं विभाव्य । साकूतम्।) सहि, फलेण जेव्व जाणिस्ससि । पुणरुत्तेण किम् । (विचिन्त्य।) अह वा कधइस्सम् । सुणाहि । इमस्सिं जेव्व अदिमुत्तलदामण्डवपरिसरे तुमं किल कस्स वि अणु-

---

(क) दृढं विमुग्धः खल्वेष राधारूपलावण्यविभ्रमैरत्र । भवतु । एवम् । भो वयस्य, चिरमिह स्थितेन त्वया यदेवं विलोक्यते इन्दीवरकोमलं लोचनयुगलं तेऽलसत्वं नो अपगच्छति ।

(ख) हन्त, लक्षीकृत इदानीं लब्धावसरेण कुसुमायुधेन राधारूपस्यात्मनोऽमोघप्रहरणस्य कोमलाङ्गक एषः । अथ श्रुतं सर्वमासां मन्त्रितम् ।

(ग) अपि नाम वदेदियं तमेव दुर्लभजनं मामधिकृत्य यो भगवत्या वृन्दया तदा तातस्य समीपे प्रसङ्गेनाभिहित आसीत् । भवतु । पृच्छामि तावत् । कथमिव ।

---

१. 'कथंचि' ख. २. 'इव' ख.

ववल्लहस्स समीवे णवजलहरस्स विज्जुलदा विअ जह तमालविडवसंगदा सुवण्णजूहिआ लदा सोहमाणा सुहं कीलन्ती चिट्ठसि त्ति। (क)

**कृष्णः**—(आत्मगतम्।) कष्टं भोः। मम हि

स्वप्नेनोदीरितं सख्याः श्रुत्वा श्रुतिसुखावहम्।
आशाबन्धेन सौत्सुक्यं किंचिदुच्छ्वसितं मनः॥ १९॥

किं च।

तथाप्येषाभिधानेन धन्यं कमभिधास्यति।
इति संशयमापन्नं धृतिं न प्रतिपद्यते॥ २०॥

**प्रियालापः**—(सहर्षोद्वेगमात्मगतम्।) जं अवि एदाए उदाहिदं जं अवि तं अणण्णसाहारणं पिअवअस्सस्स जेव्व सरूवम्। तह वि जइ से[1] अभिधाणं फुडं कहिदं भवे। (उपसृत्य। प्रकाशम्।) भो वअस्स, दिट्ठिआ वड्ढसे। सुदं पिअवअस्सेण से वअणम्। तक्केमि भवं जेव्व वल्लहो त्ति। (ख)

**कृष्णः**—(सोच्छ्वासम्।) नीचैः।

प्रसन्नस्ते तर्को यदपि मम चेतोऽपि नितरां
तमेवार्थं सत्यं कलयति सखेऽतीव मधुरम्।
तथाप्यस्या अङ्गं निरुपममथो मे वपुरिदं
न किंचित्सादृश्यं लभत इति कृत्वास्मि विधुरः॥ २१॥

**प्रियालापः**—(विहस्य।) अदो क्खु तुए अणण्णवट्टं समारद्धम्। (ग)

---

(क) सखि, फलेनैव ज्ञास्यसि। पुनरुक्तेन किम्। अथ वा कथयिष्ये। शृणु। अस्मिन्नेवातिमुक्तलतामण्डपपरिसरे त्वं किल कस्याप्यनुरूपवल्लभस्य समीपे नवजलधरस्य विद्युल्लतेव यथा तमालविटपसंगता सुवर्णयूथिका लता शोभमाना सुखं क्रीडन्ती तिष्ठसीति।

(ख) यदप्येतयोदाहृतं यदपि तदनन्यसाधारणं प्रियवयस्यस्यैव स्वरूपम्। तथापि यद्यस्या अभिधानं स्फुटं कथितं भवेत्। भो वयस्य, दिष्ट्या वर्धसे। श्रुतं प्रियवयस्येन तस्या वचनम्। तर्कयामि भवानेव वल्लभ इति।

(ग) अतः खलु त्वयानन्यवृत्तं समारब्धम्।

---

१. 'मुहादो (मुखात्)' इत्यधिकम् ख.

**राधा**—(सप्रणयकोपम् ।) सहि, जा लदा तुए सिविणे तह पुलोइदा सा चम्पअलदा, ण उण सुवण्णजूहिआ। तुमं क्खु अत्तणो मणोगदं सिविणे वि पेक्खसि त्ति। अलं अलीओवहासेण। उवणेहि पूआउवअरणाइं तमालमूले। (क)

(नेपथ्ये ।)

आणत्तम्हि महादेवीए जह—हञ्जे वसुमदिए, वच्छं मे राहिअं सिग्घं गदुअ आणेहि त्ति। ता कहिं दाणिं पेक्खिस्सं तं भट्टदारिअम्। (ख)

**राधा**—(समाकर्ण्य । नेपथ्याभिमुखमवलोक्य च ।) हला चम्पअलदे, एसा दुट्ठचेडी वसुमदिआ समाअदा। उट्ठेहि। अम्बासमीवे गदुअ तुरिदं जेव्व मअणपूआत्थं आअमिस्सम्ह। (ग) (इति सह सखीभिः परिक्रामति ।)

**कृष्णः**—(सदुःखातिशयम् ।) सखे प्रियालाप, तावदावामपि गत्वा गोकुलपरिसरादायान्तं गोव्रजं परिपालयावः।

**प्रियालापः**—अथ किम्। (घ)

**कृष्णः**—(लतारन्ध्रे विलोक्य सोच्छ्वासम् ।)

गच्छन्ती स्वनिकेतं मनसिजभवनप्रदीपिकेवैषा ।
हरति ममेन्द्रियवृत्तिं शरदिव हंसावलीं प्रसभात् ॥ २१ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मथुरादासेन विरचितायां श्रीवृषभानुजानामनाटिकायां प्रथमोऽङ्कः ।

(क) सखि, या लता त्वया स्वप्ने तथा विलोकिता सा चम्पकलता, न पुनः सुवर्णयूथिका। त्वं खल्वात्मनो मनोगतं स्वप्नेऽपि प्रेक्षस इति। अलमलीकोपहासेन। उपनय पूजोपकरणानि तमालमूले।

(ख) आज्ञप्तास्मि महादेव्या यथा—हञ्जे वसुमतिके, वत्सां मे राधिकां शीघ्रं गत्वा आनयेति। तत्कुत्रेदानीं प्रेक्षिष्ये तां भर्तृदारिकाम्।

(ग) हला चम्पकलते, एषा दुष्टचेटी वसुमतिका समागता। उत्तिष्ठ। अम्बासमीपे गत्वा त्वरितमेव मदनपूजार्थमागमिष्यामः।

(घ) अथ किम्।

द्वितीयोऽङ्कः ।

(ततः प्रविशति सवनरक्षिका वृन्दा ।)

**वृन्दा**—(समन्तादवलोक्य । स्वगतम् ।)

कुसुमपरिमलेनामोदितालिर्लतानां
वलितकिसलयानां लास्यलीलोपदेष्टा ।
लुलितकमलवृन्दः शीकरासारवोढा
मृदुमलयसमीरो वाति वैभातिकोऽयम् ॥ १ ॥

(ऊर्ध्वमवलोक्य ।)

मञ्जिष्ठारुणदीधितिर्मधुकरैर्माङ्गल्यगीतिस्तुतः
कोकाह्लादपटुः सरोरुहवनं प्रीत्या समुज्जृम्भयन् ।
लोकालोककरः करैश्च तमसां स्तोमं समुत्सारय-
न्नारोहत्युदयाचलं रविरयं बन्धूककन्दुच्छविः ॥ २ ॥

(मुहूर्तकमिव स्थित्वा । प्रकाशम् ।) सखि वनरक्षिके, दूरोदितो भगवान्सहस्रदीधितिः । किं नागतो गोचारणाय गोकुलेन्द्रनन्दनः ।

**वनरक्षिका**—भअवदि, जह अदूरे को वि मन्तेदि तह तक्केमि कन्हो संणिहिदो भविस्सदि त्ति । वणरक्खाए गच्छह्म । (क)

(इति निष्क्रान्ते ।)

**इति प्रवेशकः ।**

(ततः प्रविशति सप्रियालापः श्रीकृष्णः ।)

**प्रियालापः**—भो वअस्स, माहवीमण्डवसमीवे पुणो वि महुरालावो सुणीअदि । तक्केमि मअणपूआत्थं आअच्छदि राहिआ । एहि । इमिणा लदावीहिआमग्गेण सिग्घं गदुअ तस्सिं तमालमूले अन्तरिदा भविअ चिट्ठम्ह । (ख)

---

(क) भगवति, यथादूरे कोऽपि मन्त्रयति तथा तर्कयामि कृष्णः संनिहितो भविष्यतीति । वनरक्षायै गच्छावः ।

(ख) भो वयस्य, माधवीमण्डपसमीपे पुनरपि मधुरालापः श्रूयते ।

**कृष्णः**—ततः किम्।

**प्रियालापः**—तहिं किल उवहसिदमअणसहस्सो भवं पूआवलिप्पणई भोदु। एक्का तु ममाब्भत्थणा। (क)

**कृष्णः**—(किंचित्स्मित्वा।) कथयतु भवान्।

**प्रियालापः**—गोवड्ढणपूआवलिं विअ सव्वं ण भच्छइस्ससि। वुभुक्खिदं मं वि सुमरिस्ससि। (ख)

**कृष्णः**—(विहस्य।) नायं परिहाससमयः। विशाग्रतः।

(प्रियालापस्तथा कृत्वा सभयं प्रतिनिवृत्य कृष्णमालिङ्गति।)

**कृष्णः**—सखे[1], किमिति कातरोऽसि।

**प्रियालापः**—णिबिडान्धआरा क्खु एसा लदावीहिआ। ण सक्कुणोमि अग्गे गमिदुम्। अणेअसूरसमद्दुदी तुमं अहं विअ विअदभओ भविअ अग्गदो होहि। (ग)

**कृष्णः**—(सस्मितम्।) धिङ्मूर्ख, आत्मगतं भयमपि निरूपयसि। (इति परिक्रामन्पुरो निभाल्य।) सोऽयं तमालद्रुमः। य एष

लतासमालिङ्गितविग्रहो दधत्स्फुरत्प्रसूनैः स्फुटरोमविक्रियाम्।
द्रवन्मधुस्वेदलवैर्विभूषितो व्यनक्ति कामं किल कामिनः श्रियम्॥ ३॥

यावदस्य मूले निलीय परिपालयावस्तत्समागमम्।

(तथा कुरुतः।)

---

तर्कयामि मदनपूजार्थमागच्छति राधिका। एहि। अनेन लतावीथिकामार्गेण शीघ्रं गत्वा तस्मिंस्तमालमूलेऽन्तरितौ भूत्वा तिष्ठाव।

(क) तत्र किलोपहसितमदनसहस्रो भवान्पूजावलिप्रणयी भवतु। एका तु ममाभ्यर्थना।

(ख) गोवर्धनपूजावलिमिव सर्वं न भक्षयिष्यसि। बुभुक्षितं मामपि स्मरिष्यसि।

(ग) निबिडान्धकारा खल्वेषा लतावीथिका। न शक्नोम्यग्रे गन्तुम्। अनेकसूर्यसमद्युतिस्त्वमहमिव विगतभयो भूत्वाग्रतो भव।

---

१. 'प्रियालाप, प्रियालाप,' ख.

**कृष्णः**—(सविषादम्।) सखे प्रियालाप,

अदूरे खलु वासन्तीमण्डपः स इति स्फुटम्।
न जाने प्रणयिन्या मे विलम्बः कथमागतः॥ ४॥

**प्रियालापः**—तेण हि किं वि अग्गे णिगदुव णिरूवइस्सं दाव। (क)

**कृष्णः**—यद्भवते रोचते।

(प्रियालापो नाट्येन तथा कृत्वा पुनः प्रविश्य परीहासेन विषादमूक इव नमितमुखस्तिष्ठति।)

**कृष्णः**—(सशङ्कम्।) सखे, किमित्यवनतमुखस्तूष्णीं स्थितोऽसि।

**प्रियालापः**—ण मे जीहा एत्थ पडिवअणं आमन्तिदुं फुडइ। (ख)

**कृष्णः**—(सनिःश्वासम्।)

दर्शनपदमुपयाता यदवधि मदिरायतेक्षणा सहसा।
तदवधि हृदयेनाहं मदनेषुभयादिवोन्मुक्तः॥ ५॥

(इति मनसिजपीडां रूपयति।)

**प्रियालापः**—(सव्यथमात्मगतम्।) गुरुआहिलासेण पीडिदो क्खु एसो। अलं दाणिं परिहासक्कीळाए। (विहस्य।) पिअवअस्स, मुञ्चेहि विसादम्। माहवीमण्डवादो पत्थिदा क्खु सा इध ज्जेव्व आअच्छदि। एसो हं पुणो वि अण्णेसिदुं गच्छह्मि। (ग)

**कृष्णः**—(दूराद्विसर्पन्तं कमपि मधुरध्वनिमाकर्ण्य सवितर्कमात्मगतम्।)

वासन्तीमधुपानमत्तमधुपध्वानः किमुज्जृम्भते
किं वा हंसकदम्बकूजितमिदं दूरात्समुत्सर्पति।

(क) तेन हि किमप्यग्रे निर्गत्य निरूपयिष्यामि तावत्।

(ख) न मे जिह्वात्र प्रतिवचनमामन्त्रितुं स्फुरति।

(ग) गुरुकाभिलाषेण पीडितः खल्वेषः। अलमिदानीं परिहासक्रीडया। प्रियवयस्य, मुञ्च विषादम्। माधवीमण्डपात्प्रस्थिता खलु सा इत एवागच्छति। एषोऽहं पुनरप्यन्वेष्टुं गच्छामि।

आं ज्ञातं मणिनूपुरध्वनिरयं मद्वल्लभायाः स्फुटं
दृश्यन्ते हि दिशस्तदङ्करुचा हेमाम्बुसिक्ता इव ॥ ६ ॥

(प्रियालापः कृष्णस्य मुखं निरीक्ष्य यथोक्तसंपादनाय निष्क्रान्तः ।)

(ततः प्रविशति सखीभिः परिवारिता राधा ।)

**राधा**—हला चम्पअलदे, अज्ज वि ण संणिहिदो भोदि सो तमालओ । (क)

**चम्पकलता**—अग्गदो एव्व एसो किं ण आलोअदि भोदी । (ख)

(राधा विलोक्य परिक्रामन्ती तदालवालपरिसरे स्थिता ।)

**प्रियालापः**—(तासां दृक्पथं वञ्चयित्वा । प्रविश्य । कृष्णं चालयति ।) भो वअस्स, दिट्ठिआ पात्थिदसिद्धिए वड्ढसे । (अङ्गुल्या दर्शयन् ।) पेक्ख दाव णम् । (ग)

(उभौ निलीय स्थितौ विलोकयतः ।)

**चम्पकलता**—(तमालं राधां च विलोक्य । साकूतम् ।) सहि, का दाणिं तमालमूले ट्ठिदा सुवण्णजूहिआ लदा विअ पडिभादि । (घ)

**कृष्णः**—(स्वगतम् ।) युक्तमुक्तं चम्पकलतया । (सस्पृहमुद्वीक्ष्य ।)

धन्यस्त्वमसि तमाल स्पृष्टस्तन्व्या लतावदनया यत् ।
अद्य स्थावरजन्मा जातस्त्वं जंगमादधिकः ॥ ७ ॥

**राधा**—(सभ्रूभङ्गम् ।) हला, पच्चक्खेण चम्पअलदा तुमं अलीओवमाए मं विडम्बअन्ती ण लज्जसि । (ङ)

**चम्पकलता**—सहि, जो जहिं जुज्जदि सो एव्व तहिं उवमं लहेदि त्ति । (च)

---

(क) हला चम्पकलते, अद्यापि न संनिहितो भवति स तमालकः ।

(ख) अग्रत एवैष किं नालोकयति भवती ।

(ग) भो वयस्य, दिष्ट्या प्रार्थितसिद्ध्या वर्धसे । प्रेक्षस्व तावदेनाम् ।

(घ) सखि, केदानीं तमालमूले स्थिता सुवर्णयूथिका लतेव प्रतिभाति ।

(ङ) हला, प्रत्यक्षेण चम्पकलता त्वमलीकोपमया मां विडम्बयन्ती न लज्जसे ।

(च) सखि, यो यत्र युक्तः स एव तत्रोपमां लभत इति ।

**प्रियालापः**—(श्रुत्वा सहर्षम् ।) पिअवअस्स, दिट्ठिआ लद्धफलो सि । किं अज्ज वि दे संसओ । (क)

**कृष्णः**—सखे, अभिनन्दनीयं ते वचः । तथापि तद्दुर्लभतामाकलय्य दुराशंसि मनः प्रत्ययं न समुपगच्छतीति ।

संनिहितेऽपि दुरापे वस्तुनि मनसोऽनवाप्तविषयस्य ।
भवति न संशयनाशो बहुशोऽप्याश्वास्यमानस्य ॥ ८ ॥

**प्रियालापः**—(सप्रणयकोपम् ।) किं अदिट्ठपुव्वस्स दे सज्जातले आअदिअ उववि‍सदि । अलं परिदेविदेण । जह तुए पुलोइदा सा जइ सकिदपि पुलोअइस्सदि तुमम् । (ख)

**कृष्णः**—(स्मित्वा ।) ततः किम् ।

**प्रियालापः**—तदो क्खु सफलप्पात्थणो भविअ मम तक्किदं सुमरिस्ससि । (ग)

**कृष्णः**—(विहस्य ।) अत एव त्वं प्रियालापः ।

**चम्पकलता**—हला राहे, कधं णिउत्तरा चिट्ठसि । (घ)

(राधानाकर्णितकेनैव सखीभिरुपनीतैर्गन्धपुष्पादिभिः कुसुमायुधं समभ्यर्चयति ।)

**सर्वाः**—(सप्रणाममञ्जलिं बद्ध्वा ।) भवअं कुसुमाउह, सिग्घं ज्जेव्व वरं देहि णो पिअसहीए । (ङ)

**कृष्णः**—सखे, पश्चादागमिष्यति भवान् । अहं तावदात्मानं दर्शयामि । (परिक्रम्योपसृत्य च ।) भोः, कोऽत्र[1] वरं प्रार्थयते ।

---

(क) प्रियवयस्य, दिष्ट्या लब्धफलोऽसि । किमद्यापि ते संशयः ।

(ख) किमदृष्टपूर्वस्य ते शय्यातले आगत्योपविशति । अलं परिदेवितेन । यथा त्वया विलोकिता सा यदि सकृदपि विलोकयिष्यति त्वाम् ।

(ग) तदा खलु सफलप्रार्थनो भूत्वा मम तर्कितं स्मरिष्यसि ।

(घ) हला राधे, कथं निरुत्तरा तिष्ठसि ।

(ङ) भगवन्कुसुमायुध, शीघ्रमेव वरं देहि नः प्रियसख्याः ।

---

१. 'कात्र' ख.

**सर्वाः**—(ससंभ्रमम्।) अज्ज, ण को वि। एदाए णो पिअसहीए अच्ची-अदि भअवं मणोहवो। (क) (इति सस्मितं राधां दर्शयन्ति।)

**राधा**—(प्रणयकोपकलिलां दृष्टिं स्मेरमुखे सखीजने निपात्य तिर्यगपाङ्गेन चक्षुषा तन्मुखमवलोकयन्ती। स्वगतम्।) जह अस्स दंसणादो अणीस म्हि सहिअ-अस्स तह तक्केमि इमिणा तेण दुल्लहजणेण होदव्वम्। (ख)

**कृष्णः**—(राधामुपेत्य।) अयि, कीदृशे वेरेऽभिलाषो वर्तते।

(राधा शृङ्गारलज्जामभिनीयससाध्वसमधोमुखी तिष्ठति।)

**चम्पकलता**—(तथाभूतामुपलक्ष्य। जनान्तिकम्।) हला तमालिए, को वि इमो सिहिसिहण्डसेहरो मणिकण्णपूरंसुजालेण दुदीएण विअ सपल्लवविवि-हकुसुमत्तबकावदंसेण पडिफलिदकवोलफलओ आअदविलोअणेहिं दमिद-प्पवरइन्दीवरप्पहो सहजारुणेण अहरबिम्बेण अहरीकिदं विद्दुमलदं लज्जाएँ अण्णवे णिमण्णं हिअए अवहारिअ विअ किदमहुरम्हिदो अदित्थूलमुत्ता-हलहारलदाए अलंकिदे उरोदेसे हिरण्णद्दुदिपीदकोसेआंसुअं वसाणो ली-लारविन्देण सणाहीकिददक्खणकरकमलो रूवसमुच्चएण मम्महसदस्स वि विमोहणो मुहचन्दादो महुसंमिदाइं महुराहिजादक्खराइं उच्चारअन्तो अहि-णवकिसोरदिव्वाकिदी अङ्गलावण्णप्पहापूरेण कालिन्दीजलसङ्कं समुप्पाअ-अन्तो जह इमाए पिअसहीए मणोमीणं बलेण कक्खदिव्व तह तक्केमि सो कन्हो एसो। अण्णहा से मणोहरणे को अण्णो समत्थो। जेण इमं पेक्खिअ मणोहवसरपढमप्पहारपीडाए विअ जणिदसीक्कारा उम्मिसस्सेदबि-न्दु इन्दुसुन्दरमुही णिरन्तरणिपइदसरणिवहेण विअ समुग्गदेण रोमञ्चजालेण आचिदतणूलदा अविरलोच्छसिदसमीरणेण असकिदअवणीअमाणअंसुअप-

(क) आर्य, न कोऽपि। एतया नः प्रियसख्यार्च्यते भगवान्मनोभवः।

(ख) यथास्य दर्शनादनीशास्मि स्वहृदयस्य तथा तर्कयाम्यनेन तेन दुर्लभजनेन भवितव्यम्।

१. एतदारभ्य 'निपात्य' इत्यन्तः ख-पुस्तके त्रुटितः. २. 'ऽवसरे' ख. ३. 'तथा-भूतां तां कृष्णं चावलक्ष्य' ख. ४. 'विअ (एव) ख. ५. 'आअढत्ति' ख.

ल्लवा सद्धसेण वेवमाणकरकमला लज्जाए वत्तुमसक्का लक्खीअदि एसा । तह ज्जेव्व एसो वि विअदणिमेसं इमं पिअसहिं पुलोअअन्तो आलिहिदो विअ चिट्ठदि । (क)

**तमालिका**—सहि, अहं वि एव्वं विभावेमि । (ख)

**चम्पकलता**—(कृष्णमुपेत्य ।) अज्ज, भवदो दंसणेण ज्जेव्व उवलद्धो वरो । को उण अवरो वरो । भविस्सदि । (ग)

**राधा**—(सप्रणयकोपम् ।) हला, जाणेमि । किं पि वक्कं मन्तेसि । ता इदो गमिस्सम् । (घ) (इति गन्तुमिच्छति ।)

(क) हला तमालिके, कोऽप्ययं शिखिशिखण्डशेखरो मणिकर्णपूरांशुजालेन द्वितीयेनेव सपल्लवविविधकुसुमस्तवकावतंसेन प्रतिफलितकपोलफलक आयतविलोचनाभ्यां दमितप्रवरेन्दीवरप्रभः सहजारुणेनाधरबिम्बेनाधरीकृतां विद्रुमलतां लज्जयार्णवे निमग्नां हृदयेऽवधार्येव कृतमधुरस्मितोऽतिस्थूलमुक्ताफलहारलतयालंकृत उरोदेशे हिरण्यद्युतिपीतकौशेयांशुकं वसानो लीलारविन्देन सनाथीकृतदक्षिणकरकमलो रूपसमुच्चयेन मन्मथशतस्यापि विमोहनो मुखचन्द्रान्मधुसंमितानि मधुराभिजाताक्षराणि उच्चारयन्नभिनवकिशोरदिव्याकृतिरङ्गलावण्यप्रभापूरेण कालिन्दीजलशङ्कां समुत्पादयन्यथास्याः प्रियसख्या मनोमीनं बलेन कर्षतीव तथा तर्कयामि स कृष्ण एषः । अन्यथास्या मनोहरणे कोऽन्यः समर्थः । येनेमं प्रेक्ष्य मनोभवशरप्रथमप्रहारपीडयेव जनितसीत्कारा उन्मिषत्स्वेदबिन्दुरिन्दुसुन्दरमुखी निरन्तरनिपातितशरनिवहेनेव समुद्गतेन रोमाञ्चजालेनाचिततनूलताविरलोच्छ्वसितसमीरणेनासकृदपनीयमानांशुकपल्लवा साध्वसेन वेपमानकरकमला लज्जया वक्तुमशक्ता लक्ष्यत एषा । तथैवैषोऽपि विगतनिमेषमिमां प्रियसखीं विलोकयन्नालिखित इव तिष्ठति ।

(ख) सखि, अहमप्येवं विभावयामि ।

(ग) आर्य, भवतो दर्शनेनैवोपलब्धो वरः । कः पुनरपरो वरो भविष्यति ।

(घ) हला, जानामि । किमपि वक्रं मन्त्रयसे । तदितो गमिष्यामि ।

---

१. 'हला सहि' ख.

(नेपथ्ये महान्कलकलः ।)

अद्य भोः कृष्णमालोकयद्भिर्गोसमूहैरसकृदुच्चैरिवाहूयमानैरपि पदे स्थित्वा स्थित्वा मुहुः पश्चान्मुहुः पुरतोऽर्पितदीनदृष्टिभिरनुपजातपरिचयैरिवातिव्याकुलतामुपनीता वयं यावदस्मिन्नपि लतामण्डपे प्रियालापद्वितीयं तं प्रियवयस्यमन्वेषयामस्तावत् ।

(सर्वाः ससंभ्रममाकर्णयन्ति ।)

**कृष्णः**—(स्वगतम् ।) हन्त, एते गोपाला नूनं मदन्वेषणाय समागताः । (उच्चैः ।) सखे प्रियालाप, अग्रतो भूत्वा निवर्तयैतान् ।

**प्रियालापः**—तह । (क) (इति नाट्येन निष्क्रान्तः ।)

**चम्पकलता**—अज्ज, एदिणा कोलाहलेण अह्माणं हिअए संब्भमो संवुत्तो । ता आणवेदु भवं णो घरगमणत्थम् । (ख)

**कृष्णः**—(सुनिःश्वस्य ।) यद्येवमभिरोचते भवतीभ्यस्तत्सुखेन गम्यतां पुनः समागमाय ।

(सर्वाः परिक्रामन्ति ।)

**राधा**—(गमनभङ्गमभिनीय परावृत्य स्थित्वा ।) हला चम्पअलदे, णिपडिदो एत्थ मम हारलदामज्झदो महाणीलमणी । अण्णेसेहि दाव णम् । (ग)

**कृष्णः**—(स्वगतम् ।)

उपकृतं सखिहारलते त्वया यदनया मदिरेक्षणया वयम् ।
स्मितसुधावलितैर्नयनाञ्चलैश्चलितया परिवृत्य निरूपिताः ॥ ९ ॥

**चम्पकलता**—(कृष्णं राधां चावलोक्य तथान्वेषयन्ती साकूतम् ।) सहि, एहि । गच्छह्म । दुलहो दाणिं सो णीलमणी । (घ) (इति कृष्णं भूयोऽवलोक्य स्मितं करोति ।)

---

(क) तथा ।

(ख) आर्य, एतेन कोलाहलेनास्माकं हृदये संभ्रमः संवृत्तः । तदाज्ञापयतु भवान्नो गृहगमनार्थम् ।

(ग) हला चम्पकलते, निपतितोऽत्र मम हारलतामध्यतो महानीलमणिः । अन्वेषय तावदेनम् ।

(घ) सखि, एहि । गच्छावः । दुर्लभ इदानीं स नीलमणिः ।

(राधानालोकितकेनैव विमनस्केव तिष्ठति।)

**चम्पकलता**—(हारं निरूप्य।) सहि, दोसो तुज्झ हिअअस्स ज्जेव्व। (क)

**राधा**—कधम्। (ख)

**चम्पकलता**—जं सोक्कण्ठेण इमो मणी हारमज्झे ण विभावीअदि त्ति। (ग)

**राधा**—अइ असंबद्धजप्पिणि, कहिं सोक्कण्ठेण। (घ)

**चम्पकलता**—(सोत्प्रासम्।) घरं पडि। (ङ)

**राधा**—(सभ्रूभङ्गम्।) हला, जाणेमि दे वक्कभणिदाइं। ता गमिस्सम्। (इति कृष्णं सस्पृहं स्पृशन्ती सोच्छ्वासं सह सखीभिः प्रस्थिता।) (च)

**कृष्णः**—(सवियोगदुःखम्। स्वगतम्।)

भूयोऽपि मे नयनयोः पथि सुन्दरी सा
यास्यत्यशेषभुवनश्रियमादधाना।
लज्जां विजित्य किमहो न धृता पटान्ते
पूर्वं मया तदधुनालमतिप्रलापैः॥ १०॥

(सुनिःश्वस्य।) य एकः प्रियालापो मे मनोविनोदनायासीत्सोऽपि न जाने कथं विलम्बते।

(ततः प्रविशति प्रमुदितः प्रियालापः।)

**प्रियालापः**—ही ही भोः, किदं क्खु मए जं पिअवअस्सेण आणत्तम्। दाणिं उण सिग्घं गदुअ तं पेक्खिस्सम्। (परिक्रम्य पुरोऽवलोक्य सहर्षम्।) दि-

---

(क) सखि, दोषस्तव हृदयस्यैव।

(ख) कथम्।

(ग) यत्सोत्कण्ठेनायं मणिर्हारमध्ये न विभाव्यत इति।

(घ) अयि असंबद्धजल्पिनि, कुत्र सोत्कण्ठेन।

(ङ) गृहं प्रति।

(च) हला, जानामि ते वक्रभणितानि। तद्गमिष्यामि।

ट्ठिआ इद्य ज्जेव्व आअच्छदि एसो पिअवअस्सो । जाव उवसप्पामि णम् । (ईषद्विदूरादेव निरूप्यात्मगतम् ।) एसो पभादचन्दविपाण्डुरं मुद्धाणणं दधाणो ओणदित्तिमिदद्दिट्ठी अलसवलिदसरीरो हिअएण सह किं पि मन्तअन्तो विअ मणसो मे हरिसं विसादं च उप्पादेदि । तक्केमि ताए विसहाणुकुमारिआए अवहरिदं से मणोरअणं सुणहिअओ जेण संजादो । (समुपसृत्य ।) जेदु जेदु पिअवअस्सो । (क)

**कृष्णः**—(उद्वीक्ष्य ।) किं प्रियालापः । सखे, एह्येहि । चिरविरहितं मां परिष्वजस्व ।

**प्रियालापः**—जं आणवेदि भवं । (नाट्येन तथा कुर्वन् । ससंभ्रममपसृत्य ।) पिअवअस्स, ससिसहस्ससीअलो वि भवं । संपदि किं मम ज्जेव्व विरहेण । अण्णस्स कस्स वि वा अदिमेत्तं संदावं उव्वहदि । अहवा विणिज्जिदरइ-विब्भमा जा विसहाणुकुमारिआ तुअ लोअणपहं पउत्ता तं उद्दिसिअ तुह उण अङ्गलावण्णेहिं अवहीरिदो समुप्पण्णाणुसओ विअ कुसुमाउहो तुमं णिद्दहदि । (ख)

(कृष्णोऽवनतमुखस्तिष्ठति ।)

**प्रियालापः**—भो, अलं लज्जाए । इमस्स मन्दमारुदन्दोलणपइण्णम-

---

(क) ही ही भोः, कृतं खलु मया यत्प्रियवयस्येनाज्ञप्तम् । इदानीं पुनः शीघ्रं गत्वा तं प्रेक्षिष्ये । दिष्ट्या इत एवागच्छत्येष प्रियवयस्यः । यावदुपसर्पाम्येनम् । एष प्रभातचन्द्रविपाण्डुरं मुग्धाननं दधानोऽवनतिस्तिमितदृष्टिरलसवलितशरीरो हृदयेन सह किमपि मन्त्रयन्निव मनसो मे हर्षं विषादं चोत्पादयति । तर्कयामि तया वृषभानुकुमारिकयापहृतमस्य मनोरत्नं शून्यहृदयो येन संजातः । जयतु जयतु प्रियवयस्यः ।

(ख) यदाज्ञापयति भवान् । प्रियवयस्य, शशिसहस्रशीतलोऽपि भवान् । संप्रति किं ममैव विरहेण । अन्यस्य कस्यापि वातिमात्रं संतापमुद्वहति । अथवा विनिर्जितरतिविभ्रमा या वृषभानुकुमारिका तव लोचनपथं प्रवृत्ता तामुद्दिश्य तव पुनरङ्गलावण्यैरवधीरितः समुत्पन्नानुशय इव कुसुमायुधस्त्वां निर्दहति ।

हुसीअरसुरहिसीअलपरिसररत्तासोअविडवस्स वेदिआ उवरि खणं उववि-सिअ परिस्समवणएदु भवं। अहं एत्थ पडीआरं चिन्तेमि। (क)

(उभौ परिक्रम्योपविशतः।)

(प्रियालापो हस्ताभ्यां शिरः पिधाय निमीलितलोचनश्चिन्तां नाटयति।)

(नेपथ्ये कलकलः।)

**प्रियालापः**—(कर्णं दत्त्वा।) पिअवअस्स, एदे गोवाला समाअदा। उट्ठेहि। अत्तणो सुभदंसणेण अमिओवमेण महुरालावेण च इमाणं परिस्समं अवणेहि। (ख)

**कृष्णः**—(ससंभ्रममुत्थाय।) क्वैते क्वैते।

(ततः प्रविशन्ति गोसमूहैरनुगम्यमाना गोपालाः। सर्वे विदूरादेव कृतजयशब्दाः सरभसमुपेत्य कृष्णं परिष्वजन्ते। गावोऽप्यमृतसंभवां तद्गिरं निशम्य प्रेमगर्भितैर्हम्बारवैः पूरितदिगन्तराः परिक्षरत्क्षीरधाराभिर्भुवि क्षीरप्रवाहं दर्शयन्त्यः स्तिमितोर्ध्वकर्णा दूरवि-स्फारितैर्हर्षोपजातास्रुलवप्लुतैर्विलोचनैस्तं विलोकितवत्यः।)

**कृष्णः**—(उत्कलिकावेशेनाकुलीक्रियमाणहृदयः क्षणमिव स्थित्वा सप्रेमसंभाविता-न्गोपालान्प्रति।) भवन्तोऽस्मिन्रमणीये प्रदेशे क्रीडारसमनुभवन्तु। अहं ता-वदस्यां माधवीमण्डपपरिसरभुवि किमपि कार्यान्तरमतिवाहयामि। (इति प्रियालापं पश्यन्समुत्थाय व्यवस्यति गन्तुम्।)

**प्रियालापः**—(अपवार्य।) राहागदोक्कण्ठाक्खित्तहिअअस्स दे परिदे-विदं विणा किं तत्थ विवित्ते अरण्णे कज्जन्तरम्। (प्रकाशम्।) कहिं दाणिं पत्थीअदि पिअवअस्सेण। (ग)

**कृष्णः**—सखे, तामेव प्रियासंचारैरतिपवित्रीभूतां भूमिमभिगम्य

---

(क) भोः, अलं लज्जया। अस्य मन्दमारुतान्दोलनप्रकीर्णमधुशीकरसुर-भिशीतलपरिसररक्ताशोकविटपस्य वेदिकोपरि क्षणमुपविश्य परिश्रममपन-यतु भवान्। अहमत्र प्रतीकारं चिन्तयामि।

(ख) प्रियवयस्य, एते गोपालाः समागताः। उत्तिष्ठ। आत्मनः शुभदर्शने-नामृतोपमेन मधुरालपेन चैषां परिश्रममपनय।

(ग) राधागतोत्कण्ठाक्षिप्तहृदयस्य ते परिदेवितं विना किं तत्र विविक्ते-ऽरण्ये कार्यान्तरम्। कुत्रेदानीं प्रस्थीयते प्रियवयस्येन।

तत्पादपद्व्यादिचिह्नैर्दृशौ विलोभयामि तावत्। (परिक्रम्याग्रतो नीचैर्निरूपयन्। सरोमोद्भेदम्।) सखे, पश्य पश्य।

पदसंततिस्तदीया स्फुटमिह मध्ये गतालिपदवीनाम्।
परिवर्तिताग्रभागैः कथयति मयि साभिलाषतां तस्याः॥ ११॥

**प्रियालापः**—भो वअस्स, लीलाविणोदे जह पढमं दे मणो आसि दाणिं तह ण दीसइ। तक्केमि धण्णाए ताए उवरि अदिमेत्तं दे पेम्मम्। (क)

**कृष्णः**—(सुनिःश्वस्य।)

कुतः प्रेमलवोऽप्यस्ति खले मे हृदये किल।
सुन्दरीं तामनालोक्य यदहं प्राणिमि प्रिय॥ १२॥

**प्रियालापः**—तं ज्जेव्व सुन्दरं क्खु जं भवदो विमोहं उप्पादेदि। (ख)

(उभावुपविशतः।)

**कृष्णः**—(सस्पृहम्।) सखे प्रियालाप, चिन्तितः प्रतीकारो भवता।

**प्रियालापः**—(साटोपं कर्णे।) चिन्तिदो चिन्तिदो। किं पि पारितोसिअं गेण्हिअ कधइस्सम्। (ग)

(कृष्णो विहस्याङ्गुलीयकं दातुमुद्यतः।)

**प्रियालापः**—(स्मितं कृत्वा।) सुणादु पिअवअस्सो। असेसलोअसुन्दरीहिअअहारी भवं जाए लोअणमग्गं गदो विरहपज्जुस्सुआए ताए किं मुहुत्तअं वि आसासो समसुहदुक्खाओ सहीओ अ णु चिन्तअन्ति किं तत्थ पडीआरम्। मा उत्तम्म। मम्महो ज्जेव्व दे वक्खवादी। (घ)

---

(क) भो वयस्य, लीलाविनोदे यथा प्रथमं ते मन आसीदिदानीं तथा न दृश्यते। तर्कयामि धन्यायास्तस्या उपरि अतिमात्रं ते प्रेम।

(ख) तदेव सुन्दरं खलु यद्भवतो विमोहमुत्पादयति।

(ग) चिन्तितश्चिन्तितः। किमपि पारितोषिकं गृहीत्वा कथयिष्ये।

(घ) शृणोतु प्रियवयस्यः। अशेषलोकसुन्दरीहृदयहारी भवान्यस्या लोचनमार्गं गतो विरहपर्युत्सुकायास्तस्याः किं मुहूर्तकमप्याश्वासः समसुखदुःखाः सख्यश्च ननु चिन्तयन्ति किं तत्र प्रतीकारम्। मा उत्ताम्य। मन्मथ एव ते पक्षपाती।

**कृष्णः**—(स्मित्वा प्रियालापं समालिङ्ग्य ।) सखे, असंशयं प्रियालापोऽस्ति ।

**प्रियालापः**—पिअवअस्स, का एत्थ पिआलावदा । ण केवलं एव्वं भणीअदि, मए आकण्णिदं वि । (क)

**कृष्णः**—(सौत्सुक्यस्मितम् ।) आवेदयतु वयस्यः ।

**प्रियालापः**—तदो किं तुमं पेक्खिअ घरं गदा सा कुसुमाउहवाहाए असुत्था संजादा । (ख)

**कृष्णः**—(सव्यथमिव स्वगतम् ।)

हा हन्त सुन्दरि कथं कुसुमायुधस्य
त्वं पुष्पकोमलतरं वपुरुद्वहन्ती ।
सोढासि वज्रविशिखानतिदुर्विषह्या-
न्दुःखं ममात्र सुभगे द्विगुणत्वमेति ॥ १२ ॥

(प्रकाशम् ।) ततस्ततः ।

**प्रियालापः**—तदो सहीएहिं कामयमाणावत्थं तं उवलक्खिअ इहाणेदुं उवकप्पिदो कामलेहो । (ग)

**कृष्णः**—(सप्रत्याशम् ।) ततस्ततः ।

**प्रियालापः**—ता मा विसीद । अविलम्बेण जेव्व साहिअअंअमा इह आअमिस्सदित्ति इमस्स रत्तासोअपाअवस्स मूलं समस्सिअ अलक्खिदसरीरा होम । (घ)

---

(क) प्रियवयस्य, कात्र प्रियालापता । न केवलमेवं भण्यते, मयाकर्णितमपि ।

(ख) तदा किं त्वां प्रेक्ष्य गृहं गता सा कुसुमायुधबाधयास्वस्था संजाता ।

(ग) तदा सखीभिः कामयमानावस्थां तामुपलक्ष्य इहानयितुमुपकल्पितः कामलेखः ।

(घ) तन्मा विषीद । अविलम्बितेनैव सा हृदयंगमेहागमिष्यतीत्यस्य रक्ताशोकपादपस्य मूलं समाश्रित्यालक्षितशरीरौ भवावः ।

(प्रविश्य गवां समीपात् ।)

**सुबलः**—भो वअस्स, गोसमूहो तुमं विणा जलं णाभिणन्ददि । गोट्ठगमणस्स वि संणिहिदो क्खु कालो । ता आअच्छहु भवं । (क)

**कृष्णः**—(सनिःश्वासं प्रियालापं प्रत्यपवार्य ।)

सा सौन्दर्यनिधिर्विलासभवनं मीनध्वजस्यापि वा
　कान्तीनामधिदेवताधिकरणं माधुर्यसारस्य वा ।
तामुद्वीक्ष्य सखे तदादि गतवान्सर्वेन्द्रियाणामहं
　सार्धं तद्गतमानसेन गलितोत्साहः किलानीशताम् ॥ १४ ॥

**प्रियालापः**—तह वि जह तह रामणिज्जम् । (ख)

(इति निष्क्रान्ताः सर्वे ।)

इति मथुरादासेन विरचितायां श्रीवृषभानुजानामनाटिकायां द्वितीयोऽङ्कः ।

---

तृतीयोऽङ्कः ।

(ततः प्रविशति सखीकदम्बकेनानुगम्यमाना राधा ।)

(राधा असह्येन मान्मथविकारेण विह्वलीक्रियमाणा बलात्स्वाकारगुप्तिं रूपयन्ती गमनपरिश्रमं संसूच्य स्थिता ।)

**चम्पकलता**—(स्वहस्तपल्लवेन तन्मुखपङ्कजात्स्वेदाम्भसः शीकरानपमृज्य । सनर्मस्मितम् ।) हला, अवरद्धं तुह णितम्बभरेण एत्थ । अध मा दे परिस्समो भोदु । संणिहिदो क्खु तुह वीसामहेदुओ तमालरुक्खडो । जहिं पच्चक्खीभूदो दे तिलोईमोहणो सो । (ग)

**राधा**—(सम्भ्रमम् ।) अइ, सो को । (घ)

---

(क) भो वयस्य, गोसमूहस्त्वां विना जलं नाभिनन्दति । गोष्ठगमनस्यापि संनिहितः खलु कालः । तदागच्छतु भवान् ।

(ख) तथापि यत्र तत्र रमणीयम् ।

(ग) सखि, अपराद्धं तव नितम्बभरेणात्र । अथ मा ते परिश्रमो भवतु । संनिहितः खलु तव विश्रामहेतुकस्तमालवृक्षकः । यत्र प्रत्यक्षीभूतस्ते त्रिलोकीमोहनः सः ।

(घ) अयि, स कः ।

**चम्पकलता**—कोवणे, मा अण्णहा सङ्केहि । कामरूवो मोहणो त्थि । (क)

**राधा**—(आत्मगतम् ।) किं लक्खिदह्मि एदाए । (प्रकाशम् ।) हला, ण दे वअणं सुणिस्सम् । (ख) (इति गमनं नाटयति ।)

**चम्पकलता**—(कतिपयपदानि गत्वा पुरतस्तमालं विलोक्य राधां प्रति ।) हला, मुहुत्तअं इह वीसमिअ अदूरे जा एसा पच्छाअसीअला कण्हस्स पुप्फवाडिआ णं अलंकरिअ फुल्लपल्लवेहिं मणो विणोदेहि । (ग)

(राधा सह सखीजनेन परिक्रम्य यथोक्तमनुतिष्ठति ।)

(ततः प्रविशति सप्रियालापः सत्वरं कृष्णः ।)

(सर्वाः ससंभ्रमं विलोकयन्ति ।)

**राधा**—(निभृतं निर्वर्ण्यात्मगतम् ।) हिअअ, समस्स समस्स । दाणिं मणोरहपहादो वि अदिलंहिदं दे चिन्तिदम् । (घ)

**प्रियालापः**—भोदि चम्पअलदे, कीस णिच्चं इमाए वाडिआए पुप्फाईं दीहिआए च पंअजाइं चोरिअ अप्पा अलंकरीअदि । (ङ)

**कृष्णः**—(सस्मितम् ।) सखे, अलमनेन प्रसङ्गेन । यतः पुंष्पेपुनतिर्नवयौवनशालिनीनामासां केनापि निवारयितुं न शक्यते ।

**चम्पकलता**—(कृष्णस्य वक्रोक्तिमवधार्य प्रियालापं प्रति ।) अज्ज, जह इमिणा तुह वअस्सेण गोउले वल्लवविलासिणीणं—(इत्यर्धोक्ते सलज्जमिव तिष्ठति ।) (च)

---

(क) कोपने, मा अन्यथा शङ्कय । कामरूपो मोहनोऽस्ति ।

(ख) किं लक्षितास्म्येतया । सखि, न ते वचनं श्रोष्ये ।

(ग) सखि, मुहूर्तकमिह विश्रम्यादूरे यैषा प्रच्छायशीतला कृष्णस्य पुष्पवाटिका एनामलंकृत्य फुल्लपल्लवैर्मनो विनोदय ।

(घ) हृदय, समास्स्व समास्स्व । इदानीं मनोरथपथादप्यतिलङ्घितं ते चिन्तितम् ।

(ङ) भवति चम्पकलते, कस्मान्नित्यमस्या वाटिकायाः पुष्पाणि दीर्धिकायाश्च पङ्कजानि चोरयित्वा आत्मालंक्रियते ।

(च) आर्य, यथानेन तव वयस्येन गोकुले बल्लवविलासिनीनाम् ।

---

१. पुष्पविषयिणी मतिः, कामविषयिणी नतिः.

**प्रियालापः**—अइ उम्मत्ते, किं अवरद्धं मम पिअवअस्सेण वल्लवविलासिणीणम्। (क)

**चम्पकलता**—(विहस्य।) तुह्मेहिं सह घरं घरं हिण्डिअ दहि दुद्धं चोरिदम्, तह अवरं वि जाणेसि। (ख)

**कृष्णः**—(साश्चर्यमात्मगतम्।) कथमन्यतोऽनया धूर्तया नीतः स्वहृद्गताभिप्रायः।

**प्रियालापः**—जइ इमाए तत्तभोदीए संगोइदाइं पुप्फपंअजाइं दंसेमि तदो किम्। (ग)

**चम्पकलता**—(साकूतम्।) जइ इमाए वि हिअअं एत्थ केण वि अच्चरिअविसेसेण चोरिदं ण भवे। (घ)

**प्रियालापः**—तदो किम्। (ङ)

**चम्पकलता**—तदो किम्। चोरिआ भविअ ओणदमुही चिट्ठे। (च)

(राधा सभ्रूभङ्गं सख्या मुखमालोकते।)

**कृष्णः**—अयि सुतनु, कथं कुप्यसे। नन्वेतानि तवाङ्गान्येव चौर्यं स्फुटं कथयन्ति। यतः।

तवाननं सुन्दरि फुल्लपङ्कजं
　स्फुटं जपापुष्पनिभस्तवाधरः।
विनिद्रपद्मं तव लोचनद्वयं
　तवाङ्गमन्यत्किल पुष्पसंचयम्॥ १॥

---

(क) अयि उन्मत्ते, किमपराद्धं मम प्रियवयस्येन बल्लवविलासिनीनाम्।

(ख) युष्माभिः सह गृहं गृहं गत्वा दधि दुग्धं चोरितम्, तथापरमपि जानासि।

(ग) यद्यनया तत्रभवत्या संगोपितानि पुष्पपङ्कजानि दर्शयेयं तदा किम्।

(घ) यद्यस्या अपि हृदयमत्र केनाप्याश्चर्यविशेषेण चोरितं न भवेत्।

(ङ) तदा किम्।

(च) तदा किम्। चोरिका भूत्वावनतमुखी तिष्ठेत्।

(राधा ससाध्वसमधोमुखी तिष्ठति ।)

**कृष्णः**—(स्वगतम् ।) अहो साध्वसेऽप्यस्याः परमा शोभा । तथाहि ।

कुवलयदललक्ष्मीं प्रेक्षितं पक्ष्मलाक्ष्या
ग्लपयति मधुबिन्दुव्यापृतेन्दोः कलङ्कम् ।
कलयति च मुखाब्जं स्वेदलेशोपरक्तं
भयमपि रमणीनां प्रायशो भूषणाय ॥ २ ॥

(नेपथ्ये ।)

पिअदंसणे, जाणेसि पिअसही राहिआ कहिं । भोअणत्थं तं पडिच्छदि महादेवी । (आकाशे श्रुतिमभिनीय ।) किं वदसि—'गदा सहीअणेण सह वाडिआमग्गेण' । ता कहिं दाणिं पेक्खिस्सं तं पिअसहिम् । (क)

**चम्पकलता**—(समाकर्ण्य । जनान्तिकम् ।) हला तमालिए, एसा णाअरिआ त्ति तक्केमि । (ख)

**तमालिका**—एव्वं णेदम् । (ग)

**कृष्णः**—(तदुदीरितं निशम्य सोद्वेगं नातिदूरे तमालतरुखण्डान्तरितो मदनातुरस्तामेव दिशमीक्ष्यमाणः प्रियालापं प्रति ।)

तां यावद्विनयोपचारमधुरैस्तैस्तैर्वचोभिः सखे
तद्भावं च सखीजनस्य हृदयं ज्ञात्वा करोम्युन्मुखीम् ।
तावन्नागरिकासमागमवशाद्दृष्टेर्यथावग्रहः
संजातः प्रतिबन्धको विधिकृतः कोऽयं हहा प्रक्रमः ॥ ३ ॥

**प्रियालापः**—पिअवअस्स, अदिमेत्तं तवइ भअवं सहस्सरस्सी । मुहुत्तअं अस्सिं तमालखण्डन्तरे उववसिह्म । (घ)

---

(क) प्रियदर्शने, जानासि प्रियसखी राधिका कुत्र । भोजनार्थं तां प्रतीक्षते महादेवी । किं वदसि—'गता सखीजनेन सह वाटिकामार्गेण' । तत्कुत्रेदानीं प्रेक्षिष्ये तां प्रियसखीम् ।

(ख) सखि तमालिके, एषा नागरिकेति तर्कयामि ।

(ग) एवं नन्विदम् ।

(घ) प्रियवयस्य, अतिमात्रं तपति भगवान्सहस्ररश्मिः । मुहूर्तकमस्मिंस्तमालखण्डान्तरे उपविशावः ।

**कृष्णः**—(ऊर्ध्वमवलोक्य ।) सत्यमर्धं गतो दिवसः । यतः ।

उत्तप्तोऽयमुरंगमः शिखितलच्छायां समालम्बते
वैरं साहजिकं विहाय स पुनर्मूलं तरोर्गच्छति ।
याचन्ते च जलं निकुञ्जभवने तृष्णातुराः सारिका-
स्तप्ते वारिणि पङ्कजानि मधुपास्त्यक्त्वाश्रयन्ते लताः ॥ ४ ॥

(उभौ परिक्रम्योपविशतः ।)

**कृष्णः**—सखे, तया वियुक्तोऽहमिदानीं केन व्यापारेण दिवसमतिवाहयिष्ये ।

**प्रियालापः**—(विहस्य ।) लोअणाइं णिमीलिअ ताए पणिधाणेण । अहवा सरूवं आलिहिअ दंसणसुहेण । (क)

**कृष्णः**—कुत्रेह लेखोपकरणानि ।

**प्रियालापः**—ण एदं तमालवत्तं केसरकुसुमाणं रसं अ । (ख)

**कृष्णः**—सम्यग्बोधितोऽस्मि । (नाट्येन गृहीत्वा लिखन् ।) यद्यपि वेपते मेऽग्रहस्तः, तथापि कथंचिल्लिखामि । (इति लिखित्वा विलोकयन्सास्रम् ।)

मूर्तिर्मयात्र लिखिता दयिते तवेयं
रूपं यथा तव तथा च यथा कथंचित् ।
आलिख्यते कथमपाङ्गविलासलीला-
लावण्यमङ्गवलनं च सविभ्रमं ते ॥ ५ ॥

**प्रियालापः**—भो वअस्स, आलिहिता तुए एसा कधं दाणिं अस्सुजलेण दूसएसि णम् । (हस्तादपकृष्य स्वकक्षान्तरे निवेशयति ।) (ग)

**कृष्णः**—(परितो निर्वर्ण्य ।) किं परिणतो दिवसः । यथा ।

आवासोत्सुकपक्षिणः कलरुतं क्रामन्ति वृक्षालया-
न्कान्ताभाववियोगभीरुरधिकं क्रन्दत्ययं कातरः ।

---

(क) लोचने निमील्य तस्याः प्रणिधानेन । अथवा स्वरूपमालिख्य दर्शनसुखेन ।

(ख) नन्वेतत्तमालपत्रं केसरकुसुमानां रसश्च ।

(ग) भो वयस्य, आलिखिता त्वयैषा कथमिदानीमश्रुजलेन दूषयस्येनाम् ।

चक्राह्वो मधुपाः सरोजगहनं धावन्त्युलूको मुदं
धत्ते चारुणतां गतो रविरसावस्ताचलं चुम्बति ॥ ६ ॥

**प्रियालापः**—भो वअस्स, मा कविदागव्वं उव्वह। अहं वि इमं वासवासावहूघरादो णिक्कामन्तं मिअलञ्छणं वण्णइस्सम्। (क)

**कृष्णः**—(सस्मितम्।) यद्भवतेऽभिरोचते।

**प्रियालापः**—(संस्कृतेन।)

सुधारश्मिः सद्यस्तिमिरनिकरान्तं विरचय-
न्नलिन्देभ(म्भ):स्पन्दं शशिमणिसमुत्थं च वितरन्।
उदेत्यादौ रक्ताम्बुजसमरुचिः कैरववने
प्रमोदं तन्वानो मधुपवनितागीतिमधुरम् ॥ ७ ॥

**कृष्णः**—(स्मित्वा।) साधु वर्णितं वयस्येन। इदानीं गवां गोष्ठसंचारणाय गच्छावः।

(इति निष्क्रान्तौ।)

(ततः प्रविशति नागरिका।)

**नागरिका**—(राधामुखमालोक्य। जनान्तिकम्।) हला चम्पअलदे, कधं उम्मणाअदि एसा पिअसही। (ख)

**चम्पकलता**—(स्वगतम्।) तक्किदो चउराए इमाए वि से हिअअवुत्तन्तो। किं दाणिं एत्थ कधइस्सम्। होदु एव्वम्। (ग) (प्रकाशम्। अपवार्य संस्कृतेन।)

आलीजनेषु सुतनुः सखि संप्रवृत्ते
कर्णं ददाति रतिकेलिकथाप्रसङ्गे।
बालाजनेन पुरतोऽपि वितत्यमाने
लीलाविधौ च पुनरेव ददाति चित्तम् ॥ ८ ॥

---

(क) भो वयस्य, मा कवितागर्वमुद्वह। अहमपीमं वासवाशावधूगृहान्निष्क्रामन्त मृगलाञ्छन वर्णयिष्ये।

(ख) सखि चम्पकलते, कथमुन्मनायते एषा प्रियसखी।

(ग) तर्कितश्चतुरयानयाप्यस्या हृदयवृत्तान्तः। किमिदानीमत्र कथयिष्ये। भवत्वेवम्।

**नागरिका**—सहि, णूणं से हिअए भअवदा कुसुमाउहेण वासो किदो, जं दुदीआ मिअङ्कलेहा विअ अदिकिसदाए लावण्णमेत्तसेसङ्गजट्ठी सिदकेदअणिभेहिं सपुलअकवोलफलएहिं आपाण्डुरं मिलाअमाणपंअजं विअ आणणं उव्वहन्ती फन्दमाणाहरपल्लवा अदिपिअदंसणा पडिहादि। (प्रकाशम्।) हला राहे, किंपि दुम्मणा भोदि त्ति अवहारिअ वेवइ मे हिअअम्। कहेहि पिअसहि, किं एत्थ कालणम्। (क)

**चम्पकलता**—सहि णाअरिए, मअरद्धजपूआप्पसङ्गेण एदाए अदिअपुव्वो अच्चरिअरूवो—(इत्यर्धोक्ते।) (ख)

**राधा**—(स्वगतम्।) णूणं एसा तं हिअअदइदं जणं वदिस्सदि। (इत्यङ्गुलीदलसंज्ञया वारयति।) (ग)

**चम्पकलता**—तमालरुक्खओ दिट्ठो तदो आरहिअ अदिचइदा क्खु एसा। (घ)

**राधा**—(सानन्दमात्मगतम्) अदिणिउणत्तणेण पसङ्गान्तरं उवणीदा इमाए अत्तणो सरस्सई। (ङ)

**नागरिका**—हला, वण्णेहि तम्। (च)

---

(क) सखि, नूनमस्या हृदये भगवता कुसुमायुधेन वासः कृतः, यद्वितीया मृगाङ्कलेखेवातिकृशतया लावण्यमात्रशेषाङ्गयष्टिः सितकेतकनिभाभ्यां सपुलककपोलफलकाभ्यामापाण्डुरं म्लायमानपङ्कजमिवाननमुद्वहन्ती स्पन्दमानाधरपल्लवातिप्रियदर्शना प्रतिभाति। सखि राधे, किमपि दुर्मना भवतीत्यवधार्य वेपते मे हृदयम्। कथय प्रियसखि, किमत्र कारणम्।

(ख) सखि नागरिके, मकरध्वजपूजाप्रसङ्गेनैतया अत्यपूर्व आश्चर्यरूपः।

(ग) नूनमेषा तं हृदयदयितं जनं वदिष्यति।

(घ) तमालवृक्षो दृष्टस्तदारभ्यातिचकिता खल्वेषा।

(ङ) अतिनिपुणत्वेन प्रसङ्गान्तरमुपनीतानयात्मनः सरस्वती।

(च) सखि, वर्णय तम्।

**चम्पकलता**—(संस्कृतमाश्रित्य।)

उत्फुल्लपङ्कजनिषक्तभसद्विरेफः
किंचिद्विनिद्रकुमुदोत्करसंभृतश्रीः।
आमूलनद्धविविधाद्भुतमाल्यमाल-
श्चित्रं न कस्य तनुते ललितस्तमालः॥ ९॥

**राधा**—(सविषादमात्मगतम्) सण्णेणं निवारिदाए वि एदाए तमालछलेण कधिदं जेव्व। अदिणिउणा उण णाअरिआ सव्वं अवअच्छदि। (क)

**नागरिका**—(स्वगतम्।) णिअदं को वि तमालसामलङ्गच्छवी सिमिदसुहासंभिदउप्फुल्लपुण्डरीअमुद्धाणणो विविहप्पसूणसंचअसंकुलाए पाआलम्बिणीए वेजअन्तीए मअणकरिकणअसिङ्खलाए विअ अलंकिदो अलिविब्भमणवोप्पलविलासेहिं विलोअणेहिं मणोहरो मम्महसंआसो से लोअणपहं पउत्तो। अहवा एदेहिं गुणेहिं अलंकिदो णन्दसूणो जेव्व जणाणणादो सुणीअदि। कदावि सो एत्थ इमाए दिट्ठिगोअरं गदो भवे। (प्रकाशम्।) हला, मं वि दंसेहि तं तमालअम्। (ख)

(चम्पकलतेषदुपदर्शितस्मिता राधामुखं पश्यति।)

**राधा**—(विचिन्त्य। आत्मगतम्।) अदूरे भविस्सदि सो दुल्लहजणो। परिहाससीला क्खु एसा चम्पअलदा। कदा वि णाअरिआ दिट्ठिपहं करेदि तम्। (इति नागरिकामग्रहस्ते गृहीत्वा।) हला, अम्बा मं विणा दुक्खमणुभोदि ता घरं गमिस्सम्। (इति सखीभिः सह निष्क्रान्ता।) (ग)

---

(क) संज्ञया निवारितयाप्येतया तमालच्छलेन कथितमेव। अतिनिपुणा पुनर्नागरिका सर्वमवगच्छति।

(ख) नियतं कोऽपि तमालश्यामलाङ्गच्छविः स्मितसुधासंभृतोत्फुल्लपुण्डरीकमुग्धाननो विविधप्रसूनसंचयसंकुलया पादावलम्बिन्या वैजयन्त्या मदनकरिकनकशृङ्खलयैवालंकृतोऽलिविभ्रमनवोत्पलविलासाभ्यां विलोचनाभ्यां मनोहरो मन्मथसंकाशोऽस्या लोचनपथं प्रवृत्तः। अथवा एतैर्गुणैरलंकृतो नन्दसूनुरेव जनाननाच्छ्रूयते। कदापि सोऽत्रास्या दृष्टिगोचरं गतो भवेत्। सखि, मामपि दर्शय तं तमालकम्।

(ग) अदूरे भविष्यति स दुर्लभजनः। परिहासशीला खल्वेषा चम्पकलता।

(प्रविश्य सत्वरा)

**विद्रुमलता**—(परिक्रम्यावलोक्य च । आकाशे।) मुणालिए, अदि-असुत्था पिअसही राहिआ । ताए किदे दीहिआदो बिसिणीवत्ताइं आणेदुं गदा पिअसही कअलिआ दिट्ठा तुए । (श्रुतिमभिनीय ।) किं वदसि—'चिरेण कालेण गेण्हिअ गदा । अहं वि आणत्तम्हि भअवदीए वुन्दाए—जह वच्छे विद्दुमलदे, गच्छ सिग्घम् । कण्हस्स गोउलादो गोधूलिं अध केसितित्थादो जलं उसीरादिअं च समाहर' । ता तहिं गच्छह्मि । तुमं उण एदं कप्पूरं विलेवणं च गेण्हिअ पत्थिदासि । ता तुरिददरं गच्छ । (क)

(इति निष्क्रान्ते ।)

(ततः प्रविशति विरहपर्याकुलः कृष्णः ।)

**कृष्णः**—सखे प्रियालाप,

तस्याः किं मुखपङ्कजं स्मितरुचा चन्द्रद्युतेर्निन्दकं
　किं वा नेत्रयुगं कटाक्षचतुरं किं भ्रूलताविभ्रमम् ।
किं च स्निग्धमवेक्षितं मयि पुनर्यान्त्या सखीनां पुरः
　किं किं संप्रति चिन्तयामि हृदये कामेन लक्षीकृते ॥ १० ॥

अपि च ।

तां हेमचम्पकरुचिं मृगशावकाक्षीं
　पार्श्वे स्थितां च पुरतः परिवर्तमानाम् ।
पश्चात्तथा दशदिशासु परिस्फुरन्तीं
　पश्यामि तन्मयमहो भुवनं किमेतत् ॥ ११ ॥

---

कदापि नागरिका दृष्टिपथं करोति तम् । हला, अम्बा मां विना दुःखमनुभवति तद्गृहं गमिष्यामि ।

(क) मृणालिके, अत्यस्वस्था प्रियसखी राधिका । तस्याः कृते दीर्घिकातः बिसिनीपत्राण्यानेतुं गता प्रियसखी कदलिका दृष्टा त्वया । किं वदसि—'चिरेण कालेन गृहीत्वा गता । अहमपि आज्ञप्तास्मि भगवत्या वृन्दया—यथा वत्से विद्रुमलते, गच्छ शीघ्रम् । कृष्णस्य गोकुलतः गोधूलिमथ केशितीर्थतः जलमुसीरादिकं च समाहर'। तत्तत्र गच्छामि । त्वं पुनरिदं कर्पूरं विलेपनं च गृहीत्वा प्रस्थितासि । तत्त्वरिततरं गच्छ ।

**प्रियालापः**—अच्चरिअं अच्चरिअम् । जं पेक्खिअ भवं वि एव्वं विम्हिदो, ता चउद्दहलोए सुरगन्धव्वकिण्णरणाअकण्णआणं मज्झे ण का वि तादिसीत्ति तक्केमि । (क)

**कृष्णः**—सखे, एवमेतत् । न खलु सा वेधसः सृष्टिः । तस्याः किलाङ्गान्यमृतसंभवानि, न तु पञ्चभौतिकानि । तथा हि ।

अमृतं तदधरबिम्बे वचनेष्वमृतं विलोकनेऽप्यमृतम् ।
अमृतमृतौ कुचकुम्भौ सत्यं सा सृष्टिरमृतस्य ॥ १२ ॥

(मदनबाधां रूपयन्दीर्घमुष्णं च निःश्वस्य ।)

भवनेत्रभवो वह्निरद्यापि त्वयि मन्मथ ।
ज्वलत्येवान्यथा किं ते विशिखास्तत्कणा इव ॥ १३ ॥

**प्रियालापः**—समस्सदु समस्सदु पिअवअस्सो । (हस्तेन वेत्रलतामुद्यम्य सक्रोधं तमालमूले प्रतिष्ठितं कुसुमायुधं ताडयितुमभिसरन् ।) रे वराअ कुसुमाउह, तुमं जेव्व मम पिअवअस्सं एव्वं संदावेसि । ता गेण्ह इमं मम हत्थादो सुदिढप्पहारम् । (ख)

**कृष्णः**—(सस्मितम् । तद्बाहुमाकृष्य ।) सखे, तत्प्रतिनिधिं परिकल्प्य पूज्यते, न तु साक्षादयम् ।

**प्रियालापः**—(परावृत्य ।) एव्वं भो अलं दाणिं पलविदेण । इमस्सिं माहवीमण्डवे मुहुत्तअं उवविसिअ मणो विणोदेदु भवम् । (ग)

**कृष्णः**—यद्भवतेऽभिरोचते ।

(उभावुपविशतः ।)

(क) आश्चर्यमाश्चर्यम् । यां प्रेक्ष्य भवानप्येवं विस्मितः, तच्चतुर्दशलोके सुरगन्धर्वकिंनरनागकन्यकानां मध्ये न कापि तादृशीति तर्कयामि ।

(ख) समाश्वसितु समाश्वसितु प्रियवयस्यः । रे वराक कुसुमायुध, त्वमेव मम प्रियवयस्यमेवं संतापयसि । तद्गृहाणेमं मम हस्ततः सुदृढप्रहारम् ।

(ग) एवं भो अलमिदानीं प्रलपितेन । अस्मिन्माधवीमण्डपे मुहूर्तकमुपविश्य मनो विनोदयतु भवान् ।

(प्रविश्य सत्वरम्)

**श्रीदामा**—पिअवअस्स, अस्सिं अवरण्हे गोवद्धनसिहरादो वच्छसमूहं पेक्खिअ किदहम्भारवो गोकदम्बओ तह पधाविदो जह अम्हाणं वअणेहिं वि ण पडिणिउत्तो। उट्ठेहि। अत्तणो मुरलीणादेण तं पडिणिउत्तेहि। (क)

(कृष्णः ससंभ्रमं मुरलीमादाय प्रवृत्तो गन्तुम्।)

**प्रियालापः**—(अग्रतो विलोक्य सकौतुकं कृष्णस्य कर्णे।) पिअवअस्स, भंवरेहिं चुम्बिअमाणं एदं मिआअमाणणीलोप्पलं दे पेअसीए कण्णादो णिपइदं तक्केमि। (गृहीत्वा हस्तेऽर्पयति।)•(ख)

**कृष्णः**—(क्षणं हृदये निधाय सोच्छ्वासम्। स्वगतम्।)

मन्ये तल्लोचनापाङ्गैः श्रुतिसीम्नि परायणैः।
असूययेव खल्वेतत्प्रसभेन निपातितम्॥ १४॥

अपि च।

स्थाने म्लानत्वमेतस्य श्रुतेर्निपतितं यतः।
पुनस्तत्पदमारोढुं स्वाङ्गं शोषयतीव तत्॥ १९॥

(इति निष्क्रान्ताः सर्वे।)

इति मथुरादासेन विरचितायां श्रीवृषभानुजानामनाटिकायां तृतीयोऽङ्कः।

---

चतुर्थोऽङ्कः।

(ततः प्रविशति विषण्णा चम्पकलता।)

**चम्पकलता**—अवि कहिं भविस्सदि मे पिअसही तमालिआ। (पुरो विलोक्य।) दिट्ठिआ इध ज्जेव अहिवट्टदि। (ग)

---

(क) प्रियवयस्य, अस्मिन्नपराह्णे गोवर्धनशिखरतो वत्ससमूहं प्रेक्ष्य कृतहम्भारवो गोकदम्बकस्तथा प्रधावितो यथास्माकं वचनैरपि न प्रतिनिवृत्तः। उत्तिष्ठ। आत्मनो मुरलीनादेन तं प्रतिनिवर्तय।

(ख) प्रियवयस्य, भ्रमरैश्चुम्ब्यमानमेतन्म्लायमाननीलोत्पलं ते प्रेयस्याः कर्णान्निपतितं तर्कयामि।

(ग) अपि कुत्र भविष्यति मम प्रियसखी तमालिका। दिष्ट्या इहैवाभिवर्तते।

(ततः प्रविशति तमालिका ।)

**तमालिका**—(चम्पकलतामुखं दृष्ट्वा सविषादम् । संस्कृतेन ।)

उत्पादयत्यलमिदं मनसो विषादं
सीदत्सरोरुहनिभं वदनं त्वदीयम् ।
ज्ञात्वा निदानमहमत्र समानदुःखा
प्राणैरपि प्रियतमे भवितुं समीहे ॥ १ ॥

**चम्पकलता**—हला, सुट्ठु लक्खिदं तुए । असंमुद्धं सुणाहि । (क)

**तमालिका**—अवहिदह्मि । कहेहि । (ख)

**चम्पकलता**—जदो पहुदि पिअसहिराहिआए सोरूवविहवेण अदिसइदकुसुमाउहसहस्सो कण्हो पुलोइदो तदो आरहिअ कुविदस्स विअ मम्महस्स पअवसा ण कुदोवि वीसामं पडिवज्जदि । सबहुविणअं पात्थमाणा वि ण मज्जणादिदिवसव्वावारे रुइं उव्वहदि । एदं क्खु अहिगदं जेव्व तुए । (ग)

**तमालिका**—(स्वगतम् ।) अत्थि मम हिअए वि सल्लं क्खु एदम् । (प्रकाशम् ।) तदो तदो । (घ)

**चम्पकलता**—विसेसदो अज्ज सव्वणिसामज्जे खणं वि णिद्दासुहं ण पाविदम् । अन्तरा अन्तरा अ आमीलिअ लोअणाइं एवमादिअं असंबद्धं पलविदम् । (ङ)

---

(क) सखि, सुष्ठु लक्षितं त्वया । असंमुग्धं शृणु ।

(ख) अवहितास्मि । कथय ।

(ग) यदा प्रभृति प्रियसखिराधिकया स्वरूपविभवेनातिशयितकुसुमायुधसहस्रः कृष्णः प्रलोकितस्तदारभ्य कुपितस्येव मन्मथस्य परवशा न कुत्रापि विश्रामं प्रतिपद्यते । सबहुविनयं प्रार्थ्यमानापि न मज्जनादिदिवसव्यापारे रुचिमुद्वहति । एतत्खल्वधिगतमेव त्वया ।

(घ) अस्ति मम हृदयेऽपि शल्यं खल्वेतत् । ततस्ततः ।

(ङ) विशेषतोऽद्य सर्वनिशामध्ये क्षणमपि निद्रासुखं न प्राप्तम् । अन्तरा अन्तरा चामील्य लोचने एवमादिकमसंबद्धं प्रलपितम् ।

**तमालिका**—(सरभसम् ।) तदो तदो । (क)

**चम्पकलता**—(संस्कृतेन ।) तद्यथा ।

कार्यं मे नहि किंचिदस्ति कमलोत्तंसेन सख्यः कथं
मुग्धां मां प्रसभं रुणद्धि सभयं व्याक्रोशमानामपि ।
धूर्तोऽयं करपङ्कजेन शिरसि व्याबद्धमानो हस-
न्नात्मानं बहु मन्यते स्वमुकुटप्रान्तेन पादौ स्पृशन् ॥ २ ॥

**तमालिका**—(सविस्मयमात्मगतम् ।) जादो क्खु सअलजीअलोअस्स णिदंसणं ताए पेम्मावेसो । (प्रकाशम् ।) तदो तदो । (ख)

**चम्पकलता**—तदो देवीए पुच्छिदा अहं जह—'वच्छे चम्पअलदे, अवि जाणेसि से उव्वेअआरणम्' । (ग)

**तमालिका**—तदो तदो । (घ)

**चम्पकलता**—तदो कण्हस्स विरहं फुडं जाणन्तीए वि मए एव्वं पडिबोधिदा देवी । (ङ)

**तमालिका**—तदो तदो । (च)

**चम्पकलता**—सुणादु पिअसही । (छ) (संस्कृतमाश्रित्य ।)

गतेयं कल्याणी तपनतनयां मज्जनविधिं
विधातुं तत्तीरे किमपि कमनीयं सकुतुकम् ।
विलोक्यान्तर्बाधामभजत तदारभ्य सहसा
शमं नेतव्यं तद्बलिविरचनैर्दैविकमिदम् ॥ ३ ॥

---

(क) ततस्ततः ।

(ख) जातः खलु सकलजीवलोकस्य निदर्शनं तस्याः प्रेमावेशः । ततस्ततः ।

(ग) तदा देव्या पृष्टाहं यथा—'वत्से चम्पकलते, अपि जानासि अस्या उद्वेगकारणम् ।

(घ) ततस्ततः ।

(ङ) तदा कृष्णस्य विरहं स्फुटं जानन्त्यापि मयैवं प्रतिबोधिता देवी ।

(च) ततस्ततः ।

(छ) शृणोतु प्रियसखी ।

**तमालिका**—(सहर्षस्मितम् । संस्कृतेन ।)

कस्यान्यस्येदृशो बुद्धेर्विभवो वर्तते सखि ।
यो बलिव्यपदेशेन देवीं बोधयितुं क्षमः ॥ ४ ॥

तदो तदो । (क)

**चम्पकलता**—तदो आणत्तं देवीए—'जह जीविदसव्वस्सं वच्छा मे राहिआ पइदिमावज्जदि तह करेहि'। (ख)

**तमालिका**—हला, सुविहिदं तुए। सिग्घं णेदव्वा सा पिअसही दाणिं तत्थ । (ग)

(इत्युभे निष्क्रान्ते ।)

(अनन्तरं नाट्येन राधामुपेत्य तादृगवस्थां तां विभाव्य विस्मयस्मेरचक्षुषान्योन्यमवलोकयतः । मुहूर्तकमिवोपविश्य पौनःपुन्येन तच्चेष्टां निरूप्य च ।)

**तमालिका**—(चम्पकलतां प्रति । संस्कृतेन ।)

नव्याम्भोधरमम्बरे सुविलसत्सौदामिनीसंगतं
सेर्ष्यं पश्यति बर्हिणां च विरुतिं श्रुत्वा सरोमोद्गमम् ।
कम्पं चम्पकदामकोमलरुचौ स्वेदं च धत्ते तनौ
मन्ये मन्मथकोटिमोहनवपुः कृष्णोऽनया स्मर्यते ॥ ५ ॥

**चम्पकलता**—(मुहुस्तन्मुखाम्बुजाग्रे मुहुर्नासावंशाग्रभागे पर्यस्ताङ्गुलिहस्तेन करकमलेन स्पर्शमभिनयन्ती साकूतम् । संस्कृतेन ।)

श्वासास्ते सखि सूचयन्त्यविरताः संतापबाधां परं
विघ्नस्तत्र न कारणं वयमिति स्वान्तेति चिन्ताभरः ।
किं बाह्यातपपीडिता तव तनूवल्ली निकामं प्रिये
पुष्पादप्यतिकोमला मलिनतां याता मृणाली यथा ॥ ६ ॥

(राधान्तर्निगूढमनसिजेनासह्यं पीड्यमाना वैक्लव्यं रूपयति ।)

**सख्यः**—(करुणातिशयम् ।) हला राहे, उम्मीलअ लोअणाइं । कधं अ-

---

(क) ततस्ततः ।

(ख) तदाज्ञप्तं देव्या—'यथा जीवितसर्वस्वं वत्सा मे राधिका प्रकृतिमापद्यते तथा कुरु ।

(ग) सखि, सुविहितं त्वया । शीघ्रं नेतव्या सा प्रियसखीदानीं तत्र ।

णक्खरासि संजादा । (इत्येवं मुहुर्मुहुः समाश्वास्य तालवृन्तानिलादिकोपायैः कथमपि चेतनां आहितवत्यः ।) (क)

**चम्पकलता**—(साकूतम् ।) सहि, जह तह उट्ठेहि । दे आदवपीडोवसमत्थं तं लदावलअप्पदेसं विणा अण्णं सइणं ण अवअच्छम्हि । (ख)

(ततः प्रविशति बलाच्चम्पकलतया दत्तहस्ता तामेवावलम्ब्य कथंचित्सखेदं गमनमभिनयन्ती सखीभिः सह राधा ।)

**राधा**—(सनिःश्वासम् ।) अम्महे, अदिणीसहा समुप्पण्णा हिअए मे वेअणा । (ग)

**सख्यः**—(सविषादम् ।) अइ लज्जालुए, ण क्खु दे हिअअवेअणाए णिदाणं जाणीअदि । अह वा कण्हस्स दंसणं एत्थ कालणम् । (घ)

**राधा**—(तमाकर्ण्य मूर्च्छामुपगच्छति । मुहूर्तादिव ससंभ्रमं सखीजनप्रयुक्तवीजनादिकप्रयत्नैः संज्ञामवाप्य । संस्कृतेन ।)

किं स्वप्नः किमु जागरः किमथवा रात्रिः किमास्ते दिनं
　मोहावस्थितया मया न किमपि ज्ञातं किमेतत्सखि ।
यन्नामश्रवणादनन्तरमिदं वृत्तं तमेव प्रियं
　चेतोदुर्लभमप्यपास्त सकलव्यापारमाकाङ्क्षति ॥ ७ ॥

अपि च ।

स्वप्नान्तरेषु दिनशः समुपेत्य धूर्तो
　धत्ते मुखं मम मुखोपरि चाटुकारः ।
पादावलक्तकरसेन च रञ्जयित्वा
　कर्णे शिरीषकुसुमं प्रसभं दधाति ॥ ८ ॥

(सख्यः सविस्मयं परस्परमवलोकयन्ति ।)

---

(क) सखि राधे, उन्मीलय लोचने । कथमनक्षरासि संजाता ।

(ख) सखि, यथा तथा उत्तिष्ठ । ते आतपपीडोपशमार्थं तं लतावलयप्रदेशं विनान्यं शरणं नावगच्छामि ।

(ग) अहो, अतिनिःसहा समुत्पन्ना हृदये मे वेदना ।

(घ) अयि लज्जालुके, न खलु ते हृदयवेदनाया निदानं ज्ञायते । अथवा कृष्णस्य दर्शनमत्र कारणम् ।

**चम्पकलता**—(जनान्तिकम् ।) हला तमालिए, कामं अणुभोदि मणोहववेअणं एसा । दाणिं क्खु उवेक्खणीआ ण भोदि । तुरिदं जेव्व कप्पणिज्जो कामलेहो । (क)

**तमालिका**—जुत्तं मन्तेसि । (ख)

**चम्पकलता**—(राधां प्रति ।) हला, सलाहणिज्जो दे अहिलासो । जेण तं लोआभिरामं वज्जिअ कुदो भवादिसीणं हिअअप्पउत्ती । ता मा विसीद अहुणा । णिउणं जाणिअ चिन्तीअदि पडीआरो अम्हेहिं । (ग)

(सर्वाः परिक्रम्य वाटिकाबकुलपादपच्छायामाश्रित्योपाविशन्ति ।)

**चम्पकलता**—(उत्तरीयांशुकपल्लवेन शनैः शनै राधामुपवीजयन्ती तन्मौक्तिकहारस्य मध्यमणिं हस्तेनोन्नमय्य ।) हला तमालिए, संपदं इमं धारेदुं असमत्था एसा किसङ्गी । ता अत्तणो अंसुअअञ्चले रक्खिस्सम् । (घ)

**तमालिका**—अणुमदं क्खु मे । (ङ)

**चम्पकलता**—(तथा करोति । अथ नाट्येन भूर्जपत्रमादाय कामलेखनिमित्तं राधाहस्ते समर्पयन्ती ।) सहि, पिअदमसआसं अणुप्पेसिदुं किंपि सुकुमारप्पओअं विचिन्तिअ इह समालिह । (च)

---

(क) सखि तमालिके, काममनुभवति मनोभववेदनामेषा । इदानीं खलूपेक्षणीया न भवति । त्वरितमेव कल्पनीयः कामलेखः ।

(ख) युक्तं मन्त्रयसि ।

(ग) सखि, श्लाघनीयस्तेऽभिलाषः । येन तं लोकाभिरामं वर्जयित्वा कुतो भवादृशीनां हृदयप्रवृत्तिः । तन्मा विषीदाधुना । निपुणं ज्ञात्वा चिन्त्यते प्रतीकारोऽस्माभिः ।

(घ) सखि तमालिके, सांप्रतमिमं धारयितुमसमर्थैषा कृशाङ्गी । तदात्मनोंऽशुकाञ्चले रक्षिष्यामि ।

(ङ) अनुमतं खलु मे ।

(च) सखि, प्रियतमसकाशमनुप्रेषितुं किमपि सुकुमारप्रयोगं विचिन्त्येह समालिख ।

**राधा**—(क्षणं विचिन्त्य सपुलकं संस्कृतमाश्रित्य धातुरसेन लिखति ।)

यतः प्रभृति ते कान्तं मुखमालोकितं मया ।
कामः कामं ममाङ्गानि व्यथयत्यभितः शरैः ॥ ९ ॥

**सख्यौ**—(निर्वर्ण्य सविस्मयम् ।) अहो से विअद्धदा । (क)

**चम्पकलता**—(साश्चर्यम् । संस्कृतमालम्ब्य ।)

क्रीडन्ती निजमन्दिरेषु निभृतं बाल्यात्सखीभिः समं
नित्यं कृत्रिमपुत्रिकादिषु रता भावानभिज्ञा हि या ।
पित्रा पुत्रवतापि वत्सलतयोत्सङ्गे परं लालिता
सख्यः पश्यत चातुरीषु सहसा सैषातिभूमिं गता ॥ १० ॥

**तमालिका**—सहि चम्पअलदे, अवि जाणीअदि कण्हो कहिं दाणिं हुविस्सदि त्ति । (ख)

**चम्पकलता**—ण क्खु अवअच्छम्हि । (ग)

(ततः प्रविशति कृष्णः प्रियालापश्च ।)

**प्रियालापः**—पिअवअस्स, अदूरे कुमारीकण्ठद्धुणी सुणीअदि । अस्सिं अदिमुत्तलदामण्डवे चिट्ठ दाव । (घ)

(कृष्णो नाट्येन तथा स्थित्वा अधरे वंशीं विन्यस्य क्वणयति । सर्वाः समाकर्ण्य विस्मिताः ।)

**राधा**—(मोहं रूपयन्ती चिरादिव लब्धसंज्ञा सनिःश्वासम् ।) अम्महे, बाढं उम्मादिदम्हि कामस्स मोहणमन्तरूवेण इमिणा केण वि रवेण । (ङ)

---

(क) अहो अस्या विदग्धता ।

(ख) सखि चम्पकलते, अपि ज्ञायते कृष्णः कुत्रेदानीं भविष्यतीति ।

(ग) न खल्ववगच्छामि ।

(घ) प्रियवयस्य, अदूरे कुमारीकण्ठध्वनिः श्रूयते । अस्मिन्नतिमुक्तलता-मण्डपे तिष्ठ तावत् ।

(ङ) अहो, बाढमुन्मादितास्मि कामस्य मोहनमन्त्ररूपेणानेन केनापि रवेण ।

**चम्पकलता**—(साकूतम् ।) हला राहे, अवि उप्पादेदि किं पि सुदिसुहं एसो दे कण्हस्स वंसीरवो । (क)

**राधा**—(आत्मगतम् ।) किं तस्स जेव्व हिअअचोरस्स इमो वंसीरवो । (ख) (प्रकाशम् । दीर्घमुष्णं च निःश्वस्य । संस्कृतेन ।)

संयोगेऽमृतसंकाशो वियोगे विषसंनिभः ।
नादोऽयं सखि हेतुर्मे जीवने मरणेऽपि वा ॥ ११ ॥

(सख्यः सास्रं समाश्वासयन्ति ।)

**चम्पकलता**—हला तमालिए, जह एदे मिअविसेसा पच्छिणो च भच्छादिअं उज्झिअ अमिआदो वि अदिमहुरं इमं वंसीधुणिं णिच्चलस्सवणपुडएण समापिविअ माहवीमण्डवसंमुहे पुलोअअन्ति, तह कण्हो तत्थेति तक्केमि । दाणिं इमो कामलेहो तहिं णेदव्वो । (गृहीत्वा नाट्येनेतस्ततः ससंभ्रमं विलोकयन्त्यस्ता रन्ध्रेण शनकैः कृष्णान्तिकं निवेश्य प्रत्यागतवत्यः ।) (ग)

**प्रियालापः**—(निर्वर्ण्य कौतुकाद्धस्ते कृत्वा कृष्णं प्रति ।) भो वअस्स, पेक्ख दाव किं एदम् । (घ)

**कृष्णः**—(बलेन हस्ताद्गृहीत्वा वाचयन् । सनिःश्वासम् ।) सखे, नूनमयं कामपीडितया मत्प्रियया प्रेषितः कामलेखः ।

**प्रियालापः**—(सविनयम् ।) णिवेदेदु पिअवअस्सो किं एत्थ आलिहिदम् । (ङ)

---

(क) सखि राधे, अप्युत्पादयति किमपि श्रुतिसुखमेष ते कृष्णस्य वंशीरवः।

(ख) किं तस्यैव हृदयचोरस्यैष वंशीरवः ।

(ग) सखि तमालिके, यथा एते मृगविशेषाः पक्षिणश्च भक्ष्यादिकं त्यक्त्वा अमृततोऽप्यतिमधुरमिमं वंशीध्वनिं निश्चलश्रवणपुटकेन समापीय माधवीमण्डपसंमुखे विलोकयन्ति, तथा कृष्णस्तत्रेति तर्कयामि । इदानीमयं कामलेखस्तत्र नेतव्यः ।

(घ) भो वयस्य, प्रेक्षस्व तावत्किमिदम् ।

(ङ) निवेदयतु प्रियवयस्यः किमत्रालिखितम् ।

**कृष्णः**—सखे, प्रियादुःखाभिव्यञ्जकाण्यक्षराणि भूयो वाचयितुमसमर्थोऽस्मि। तथाप्यवहितः शृणु।

**प्रियालापः**—पसीददु भवम्। (क)

**कृष्णः**—(कथं कथमपि वाचयति। यथा—)

यतः प्रभृति ते कान्तं मुखमालोकितं मया।
कामः कामं ममाङ्गानि व्यथयत्यभितः शरैः॥ १२॥

**प्रियालापः**—(आत्मगतम्।) हन्त, बलिअं बाधिदा हदकन्दप्पेण सा तवस्सिणी। (प्रकाशम्।) पिअवअस्स, सुमरेहि जं मए पुरा कधिदं आसि। जह मम्महो जेव्व दे वक्खवादी भविस्सदि। ताए सहीअणो अ तत्थ चिन्तइस्सदि पडीआरम्। (ख)

**कृष्णः**—(स्मित्वा तं कामलेखं कदाचिन्नयनयोरुपरि कदाचिद्धृदये निधाय क्षणं प्रियास्पर्शसुखमिवानुभवन्। सनिःश्वासम्।)

आनन्दं जनयत्यलं सुललितैस्तस्याः स्वहस्ताक्षरै-
र्यद्यप्येष मनोजलेख इह मे तत्सङ्गमाकाङ्क्षिणः।
कामेनाप्यथ पीडितोऽहमधुना बध्नामि चित्ते धृतिं
तद्दुःखेन सखे तथापि सुतरां दुःखैकपात्रीकृतः॥ १३॥

तेन हि वंशीगीतेन क्षणं मनो विनोदयामि। (तथा करोति।)

**राधा**—(निशम्यात्मगतम्।) किं पुणो वि वसीअरणमन्तो पढ्ढीअदि तेण। (इति लोचने निमील्य दुर्विषहेन दाहरूपिणा मदनज्वरेणाभिभूयमाना मोहावस्थां नाटयति।) (ग)

**चम्पकलता**—(ससंभ्रममुत्थाय तत्कालोचितप्रतीकारार्थं स्खलितया गिरा तांस्तानुपायानुपदिशन्ती सखीजनं सत्वरं व्यापारयति।) तमालिए, उववीजअ

---

(क) प्रसीदतु भवान्।

(ख) हन्त, बलवद्बाधिता हतकन्दर्पेण सा तपस्विनी। प्रियवयस्य, स्मर यन्मया पुरा कथितमासीत्। यथा मन्मथ एव ते पक्षपाती भविष्यति। तस्याः सखीजनश्च तत्र चिन्तयिष्यति प्रतीकारम्।

(ग) किं पुनरपि वशीकरणमन्त्रं पठ्यते तेन।

तमालवत्तेण पिअसहिम् । मुणालिए, णिधेहि से हिअए समुणालाइं सरसकमलिणीदलाइं । विद्दुमलदे, सिञ्च पिअसहअरिं घणसारमिस्सेण मलअअरसेण । कअलिए, विरचेहि सेणीअं पंअजपलासवहलेहिं कहलीदलेहिं । (क)

**प्रियालापः**—(आकर्ण्य ।) भो, किं एत्थ अरण्णरुइएण । वाडिआपरिसरे मुद्धाणं करुणालावो विसप्पदि । (ख)

**कृष्णः**—(सत्वरमुपसृत्य ।) श्रृणोमि तावत्किमालपन्ति । (इति बकुलविटपान्तरितविग्रहस्तिष्ठति ।)

**राधा**—(लोचने उन्मील्य ।) कित्ति इमं जणं अवराहिणं करिअ अत्ताणअं आआसअन्ति सहीओ । (ग) (संस्कृतेन ।)

कलयति मम चेतस्तल्पमङ्गारकल्पं
ज्वलयति मम गात्रं चन्दनं चन्द्रकं च ।
तिरयति मम नेत्रे मोहजन्मान्धकारो
विवृतबहुविकारं मन्मथो मां दुनोति ॥ १४ ॥

(इति वैवश्यमुपगता ।)

**कृष्णः**—(स्वगतम् ।)

मनोजन्मा तवाङ्गानि दहत्यत्र न संशयः ।
मन्ये मम हृदिस्था त्वं तप्यसे जीवितेश्वरि ॥ १५ ॥

**चम्पकलता**—(सविषादम् ।) अम्महे, णीसासाणुमेअजीविदा पडिहादि एसा पिअसही । (इति समुत्पन्नकारुण्या तमालिकां प्रति ।) हला तमालिए, दु-

---

(क) तमालिके, उपवीजय तमालपत्रेण प्रियसखीम् । मृणालिके, निधेह्यस्या हृदये सुमृणालानि सरसकमलिनीदलानि । विद्रुमलते, सिञ्चय प्रियसहचरीं घनसारमिश्रेण मलयजरसेन । कदलिके, विरचय शयनीयं पङ्कजपलाशबहुलैः कदलीदलैः ।

(ख) भोः, किमत्रारण्यरुदितेन । वाटिकापरिसरे मुग्धानां करुणालापो विसर्पति ।

(ग) भोः, किमेनं जनमपराधिनं कृत्वात्मानमायासयन्ति सख्यः ।

लहे तस्सिं गोउलेन्दकुमारे सुदूरं गदो इमाए अहिणिवेसो । को एत्थ दाणिं उवाओ जेण से सरीरसंधारणं भोदि । (क)

**तमालिका**—अवि णाम भवे सो वि अस्सिं सिणिद्धजणे साणुराअहिअओ । (ख)

**चम्पकलता**—मा दे संदेहो होदु । सो वि आ दंसणादो पहुदि मण्णोहववेअणं असहमाणो उज्झिअसअललीलादिव्वावारो इमाए पिअसहीए पडिच्छन्दएण अत्ताणअं विणोदेदि त्ति किंवदन्ती सुणीअदि । (ग)

**कृष्णः**—सत्यमीदृगवस्थोऽसि ।

**तमालिका**—(सहर्षातिशयम् ।) जइ एव्वं ता जीविदा वअम् । सुप्पसण्णो मम्महो । उवकिदं पिअसहीए रूवलावण्णजोवणगुणेहिं । जाव तेण सह संगमो होदि, ताव इमाए पिअसहीए असुसंरक्खणाअ तं वि आलिहिअ से दंसणपहं करेम्ह । (घ)

**चम्पकलता**—सोहणो क्खु उवाओ । (ङ)

(तमालिका समुपाहृतचित्रोपकरणा समुपविश्य नातिचिरेण तथा लिखितवती ।)

---

(क) अम्ब, निःश्वासानुमेयजीविता प्रतिभात्येषा प्रियसखी । हला तमालिके, दुर्लभे तस्मिन्गोकुलेन्द्रकुमारे सुदूरं गतोऽस्या अभिनिवेषः । कोऽत्रेदानीमुपायो येनास्याः शरीरसंधारणं भवति ।

(ख) अपि नाम भवेत्सोऽप्यस्मिन्स्निग्धजने सानुरागहृदयः ।

(ग) मा ते संदेहो भवतु । सोऽप्या दर्शनात्प्रभृति मनोभववेदनामसहमान उज्झितसकललीलादिव्यापारोऽस्याः प्रियसख्याः प्रतिच्छन्दकेनात्मानं विनोदयतीति किंवदन्ती श्रूयते ।

(घ) यद्येवं तज्जीविता वयम् । सुप्रसन्नो मन्मथः । उपकृतं प्रियसख्या रूपलावण्ययौवनगुणैः । यावत्तेन सह संगमो भवति, तावदस्याः प्रियसख्या असुसंरक्षणाय तमप्यालिख्यास्या दर्शनपथं कुर्मः ।

(ङ) शोभनः खलूपायः ।

**चम्पकलता**—(निरूप्य सानन्दम्।) सहि, सव्वधा आलेहविचक्खणासि। दंसेहि दाव पिअसहीए एदं चित्तफलअम्। (क)

**तमालिका**—(नाट्येन राधामुखमुपनीय निमीलितलोचनां तां करकिसलयेन सोपग्रहं परामृशन्ती।) हला, इमं मणोरहपिअदमं पेक्खमाणा विरहपज्जाउलं अत्तणो हिअअं विणोदेहि दाव। (ख)

**राधा**—(कथमपि चक्षुरुन्मील्य सरोमाञ्चमायततरं च निःश्वस्य। संस्कृतेन।)

मन्ये स दुर्लभजनो मम नेत्रवीथीं
जन्मान्तरे सुमुखि चित्रपटान्तरे वा।
एष्यत्यनेकरमणीहृदि संप्रविष्टो
जातं निराशमथ तस्य कृते मनो मे॥ १६॥

**कृष्णः**—(समाकर्ण्य।)

त्वदायत्तं शरीरं मे जीवितं च सुमध्यमे।
मत्कृते मा कृथास्तन्वि संकल्पं मनसीदृशम्॥ १७॥

**प्रियालापः**—(सप्रणयकोपम्।) पिअवअस्स, णिक्करुणो सि तुमं जं अज्ज वि तुए विलम्बीअदि। (इति रक्तराजीवकोमलेनाग्रहस्तेन करे गृहीत्वा समाकर्षति।) (ग)

(कृष्णः सस्मितमुपसृत्य स्थितः। सर्वा निरूप्य सहर्षं विस्मिताः।)

**प्रियालापः**—भोदि चम्पअलदे, पुणो वि चोरिदाइं कुसुमाइं। (घ)

**चम्पकलता**—(उत्तरमदत्त्वैव स्वपटाञ्चलान्माणिं हस्ते संगोप्य प्रियालापस्य पटान्तरे शनैर्निक्षिप्य कृष्णं प्रति।) अज्ज, इमाए णो पिअसहीए हारमज्झदो

---

(क) सखि, सर्वथालेख्यविचक्षणासि। दर्शय तावत्प्रियसख्यै एतच्चित्रफलकम्।

(ख) सखि, इमं मनोरथप्रियतमं प्रेक्षमाणा विरहपर्याकुलमात्मनो हृदयं विनोदय तावत्।

(ग) प्रियवयस्य, निःकरुणोऽसि त्वं यदद्यापि त्वया विलम्ब्यते।

(घ) भवति चम्पकलते, पुनरपि चोरितानि कुसुमानि।

णिपइदो महाणीलमणी लद्धो इमिणा तुअ वअस्सेण । दंसेहि से सव्ववसणाइं । (क)

**कृष्णः**—(विहस्य ।) सखे, विश्रब्धं दर्शय ।

(प्रियालापो नाट्येन तथा करोति । स्फुरत्प्रभाप्ररोहं भूमौ निपतितं मणिं विलोक्य सर्वे साट्टहासं करतालिकां ददति । प्रियालापः सवैलक्ष्यं विस्मितः ।)

**तमालिका**—(कृष्णं प्रति ।) अज्ज, एसो मणी सहिए चम्पअलदाए परिहासेण पिआलावस्स वसणे णिउत्तो आसि । (ख)

**प्रियालापः**—(सरोषम् ।) दासीए पुत्तिए चम्पअलदे, भोदु । सुमरिस्संसि अत्तणो किदम् । (ग)

**चम्पकलता**—(स्मित्वा क्षणं लज्जामभिनयन्ती मणिं गृहीत्वा साध्वसेनावनतमुखीं राधामुपेत्य साकूतम् । संस्कृतेन ।)

यस्यार्थे त्वं कुसुमसदृशं म्लानमङ्गं वहन्ती
त्यक्त्वा सर्वं विषयरसमुन्मूल्य लीलोपभोगम् ।
शून्यायाता सकलभुवने दुर्लभोऽनर्घ्यरूपः
सोऽयं प्रेयान्प्रियसखि सुखेनैव दिष्ट्यात्र लब्धः ॥ १८ ॥

(राधा सेर्ष्यमेनां पश्यति ।)

**चम्पकलता**—

संभाव्यैनं निरुपममथो नीलरूपं सुजातं
शून्यं स्वीयं हृदयममुना भूषयन्ती सुखेन ।
क्रीडोत्साहं भजतु भवती मूकतां संत्यजन्ती
स्यादस्माकं तव सुखमिदं वीक्ष्य नेत्रोत्सवश्च ॥ १९ ॥

(इति मणिं दातुमिच्छति ।)

---

(क) आर्य, अस्या नः प्रियसख्या हारमध्यतो निपतितो महानीलमणिर्लब्धोऽनेन तव वयस्येन । दर्शयास्य सर्ववसनानि ।

(ख) आर्य, एष मणिः सख्या चम्पकलतया परिहासेन प्रियालापस्य वसने नियुक्त आसीत् ।

(ग) दास्याः पुत्रिके चम्पकलते, भवतु । स्मरिष्यस्यात्मनः कृतम् ।

**राधा**—हला, जाणेमि जं उद्दिसिअ मन्तेसि। (इति कृष्णं सोत्कण्ठं समीक्ष्य लज्जयाधोमुखी। स्वगतम्।) गदसत्त हिअअ, अज्जवि ण दे पच्चओ। (क) (संस्कृतेन।)

प्रणिधानेऽपि ते नित्यं निपुणं चिन्तितोऽपि यः।
आसीदसुलभः कामं प्रत्यक्षेण विभाति सः॥ २०॥

अपि च।

धैर्यमाधाय लज्जां च व्यपनीय विलासिनम्।
संभावयसि किं नैनं दिष्ट्या स्वयमुपस्थितम्॥ २१॥

(नीचैर्विलोक्य भूयोऽपि लज्जते।)

(कृष्णः साध्वसेऽपि परमां श्रियं दधानं तन्मुखाम्बुरुहं निमेषपराङ्मुखेन चक्षुषा समापिबन्प्रेम्णा तद्गतमानसः स्वाङ्काद्भुवि निपतितां मुरलीं न ज्ञातवान्।)

**प्रियालापः**—(दृष्ट्वा ससंभ्रमम्।) कधं पिअवअस्सस्स मुउली। (सुचिरं निर्वर्ण्य।) एव्वं णेदम्। (सवितर्कमात्मगतम्।) णूणं असेसभोणसुन्दरीणं पच्चादेसभूताए इमाए तत्तभोदीए रूवविलासेहिं विमोहिदेण एदिणा अदिपिअदमा वि एसा अङ्कदो णिपडिदा ण विण्णादा णाम। दाणिं संगोइअ रक्खिस्सं णम्। (नाट्येन गृह्णाति। अनन्तरं शनकैश्चम्पकलतायाः पृष्ठतो गत्वा तत्पटाञ्चले निबध्नन्नपसृत्य कृष्णं प्रति प्रकाशम्।) भो वअस्स, कधं चिरेण अणक्खरो चिट्ठसि। णं अत्तणो मुउलीणिणादेण मणोहारिणा इमाए तत्तभोदीए कण्णाइं किं ण सुक्खावेसि। (ख)

---

(क) हला, जानामि यमुद्दिश्य मन्त्रयसि। गतसत्त्व हृदय, अद्यापि न ते प्रत्ययः।

(ख) कथं प्रियवयस्यस्य मुरली। एवमिदम्। नूनमशेषभुवनसुन्दरीणां प्रत्यादेशभूताया अस्यास्तत्रभवत्या रूपविलासैर्विमोहितेनैतेनातिप्रियतमाप्येषाङ्कतो निपतिता न विज्ञाता नाम। इदानीं संगोप्य रक्षिष्य एनाम्। भो वयस्य, कथं चिरेणानक्षरस्तिष्ठसि। नन्वात्मनो मुरलीनिनादेन मनोहारिणास्यास्तत्रभवत्याः कर्णौ किं न सुखयसि।

**कृष्णः**—(विलोकयन् 'इतो भवेत् इतो वा भवेत्' इति विषादं नाटयन्। प्रकाशम् ।) कथमपहृता केनापि मे मुरली ।

**प्रियालापः**—एदाए चम्पअलदाए हत्थे पुलोइदा मए। (उपसृत्य तत्पटाञ्चलाद्गृहीत्वा दर्शयन् ।) एदाए चोरिदा आसि । (इति चम्पकलतामङ्गुल्या तर्जयन् ।) दुव्विणीदे, सुमरेहि दाणिं अत्तणो किदम् । (क)

(सर्वे हासं रूपयन्ति । चम्पकलता सवैलक्ष्यस्मितं नातिदूरे लतागहनेऽन्याभिः सह सखीभिर्निर्गत्य स्थिता ।)

**राधा**—(इतस्ततो निरीक्ष्य सचकितमात्मगतम् ।) गदो मे सहीजणो। (ख)

**कृष्णः**—अयि मुग्धे, कथं बिभेषि । नन्वनेककन्यकाजनस्य गान्धर्वविवाहो जात इति प्रसिद्धम् । अथाहं तव विधेयः ।

किं ते निसर्गरुचिरौ चरणौ कराभ्यां
संवाहयामि नयने च तवाञ्जनेन ।
किं रञ्जयामि किमु ते स्तनयोर्विचित्रां
पत्रावलीं विरचयाम्यचिरेण तन्वि ॥ २२ ॥

(एवं क्रमेण तत्तत्क्रियावैदग्ध्यं समारब्धवान् । तथा हि—प्रथमं तावत् सानुनयैरनेकमृदूपचारैः कथंचिदभिमुखीकृत्य मधुरविरुतिभिर्मधुकरनिकरैरहमहमिकयानुबध्यमानां सुमनसां संनिवेशैर्विचित्रां स्रजं निर्माय कौतूहलमुत्पादयन्कण्ठेऽर्पितवान् । अभिनवयवाङ्कुरांश्च कपोलयोः स्वकरस्पर्शसुखं संवर्धयन्कण्ठेऽर्पितवान् । स्तनयोः स्वहस्ताब्जपरिरम्भलोभं जनयन्कस्तूरिकादलपत्रलतां विरचितवान् । ततो नवपल्लवैः कुसुमसमूहैश्च स्वयमुपरचिते शयनीये निवेश्य सप्रश्रयम् ।) प्रिये, यद्यपि समाकुलास्ते मूर्धजा मुहुर्मुखाग्रे निपतितैर्लोलालकैरत्यलंकरणाय, तथापि कुसुमैर्नवैरलंकर्तुमिच्छामि । (इति समभिसृत्य लताभ्यः प्रत्यग्रविविधकुसुमानि समादाय विदग्धरचनाविचित्रां तद्वेणीं गुम्फित्वा बहुतरं विलोकयन् ।)

वेणीं ते प्रसमीक्ष्य चित्रकुसुमैरुद्भासितां बर्हिणो
लज्जन्ते निजबर्हवृन्दमधिकं भारं विदित्वा परम् ।

---

(क) एतस्याश्चम्पकलताया हस्ते प्रलोकिता मया। एतया चोरितासीत् । दुर्विनीते, स्मरेदानीमात्मनः कृतम् ।

(ख) गतो मे सखीजनः ।

निर्याताः शनकैरिति स्वनिलयाद्दूरे निलीय स्थिताः
पश्यैतानपि लज्जयेव मधुपान्वल्लीर्विहायोद्गतान् ॥ २३ ॥

(नेपथ्ये।)

सहि विहङ्गिए, किं अभिहिदा तदो चित्तसालिआअङ्गणं अलंकरन्तीए देवीए तुमम्। (क)

**विहङ्गिका**—असुत्था वच्छा मे राहिआ कालिन्दिं गदा। विहङ्गिए, कअलिआदुदीआ तुमं गच्छ ताए पउत्तिकिदेत्ति। (ख)

**कदलिका**—हला, अदिदुम्मणा लक्खीअदि देवी। ण जाणे तं कहम्। (ग)

**विहङ्गिका**—राहाअसत्थणं जेव्व णिदाणम्। (घ)

**कदलिका**—अध कधं कालिन्दिं अणुप्पेसिदा सा पिअसही। (ङ)

**विहङ्गिका**—णीदा क्खु चम्पअलदातमालिआएहिं देव्वकिदबाहाउवसमत्थं त्ति भणिअ। (च)

**कदलिका**—किं राहाविहजणस्स वि देव्वकिदबाहा (छ)

**विहङ्गिका**—णहि णहि। किं पि अच्चरिअविसेसं पेक्खिअ संभन्तात्ति तक्केमि। (ज)

---

(क) सखि विहङ्गिके, किमभिहिता तदा चित्रशालिकाङ्गणमलंकुर्वत्या देव्या त्वम्।

(ख) अस्वस्था वत्सा मे राधिका कालिन्दीं गता। विहङ्गिके, कदलिकाद्वितीया त्वं गच्छ तस्याः प्रवृत्तिकृते इति।

(ग) सखि, अतिदुर्मना लक्ष्यते देवी। न जाने तत्कथम्।

(घ) राधास्वास्थ्यमेव निदानम्।

(ङ) अथ कथं कालिन्दीमनुप्रेषिता सा प्रियसखी।

(च) नीता खलु चम्पकलतातमालिकाभ्यां दैवकृतबाधोपशमार्थमिति भणित्वा।

(छ) किं राधाविधजनस्यापि दैवकृतबाधा।

(ज) नहि नहि। किमप्याश्चर्यविशेषं प्रेक्ष्य संभ्रान्तेति तर्कयामि।

**कदलिका**—हला, कुसुमाउहपूआत्थं गदाए ताए कण्हो पुलोइदो। तेन हि मअणपव्वसा तं अवत्थं समापण्णात्ति लोआणं पवादो। (क)

**विहङ्गिका**—मए वि किंपि कज्जणिमित्तं गोउलं गदाए एदाणं अ-ण्णोण्णाणुराअप्पवादो कण्णपरम्पराए आकण्णिदो। (ख)

**चम्पकलता**—हला तमालिए, सुदो विहङ्गिआकअलिआणं आ-लावो। (ग)

**तमालिका**—अध किम्। (घ)

**चम्पकलता**—ता तहिं गच्छह्म। (ङ)

(इतराभिः सह निष्क्रम्य तथा कुरुतः।)

**उभे**—(विलोक्य सस्मितम्।) हला चम्पअलदे, कधं लक्खिदा वअं तुह्मेहिं एत्थ। (च)

**चम्पकलता**—आलावो वि सुदो। (छ)

(उभे सलज्जं स्थिते।)

**चम्पकलता**—अलं लज्जाए। को दुज्जणो इमाणं सव्वाआराणुरूवाणं संअमं न वञ्छदि। ता सिग्घं गदुअ पिअसहिं पेक्खामो। (ज)

---

(क) सखि, कुसुमायुधपूजार्थं गतया तया कृष्णो विलोकितः। तेन हि मदनपरवशा तामवस्थां समापन्नेति लोकानां प्रवादः।

(ख) मयापि किमपि कार्यनिमित्तं गोकुलं गतया एतयोरन्योन्यानुरा-गप्रवादः कर्णपरम्परया आकर्णितः।

(ग) सखि तमालिके, श्रुतो विहङ्गिकाकदलिकयोरालापः।

(घ) अथ किम्।

(ङ) तत्तत्र गच्छावः।

(च) सखि चम्पकलते, कथं लक्षिता वयं युष्माभिरत्र।

(छ) आलापोऽपि श्रुतः।

(ज) अलं लज्जया। को दुर्जनोऽनयोः सर्वाकारानुरूपयोः संगमं न वाञ्छति। तच्छीघ्रं गत्वा प्रियसखीं प्रेक्षामः।

(सर्वाः प्रवेशं नाटयन्ति ।)

**चम्पकलता—**(राधां निरूप्य । जनान्तिकम् ।) हला तमालिए, तक्केमि इमाए पिअसहीए कण्हेण सह गन्धव्वविआहो संवुत्तो। (प्रकाशम् । सनर्मस्मितम् । अपवार्य ।) हला राहे, अत्थि मे तस्स सिविणस्स को वि फलविसेसो। (क)

(राधा ह्रिया नम्रमुखी तिष्ठति ।)

**कृष्णः—**प्रिये, पश्य पश्य। कुसुमितास्ते केसरवृक्षकाः सानुरागं ते हस्तस्पर्शेनात्मजन्मनः सफलतामभिवाञ्छन्ति। तदेहि। एषां कुसुमान्यवचिनुमः।

(सर्वे कुसुमावचयं रूपयन्ति ।)

**कृष्णः—**विलासिनि, सुवर्णच्छवीन्येतानि क्षणं तेऽलंकारश्रियं वर्धयितुमर्हन्ति। (इति वेतसीनिकुञ्जान्तरे समुपविश्य स्वहस्तावचितैरन्यैश्च सखीभिरुपचितैस्तैः कुसुमैः काञ्चीदामादीनि भूषणानि रचयित्वालंकारस्याप्यलंकारतामलंकृतवान् ।)

(प्रविश्य ।)

**प्रियालापः—**(साटोपम् ।) पिअवअस्स, पेक्ख मए अवचिदाइं कुसुमाइं। (इत्यर्पयति ।) (ख)

**कृष्णः—**(विचिन्त्य ।) भूषिता मया कुसुमालंकारैः प्रिया। सांप्रतमेभिः कुसुमैरभिनवां मालां निर्माय तत्कण्ठभूषणतामुपनयामि। (नाट्येन तथा समारब्धवान् ।)

**प्रियालापः—**भो वअस्स, गेण्ह एदं चित्तफलअम्। अहं पुणो वि कुसुमाइं अवचिणिस्सम्। (ग)

(कृष्णो गृहीत्वा दृष्ट्वा च शय्यातले निवेशयति ।)

**राधा—**(विदूरादेवालोक्यात्मगतम् ।) हन्त, इत्थिआ का वि एत्थ आलिहिदा। (इति मौनमालम्बते।) (घ)

---

(क) सखि तमालिके, तर्कयामि अस्याः प्रियसख्याः कृष्णेन सह गान्धर्वविवाहः संवृत्तः। सखि राधे, अस्ति मम तस्य स्वप्नस्य कोऽपि फलविशेषः।

(ख) प्रियवयस्य, प्रेक्षस्व मयावचितानि कुसुमानि।

(ग) भो वयस्य, गृहाणैतच्चित्रफलकम्। अहं पुनरपि कुसुमान्यवचेष्यामि।

(घ) हन्त, स्त्री काप्यत्रालिखिता।

**कृष्णः**—(निरीक्ष्य सविषादमात्मगतम्।)

सान्द्रस्नेहरसेन सान्द्रहृदया संक्रीडमानाधुना
सोद्वेगेव विलोक्यते वरतनुस्तत्किं न जानीमहे।
वारं वारमिति स्वचेतसि मया नैपुण्यतश्चिन्तितं
न ज्ञातं स्खलितं तथापि किमहो संजातमापाततः॥ २४॥

(प्रकाशम्। भीतभीत इव सबहुपादप्रणामम्।) प्रिये, न जाने किमपराद्धं मयान्यजनेन वा, येन कुसुमकोमला त्वमीदृशीमवस्थां समापन्ना। तत्प्रसीद दयिते, विसृज मनसि निगूढमकाण्डकोपक्रमम्। इमां च कण्ठश्लेषेण चित्रतामुपनयतु केसरकुसुममालां भवती।

(राधा तथैव नमितानना तिष्ठति।)

(कृष्णः सनिःश्वासं चम्पकलतामुखं पश्यति।)

**चम्पकलता**—हला राहे, पच्चासीदइ दे हिअअदइदो। मुञ्चेहि कोवम्। कहेहि माणस्स कारणम्। एस ते वल्लहस्स पास्सवत्ती पिआलावो वि विण्णवेदि, जह मए अवचिदेहिं कुसुमेहिं पिअवअस्सेण विरइदा इअं माला। जइ अणुग्गहो ममोवरि ता खणं तत्तभोदीए कण्ठसोहं उप्पादेदु। (क)

**राधा**—(अपवार्य सरोषं नीचैः।) अइ सरले, तुमं वि एवं भणासि। न पुलोइदं तुए जं इमिणा जेव्व पिआलावेण आणीदं तं तमालवत्तं जत्थ आलिहिदा से पिअवअस्सस्स वल्लहा कावि सुन्दरी। एताए कण्ठसोहं उप्पादेदु सा कुसुममाला। (ख)

---

(क) सखि राधे, प्रत्यासीदति ते हृदयदयितः। मुञ्च कोपम्। कथय मानस्य कारणम्। एष ते वल्लभस्य पार्श्ववर्ती प्रियालापोऽपि विज्ञापयति, यथा मयावचितैः कुसुमैः प्रियवयस्येन विरचितेयं माला। यद्यनुग्रहो ममोपरि तत्क्षणं तत्रभवत्याः कण्ठशोभामुत्पादयतु।

(ख) अयि सरले, त्वमप्येवं भणसि। न विलोकितं त्वया यदनेनैव प्रियालापेनानीतं तत्तमालपत्रं यत्रालिखितास्य प्रियवयस्यस्य वल्लभा कापि सुन्दरी। एतस्याः कण्ठशोभामुत्पादयतु सा कुसुममाला।

**प्रियालापः**—(निशम्य साट्टहासम् ।) भो वअस्स, जिदं अम्हेहिं । सुदं दाणिं तत्तभोदीए माणस्स णिदाणम् । तुरिदं जेव्व णिधेहि तं चित्तफलअं तत्तभोदीए अग्गे । (क)

(कृष्णः सानन्दं तथा दर्शयति ।)

**राधा**—(विलोक्य सवैलक्ष्यमात्मगतम् ।) अहो पमादो । अआरणे आआसिदो मूढाए मए एसो पिअदमो । (इति कृष्णं सप्रश्रयं पश्यति ।) (ख)

**कृष्णः**—(प्रसादाभिमुखीं तामवधार्य सप्रश्रयं तां मालां तत्कण्ठदेशे समर्प्य शारदेन्दुप्रसन्नं तन्मुखं विलोकयन् ।) प्रिये, सर्वथा तवामुना रूपमाधुर्यसौहार्दगुणेन विधेयीकृतोऽस्मि । तदनुज्ञापय किं किं ते प्रियं समाचरामि ।

(राधा सवैलक्ष्य चम्पकलतामुखं पश्यति ।)

**चम्पकलता**—(कृष्णं प्रति संस्कृतेन ।) नागर, यदि प्रसन्नो भवान् तर्हि किमतः परमस्ति । तथाप्येतदस्तु—

सदा गच्छत्वेवं रतिरिव मनोजेन सुमुखी
सखी नः संयोगं प्रकृतिरमणीयेन भवता ।
भवत्वस्माकं चाव्यवहिततया लोचनसुखं
विलोक्यान्योन्यस्य व्यतिकरमतिश्लाघ्यमनघम् ॥ २९ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति मथुरादासेन विरचितायां वृषभानुजानामनाटिकायां चतुर्थोऽङ्कः ।

**समाप्तम् ।**

---

(क) भो वयस्य, जितमस्माभिः । श्रुतमिदानीं तत्रभवत्या मानस्य निदानम् । त्वरितमेव निधेहि तच्चित्रफलकं तत्रभवत्या अग्रे ।

(ख) अहो प्रमादः । अकारण आयासितो मूढया मयैष प्रियतमः ।

KÂVYAMÂLÂ. 43.



# THE KÂVYÂNUS'ÂSANA

OF

# VÂGBHATTA.

WITH HIS OWN GLOSS.



EDITED BY

PAṆDIT S'IVADATTA

Head Professor and Superintendent, Sanskrit Department, Oriental College, Lahore.

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

ROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.

BOMBAY.

1894.

*Price 7 annas*

काव्यमाला. ४३.

श्रीमद्वाग्भटविरचितं

# काव्यानुशासनम् ।

तेनैव कविना विनिर्मितया व्याख्यया समलंकृतम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशिनाथ-
शर्मणा च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९४



मूल्यं ७ आणकाः ।

# काव्यमाला।

श्रीमद्वाग्भटविरचितं

## काव्यानुशासनम्।

तेनैव कविना विनिर्मितयालंकारतिलकवृत्तिरित्याख्यया व्याख्यया समलंकृतम्।

प्रथमोऽध्यायः।

प्रणिपत्य प्रभुं नाभिसंभवं भक्तिनिर्भरः।
विवृणोमि स्वयमहं निजं काव्यानुशासनम्॥

ग्रन्थारम्भे शिष्टसमयपरिपालनायाभिधेयसंबन्धप्रयोजनप्रतिपादनाय च कौन्तेयकुलकमलविकासनैकभास्करस्य दुस्तरतरसमस्तशास्त्रापारपारावारगहनमध्यावगाहनामन्दमन्दरस्य विलसत्कलिकालकेलिकमलिनीकुलमूलोन्मूलनमत्तमतङ्गजस्य सकललिपिभाषाविशेषसंमुखीनशेमुषीस्तुतिमुखरमुखी(मूकी)कृताशेषविशेषज्ञस्य निखिलकविकुलामानसन्मानदानसमुपार्जितोज्झितविततकीर्तिलताव्याप्ताखण्डब्रह्माण्डमण्डपस्य दुष्टकर्माष्टकगाढकरहाटविटपिप्रोत्पाटनपटिष्ठपरमेष्ठिपृष्ठश्रीमदरिष्टनेमिचरणकमलमधुकरस्य दुर्धरतरधर्मधुराधरणैकबन्धुरधुरंधुरवरस्यागण्यपुण्यलावण्यपण्यापणिकनिपुणगणिकागणेक्षणप्रतिक्षणनिपीयमानसर्वाङ्गसौभाग्याप्रतिमरूपसंपत्पराजितरतिपतिप्रतिपन्नसेवासर्वस्वस्वयंसिद्धकार्मणकर्मातिपरवशरमणीयरमणीगणस्य सकलजनचेतश्चमत्कारित**मेदपाट**विषयप्रतिष्ठितश्रीमत्पार्श्वजिनयात्रामहोत्सवसमुद्भूताद्भुतयशःप्रसरपूरिताशेषभुवनाभोगस्य कारितामरपुरपरिस्पर्धिश्री**राहडपुर**प्रतिष्ठापितसुप्रतिष्ठहिमगिरिशिखरानुकारिरमणीयशुभ्राभ्रंलिहश्रीमन्नेमिजिनवरागारोत्तुङ्गशृङ्गोत्सङ्गसंगतसौवर्णध्वजाग्रलम्बमानकिङ्किणीझणत्कारवित्रासितरविरथतुरंगमस्यामन्दमन्दरायमानयानपात्रशतसहस्रमथ्यमानमहाब्धिमध्यसमुल्लसल्लक्ष्मीलक्षितवक्षःस्थलस्य निजभुजयुगलोपार्जितार्जितवित्तजातजनित**नलोटकपुर**प्रतिष्ठितत्रिभुवनाद्भुतश्रीनाभिसंभवजिनसदनप्राग्भागनिर्मापितद्वाविंशतिदेवगृहिकामण्डलस्य निजाग्रजवर**श्रीराहड**पादपङ्कजाविचलभक्तिगुणावगणितलक्ष्मणस्य सकलसीमन्तिनीसीमन्तरत्नायमानसुगृहीतनामधेयश्रीमन्**महादेवी**कुक्षिशुक्तिशौक्तिकेयस्य श्री**मक्कलपा**भिधानप्रधानदुग्धोदधिसमुद्भूताद्भुतनित्योदितनिस्तन्द्रचन्द्रस्य वसुंधरावधूहृदयहारस्य श्रीम**न्नेमिकुमार**स्य नन्दनो विनिर्मितानेकनव्यभव्यनाटकच्छन्दोऽलंकारमहाकाव्यप्रमुखमहाप्रबन्धबन्धुरोऽपारतरशास्त्रसा-

गरसमुत्तरणतीर्थायमानशेमुषीसमभ्यस्तसमस्तानवद्यविद्याविनोदकन्दलितसकलकलाकलापसंपदुद्भटो महाकविः श्री**वाग्भटो**ऽभीष्टदेवतानमस्कारपूर्वमुपक्रमते। यथा—

सर्वार्धमागधीं सर्वभाषासु परिणामिनीम्।
सर्वेषां सर्वतो वाचं सार्वज्ञीं प्रणिदध्महे॥ १॥

विलोक्यानेकशास्त्राणि निजबुद्धिप्रकर्षतः।
विदुषां हर्षपोषाय वच्मि काव्यानुशासनम्॥ २॥

तद्यथा—काव्यम्। प्रमोदायानर्थपरिहाराय व्यवहारज्ञानाय त्रिवर्गफललाभाय कान्तातुल्यतयोपदेशाय कीर्तये च।

चतुरचेतश्चमत्कारकारि कवेः कर्म काव्यम्। तच्च कवेः श्रोतुश्च सुधानिस्पन्दसुन्दरं प्रमोदमुत्पादयति, बाणमयूरादीनामिव रोगाद्यनर्थं निहन्ति, हेयोपादेयविवेचनाद्व्यवहारकौशल्यं जनयति, तत्त्वावबोधद्वारेण नृपादिपरितोषणेन शृङ्गाररसप्राधान्येन च पुरुषार्थत्रयफलमाकलयति, कान्तेव सरसतापादनेन संमुखीकृत्य 'रामादिवद्वर्तितव्यं न रावणादिवत्' इत्युपदिशति। अयं खलु समयो महाकवीनाम्॥ वयं तु कीर्तिमेवैकां काव्यहेतुतया मन्यामहे। यतः—तावत्प्रमोदः सुलभो लाभादिनापि, अनर्थपरिहारः प्रकारान्तरेणापि, व्यवहारज्ञानं चाणिक्यादिनीतिशास्त्रेभ्योऽपि, देवगुरुचरणपरिचरणतपश्चरणकरणादिना विविधव्यवसायकर्मभिः प्रियासंलापादिभिश्च त्रिवर्गफलसिद्धिः, कान्तातुल्यतयोपदेशश्च कादाचित्कः स्यात्। अतः कीर्तिरेवैका काव्यहेतुः। अन्यथा कथमनेककालातिक्रान्ताः क्षितिपतयः प्रत्यक्षा इव शास्त्रेषु प्रपश्च्यमानाः प्रतिभान्ति, कालिदासप्रभृतयो महाकवयश्चाद्ययावत् सहृदयहृदयहारतामनुहरन्ति। किं तैः किमप्यमरसदनादिकं कृतं न स्यात्। यदाह—'अमरसदनादिभ्यो भूता न कीर्तिरनश्वरी भवति यदसौ संपुष्टापि प्रणश्यति तत्क्षये। तदलममलं काव्यं कर्तुं यतेत समाहितो जगति सकले व्यासादीनां विलोक्य परं यशः॥'

व्युत्पत्त्यभ्याससंस्कृता प्रतिभास्य हेतुः।

प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा। सा च ज्ञानावरणीयादिकर्मक्षयोपहेतुका गणधरादीनामिव सहजा, देवतापरितोषौषधादिहेतुका कालिदासादीनामिवौपाधिकी। एतामपि वयं कर्मक्षयहेतुकामेव मन्यामहे। प्रतिभैव च कवीनां काव्यकरणकारणम्। व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकारकौ न तु काव्यहेतू। दृश्येते हि प्रतिभाहीनस्य विफलौ व्युत्पत्त्यभ्यासौ।

व्युत्पत्तिं व्याचष्टे—

लोके स्थावरजङ्गमरूपे तत्स्वरूपे च लक्षणप्रमाणसाहित्यच्छन्दोऽलं-

कारश्रुतिस्मृतिपुराणेतिहासागमनाट्याभिधानकोषकामार्थयोगादिशास्त्रेषु च निपुणता व्युत्पत्तिः ।

लोकश्चतुर्दशरज्ज्वात्मकं जगत् । तच्चैकद्वित्रिचतुःसप्तचतुर्दशैकविंशतिसंख्यामतैरनेकधा भवति। तत्र चैकं यथा—'यदाज्ञया स्खलितमिदं न लङ्घते निजं निजं जगदवधिं कदाचन। तयोः समप्रकटितदण्डचण्डयोः किमन्तरं नरपतिधर्मराजयोः॥' द्वे यथा—'रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी। तावत्किलायमध्यास्त सुन्तती वैबुधं पदम् ॥' त्रीणि यथा—'स वः पातु जिनः कृत्स्नमीक्षते यः प्रतिक्षणम्। रूपैरनन्तैरेकैकजन्तोर्व्याप्तं जगत्त्रयम्॥' सप्त यथा—'संस्तम्भिनी पृथुनितम्बतटैर्धरित्र्याः संवाहिनी जलमुचां चलकेतुहस्तैः । हर्षस्य सप्तभुवनप्रथितोरुकीर्तेः प्रासादपङ्क्तिरियमुच्छिखरा विभाति॥' चतुर्दश यथा—'न्याय्यस्वभावसमुपार्जितवित्तजाता निर्मापितादिजिनमन्दिरकन्दजन्मा—श्रीराहडस्य भुवनानि चतुर्दशापि संरोहति स्म वितता खलु कीर्तिवल्लिः ॥' एकविंशतिरित्यपरे—'हरहासहरावासहरहारनिभप्रभाः । कीर्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम् ॥' तत्र लोकत्रितयापेक्षया भूरियं मध्यमो लोकः । तत्र योषिद्वलयाकृतयः क्रमशो द्विगुणद्विगुणविस्तारा असंख्याता द्वीपसमुद्राः । कविसमयश्चायम्—'जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽन्तः क्रमोऽन्तः । क्रौञ्चः शाकः पुष्करश्चेत्यथैषां बाह्याबाह्या संस्थितिर्मण्डलीभिः॥''लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः । स्वादुवारिरुदधिश्च सप्तमस्तान्परीत्य त इमे व्यवस्थिताः॥' तत्र चैक एव समुद्र इति केचित्—'द्वीपान्यष्टादशानि क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डैरेकाम्भोधिर्दिगन्तप्रसृमरसलिलः प्राज्यमेतत्सुराज्यम् । कस्मिन्नव्याजकेलिव्यतिकरविजयोपार्जिते वीरचर्ये पर्याप्तं मे न दातुस्तदिदमिति धिया वेधसे यश्चुकोप॥' त्रय इत्यन्ये—'कान्तिश्रीह्रीधृतिमतिमुखा योषितोऽनेन तावत्पार्श्वे न्यस्ताः किमु तदधुना दुर्भगाहं करोमि । कौन्तेयेन्दोस्तदिति सुचिरं चिन्तयित्वेव सेर्ष्या प्रोल्लङ्घ्याब्धित्रितयमगमत्कीर्तिकान्ता परस्तात् ॥' चत्वार इत्यपरे—'भ्रान्तं चतुर्जलधिसीम्नि मया पृथिव्यामीदृग्न देवभवनं न च मण्डपश्रीः । अस्तीत्यमुत्र फलके प्रभुराहडस्य कीर्तिर्महाभ्युदयिनी लिखति प्रशस्तिम् ॥' सप्तेत्यपरे—'सावष्टम्भनिशुम्भनिर्भरनमद्भूगोलनिःपीडनन्यञ्चत्कर्परकूर्मकम्पविलसद्ब्रह्माण्डभाण्डस्थिति । पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं वन्दे वन्दितनीलकण्ठपरिषद्व्यक्तर्द्धि वः क्रीडितम् ॥' 'त्रिमेखलः स्वर्णमयो विशालस्थालवर्तुलः । जम्बूद्वीपस्य मध्येऽस्ति मेरुराद्यो महीभृताम् ॥' तदपेक्षया दक्षिणतो भारतं वर्षमिदम् । अस्य नव खण्डानीत्येके—'मृदित्वा दोःकण्डूं समरभुवि वैरिक्षितिभुजां भुजादण्डे दध्रुः कति न नवखण्डां वसुमतीम् । यदेवं साम्राज्ये विजयिनि वितृष्णेन मनसा यशो योगीशानां पिबसि नृप तत्कस्य सदृशम् । षट् खण्डानीत्यपरे—'षट्खण्डखण्डा जगतीमण्डलाखण्डलोऽभवत् । भूभर्ता भरतो नाम नाभिनन्दननन्दनः ।।' तस्मिंश्च भरतक्षेत्रे—'विन्ध्यश्च पारियात्रश्च शक्तिमानृक्षपर्वतः । माहेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ।।' तत्र विन्ध्यादयः प्रसिद्धवृत्तान्ता एव । मलयास्तु चत्वारः । तत्र प्रथमो यथा—'एलालवङ्ग-

लवलीककोलं जातिमरिचजन्मपदम् । नयनानन्दनचन्दनपादपसदनं स तत्र नगः ॥' द्वितीयो यथा—'तस्मिन्विद्रुमभूरुहः प्रतिपदं वेशेषु मुक्ताफलं रत्नानां खनयः पुनाति च मुनिः शृङ्गाणि कुम्भोद्भवः । कार्पूरास्तरवः स्फुटन्ति विकटैः कण्ठीरवाणां रवैर्यस्याभाति तटेषु मौक्तिकनिधिः सा ताम्रपर्णी सरित् ॥' तृतीयो यथा—'विलासभूमिर्देवानां नृणां रोगास्पदं मुनेः । सदा पुष्पफलारामरम्यसानुः स पर्वतः ॥' चतुर्थो यथा—'सा तत्र चामीकररत्नचित्रैः प्रासादमालावलभीविटङ्कैः । द्वारार्गलाबद्धसुरेश्वराङ्का लङ्केति या रावणराजधानी ॥ प्रवर्तते कोकिलनादहेतुः पुष्पप्रसूः पञ्चमजन्मदायी । तेभ्यश्चतुर्भ्योऽपि वसन्तमित्रमुदङ्मुखो दक्षिणमातरिश्वा ॥' पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्तः । तस्मिंश्चातुर्वर्ण्यं चातुराश्रम्यं च तन्मूलश्च सदाचारः । तत्रत्यो व्यवहारः प्रायेण कवीनाम् । तत्र वाराणस्याः पुरतः पूर्वदेशः । यत्राङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरकविदेहनेपालपौण्ड्रप्राग्ज्योतिषिकताम्रलिप्तकमलदलमल्लर्तकसुब्रह्मब्रह्मोत्तरप्रभृतयो जनपदाः । बृहद्गृहलोहितागिरिचकोरदर्दुरनेपालकामरूपादयः पर्वताः । शोणलोहितौ नदौ । गङ्गाकरतोयाकपिशाद्याश्च नद्यः । लवलीग्रन्थिपर्णागुरुद्राक्षाकस्तूरिकादीनामुत्पादः । माहिष्मत्याः पुरतो दक्षिणापथः । यत्र महाराष्ट्रमाहिष्मकाश्मकवैदर्भकुन्तलक्रथकैशिकसूर्पारककाञ्चिकेरलकाबेरमुरलवानवासकसिंहलचोडदण्डपाण्ड्यपल्लवगाङ्गनासिक्यकौङ्कणकोल्लगिरिवेल्लरप्रभृतयो जनपदाः । विन्ध्यदक्षिणपादमाहेन्द्रमलयमेकलपालमञ्जरश्रीसह्यपर्वतादयः पर्वताः । नर्मदातापीपयोष्णीगोदावरीकावेरीभीमरथीवेणीजम्बुरातुङ्गभद्राताम्रपर्ण्युपलावतीरावणगङ्गाद्या नद्यः । तदुत्पत्तिर्मलयोत्पत्त्या व्याख्याता । देवसभायाः परतः पश्चाद्देशः । तत्र देवसभसुराष्ट्रदासेरकत्रवणभृगुकच्छकच्छीयानर्तार्बुदब्राह्मणवाहहययवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभमाल्यशिखरार्बुदोज्जयन्तशत्रुंजयादयः पर्वताः । सरस्वतीश्वभ्रवतीवार्तघ्नीमहीहिण्डवाद्या नद्यः । करीरपीलगुग्गुलुखर्जूरकरभादीनामुत्पादः । पृथूदकात्परत उत्तरापथः । यत्र शककेकयकाणहूणवनायुजकम्बोजबाह्लीकवल्हवलम्पाककुलूतकीरतंगणतुषारतुरुष्कबर्बरहरहूरकुहकसहुडहंसमार्गरमठकरकण्डप्रभृतयो जनपदाः । हिमालयजालंधरकलिन्देन्द्रकीलचन्द्राचलादयः पर्वताः । गङ्गासिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनैरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौवीरस्रोतोऽञ्जनसैन्धववैडूर्यतुरङ्गमाणामुत्पादः । तेषां मध्ये मध्यदेश इति व्यवहारः । यदाह—'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः ॥' तत्र ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च । तत्प्रसिद्धिसिद्धमिति न निर्दिष्टम् । 'द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा । नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः । विशसनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदिः । तदपेक्षया दिशो विभजेतेति केचित् । वयं तु ब्रूमस्तत्रापि महोदयं मूलमवधीकृत्य दिशो विभजेत । ताश्च चतस्र इत्येके । यथा—'पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता । चतुर्दिगावर्जनसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥' अष्टावित्यन्ये । यथा—'एकं ज्योति-

ईशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भिर्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि । युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानोर्यान्ति प्राह्णे नवत्वं दश ददतु शिवं दीधितीनां शतानि ॥' दशेत्यपरे—'दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् । दशपूर्वरथं समाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥' अत्र हि देशपर्वतसरिद्दिशांय: क्रमस्तं तथैव बध्नीयात् । नान्यथा । तत्र प्राच्यानां श्यामो वर्णः प्रायेण । यथा—'गण्डभित्तिषु गौडीनां तमालदलकान्तिषु । विभ्राजन्ते स्म कार्पूर्यः पत्रवल्ल्यो विशेषतः ॥' दाक्षिणात्यानां कृष्णः । यथा—'इदं भासां भर्तुर्द्रुतकनकगोलः प्रतिकृतिक्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् । अथैष प्राचीनः सरति मुरलीगल्लमलिनस्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ॥' पाश्चात्यानां पाण्डुवर्णः । यथा—'शाखास्मेरं मधुकवलनाकेलिलोलेक्षणानां भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति । किं चेदानीं यवनतरुणीपाण्डुगण्डस्थलीभ्यः कान्तिः स्तोकं रचयति पदं नागवल्लीदलेषु ॥' उदीच्यां गौरः । यथा—'कृत्वा नूपूरमूकतां चरणयोः संयम्य नीवीमणीनुद्दामध्वनिपाण्डितान्परिजने किंचिच्च निद्रायति । गौरी क्रुध्यतु यावदस्ति चलिता तावद्विधिप्रेरितः काश्मीरीकुचकुम्भविभ्रमधरः शीतांशुरभ्युद्गतः ॥' मध्यदेशानां कृष्णः श्यामो गौरो वेति लोकस्वरूपमुक्तम् । अथातः शास्त्रनैपुण्यमुदाह्रियते । तत्र लक्षणे नैपुणं यथा—'कण्ठलग्नाः सदा स्त्रीणां खेलन्ति इह खङ्गिकाः । विरामे न प्रवर्तन्ते कदाचित्संधयो यथा ॥' तर्कः षट्प्रकारः—'जिनं सांख्यं शिवं भाट्टं बौद्धं लौकायतं तथा। षडेता दृष्टयः प्रोक्ताः शेषाः पाषण्डवृत्तयः ॥' जैनं यथा—'न यास्तव स्यात्पदलाञ्छना इमे रसोपविद्धा इव लोहधातवः । भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः ॥' सांख्यीयो यथा—'उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथंचन । बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥' शैवो यथा—'किमीहः किं कायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादान इति च । अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥' भट्टानां यथा—'वैस्वर्गकामः क्रमतः क्रतूनां तदग्निहोत्रं जुहुयाद्विजन्मा । इत्यादि वेदान्तविदो यदाहुस्त्वयि प्रसन्ने खलु तत्तु सत्यम् ॥' बौद्धीयो यथा—'नात्मा कश्चिदिहास्तीह प्रत्यक्षानुपलब्धितः । विज्ञानमात्रमेवैतज्जगत्क्षणविनश्वरम् ॥' लौकायतीयो यथा—पिष्टोदकगुडादिभ्यो मदशक्तिरिव स्वयम् । वह्निगुर्वीवायुवारिभ्यो भूतानां तनुचेतना ॥' साहित्यनैपुणं महाकाव्यकथाख्यायिकाख्यानकादिपरामर्शः । छन्दोनैपुणं यथा—'सद्यतिसेवितपादं वरगणधरमूर्जितप्रवरवृत्तम् । श्रीवर्धमानमादौ जयदेवं भक्तितो वन्दे ॥' अलंकारनैपुणं यथा—'प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः । भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥' अपौरुषेयं वचः श्रुतिः । तन्नैपुणं यथा—'निवेशयामासिथ हेलयोद्धृतं फणाभृतां छादनमेकमोकसः । जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरःसु भूतलम् ॥' श्रुत्यर्थस्मरणात्स्मृतिः—'भव्याभव्यविलोकिलोचनयुगं चेतः स्मृतेः पारगं धम्मिल्ले शिरसि स्थिते वरतनोर्मुख्या द्विजाः साक्षिणः । स्तेयं नो

मम कालिकेति कुचयोर्द्वन्द्वं प्रतिज्ञापरं हारान्तःस्थितपद्मरागमिषतः फालं दधौ शुद्धये ॥' यथा च—'एतस्या गगनश्रियः प्रियतरा नक्षत्रमालामला रात्रौ कण्ठमधिष्ठिताप्यपहृता प्राच्या प्रतीच्यान्विति। सौवर्णं रजतस्य गोलकममुं धत्तः स्वाभाग्योदयात्सूर्याचन्द्रमसोर्मिषेण युगपत्प्रातः स्वयं शुद्धये ॥' वेदाख्यानोपनिबन्धनं पुराणम्—'किं किं सिंहस्ततः किं नरसदृशवपुर्देवचित्रं धृतः किं नैवं कस्कोऽत्र जीवो द्रुतमुपनय रे देवसंप्राप्त एव। चापं चापं न खड्गः किमिति हहहहा कर्कशत्वं नखानामित्थं दैत्याधिनाथं खरनखकुलिशैर्जघ्निवान्यः स वोऽव्यात् ॥' पुराणप्रतिभेद एव इतिहासः। तन्नैपुणं यथा—'मदं नवैश्वर्यपदेन लम्भितं विमुच्य पूर्वः समयो विमृश्यताम्। जगज्जिघत्सातुरकण्ठपद्धतिर्न बालिनैवाहिततृप्तिरन्तकः ॥' आगम आप्तवचनं यथा—'प्रजापतिर्यः प्रतिमं जिजीविषुः शशास कृष्यादिषु कर्मसु प्रजाः। प्रबुद्धतत्त्वः पुनरद्भुतोदयो ममत्वतो निर्विविदे विदांवरः ॥' नाट्यनैपुणं यथा—'कार्योपक्षेपमादौ तनुरपि रचयंस्तस्य विस्तारमिच्छन्बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयँश्च। कुर्वन्बुद्ध्या विमर्शं प्रसृतमपि पुनः संहरन्कार्यजातं कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥' अभिधानकोशो नाममाला। ततो हि शब्दनिश्चयः॥ ननु प्रयुक्तमेव प्रयुज्यते, अन्यथाप्रयुक्तत्वदोषावकाशः, तत्किं नाममालया। मैवम्। सामान्येन प्रयुक्तादर्थावगतिर्भवति। यथा—नीवीशब्देन जघनवस्त्रग्रन्थिरुच्यते इति कस्यचिन्निश्चयः, 'स्त्रियः पुरुषस्य वा' इति संशये 'नीविराग्रन्थनं नार्या जघनस्थस्य वाससः' इति नाममालापदावलोकनादेव निर्णयो भवति। कामशास्त्रे नैपुणं यथा—'सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुग्धमलमर्थवचांसि। हारभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः ॥' अर्थशास्त्रनैपुणं यथा—'मत्कृत्यैः किल नाम पर्वतसुतो व्याप्तः प्रकृष्टान्तरैरुद्युक्ताः स्वनियोगसाधनविधौ सिद्धार्थकाद्याश्चराः। कृत्वा संप्रति कैतवेन कलहं मौर्येन्दुना राक्षसाद्भेत्स्यामि स्वमनेन भेदकुशलेनैष प्रतीपं द्विषः ॥' योगशास्त्रनैपुणं यथा—'मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रणाशमिह लब्धसबीजयोगाः। ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिविदो निरोद्धुम् ॥' आदिशब्दाज्ज्योतिःशास्त्रनैपुणं यथा—'क्रूरग्रहः स केतुश्चन्द्रमसंपूर्णमण्डलमिदानीम्। अभिभवितुमिच्छति बलाद्रक्षत्येनं तु बुधयोगः ॥' गजलक्षणनैपुणं यथा—'भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥' अश्वलक्षणनैपुणं यथा—'निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे। पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥' रत्नपरीक्षानैपुणं यथा—'जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान्। विमलत्रासविरहितस्त्रिलोकचिन्तामणिर्नेमिः ॥' द्यूतशास्त्रनैपुणं यथा—'यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते। इत्थं नेयौ रजनिदिवसौ तोलयन्द्वाविवाक्षौ कालः काल्या सह बहुकलः क्रीडति प्राणिसारैः ॥' धनुर्वेदनैपुणं यथा—'स दक्षिणापाङ्गनिविष्टमुष्टिं

नतांसमाकुञ्चितसव्यपादम् । ददर्श वक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥' एवमन्यदपि ।

काव्यज्ञशिक्षया परिशीलनमभ्यासः ।

काव्यं कर्तुं विचारयितुं च ये जानन्ति तेषां शिक्षया प्रवृत्तिरभ्यासः ।

शिक्षामाचक्षते—

तत्र कविसमये सतामपि भावानां केषांचिदनिबन्धः ।

तद्यथा—मालत्या वसन्ते । यथा—'मालतीविमुखश्चैत्रो विकासी पुष्पसंपदाम् । आश्चर्यं जातिहीनस्य कथं सुमनसः प्रियाः ॥'

पुष्पफलयोश्चन्दनद्रुमे ।

अनिबन्ध इति वर्तते । यथा—'सा छाया स च सुन्दरः परिमलस्ते कोमलाः पल्लवा भ्रातश्चन्दनपादपस्य बहवः सन्त्येव किं तैर्गुणैः । दृप्यद्दुष्टभुजङ्गसंगतिवशादापादमूलागतैरानीतं फलमन्यतोऽपि पथिकैः साशङ्कमास्वाद्यते ॥'

फलस्याशोकेषु ।

अनिबन्ध इति वर्तते । एवमन्यत्रापि । 'किं ते नम्रतया किमुन्नतया किं वा घनच्छायया किं वा पल्लवलीलया किमनया चाशोक पुष्पश्रिया । यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमः स्तुवन्नन्वहं न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥'

कृष्णपक्षे ज्योत्स्नायाः । शुक्लपक्षे त्वन्धकारस्य ।

यथा—'परतो न तत्त्वचिन्ता तद्वन्तः स्युर्मुखस्थगुणदोषैः । एको हि सितः पक्षः कौमुद्या तुल्ययापि कृष्णोऽन्यः ॥'

कुन्दकुड्मलानां कामिदन्तानां रक्तत्वस्य ।

यथा—'व्याकोशकुन्दकुड्मलविमलदतीं यो विहाय राजिमतीम् । मुक्त्यङ्गनानुरक्तो बभूव नेमिः स वः पायात् ॥'

कमलमुकुलानां हरितत्वस्य ।

यथा—'उद्दण्डोदरपुण्डरीकमुकुलभ्रान्तिस्पृशा दंष्ट्रया मग्नां लावणसैन्धवेऽम्भसि महीमुद्यच्छतो हेलया । तत्कालाकुलदैत्यदानवकुलैरुत्तालकोलाहलं शौरेरादिवराहलीलमवतादभ्रंलिहाग्रं वपुः ॥'

प्रियङ्गुपुष्पाणां पीतत्वस्य ।

यथा—'प्रियङ्गुश्यामलाङ्गाभो मुमुक्षुध्यानगोचरः । जपार्तिहरणायास्तु स संज्ञानो जिनः सताम् ॥'

दिवा नीलोत्पलादीनां विकासस्य ।

यथा—'कुमुदवनमपश्रि श्रीमदम्भोजषण्डं त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः। उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिललितानां वै विचित्रो विपाकः॥'

दिवा शेफालिकाकुसुमानां विस्रंसस्य।

यथा—'त्वद्विप्रयोगे किरणैस्तथोग्रैर्दग्धास्मि कृत्स्नं दिवसं सवित्रा। इतीव दुःखं शशिने गदन्ती शेफालिका रोदिति पुष्पबाष्पैः॥'

क्वचिदसतामपि भावानां निबन्धः। तद्यथा—नदीषु नीलोत्पलादीनाम्।

यथा—'शस्तं पयः पपुरनेनिजुरम्बराणि जक्षुर्विसंहृतविकाशिबिसप्रसूनाः। सैन्याः श्रियामनुपभोगनिरर्थकत्वमिथ्याप्रवादमसृजत्त्वननिम्नगानाम्॥'

जलाश्रयमात्रे हंसानाम्।

यथा—'अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः सा हंसैः कृतकौतुका चिरमभूद्गोदावरीरोधसि। आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥'

पर्वतमात्रे स्वर्णरत्नगजानां निबन्धः।

यथा—'क्रान्तं रुचा काञ्चनवप्रभाजा नवप्रभाजालभृतां मणीनाम्। श्रितं शिलाश्यामलताभिरामं लताभिरामन्त्रितषट्पदाभिः॥' यथा च—'नीलाश्मरश्मिपटलानि महेभमुक्तसूत्कारसीकरविसृञ्जि तटान्तरेषु। आलोकयन्ति सरलीकृतकण्ठनालाः सानन्दमम्बुदधियात्र मयूरनार्यः॥'

तमसो मुष्टिग्राह्यत्वस्य।

यथा—'गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः। सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः॥'

ज्योत्स्नायाः कुम्भोपवाह्यत्वादेः।

यथा—'शङ्कद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्। उत्सेक्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कलैः पातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका॥'

शिवचन्द्रमसो बालत्वस्य।

यथा—'कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः। दिवापि निष्ठ्यूतमरीचिभारां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः॥'

यशोहास्ययोः शौक्ल्यस्य।

यथा—'कर्पूरद्रुमगर्भधूलिधवलं यत्केतकानां त्विषः श्वेतिम्ना परिभूय चन्द्रमहसा सार्धं प्रतिस्पर्धते। तत्पाकोज्ज्वलनालिकेरसलिलच्छायावदातं यशः प्रालेयाचलचूलिकासु भव-

तो गायन्ति सिद्धाङ्गनाः ॥' यथा च—'गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः । शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं राशीभूतः प्रतिदिशमिव त्र्यम्बकस्याट्टहासः ॥'

अयशःपापयोः कार्ष्ण्यस्य ।

यथा—'प्रसरन्ति कीर्तयस्ते तव च रिपूणामकीर्तयो युगपत् । कुवलयदलसंवलिताः प्रतिदिशमिव मालतीमालाः ॥' यथा च—'तमश्चये महति निमज्जतः सतो जनस्य सत्पथगतिदर्शनं दिशत् । दिगन्तरप्रथितरथाश्वसंचरः प्रभाकरो भवति नरेश्वरः स्फुटम् ॥'

क्रोधानुरागयो रक्तत्वस्य ।

यथा—'शितितारकानुमितिताम्रनयनमरुणीकृतं क्रुधा । बाणवदनमुददीपि भिये जगतः सकीलमिव सूर्यमण्डलम् ॥' यथा—'गायन्निवालिविरुतैर्नृत्यन्निव चलैर्दलैः । त्वद्गुणैरिव रक्तोऽसौ मोदतेऽशोकपादपः ॥'

चक्रवाकानां निशि भिन्नतटाश्रयणस्य ।

यथा—'इह हि कुमुदकोशे पीतमम्भः सुशीतं कवलितमिह नालं कन्दलं चेह दृष्टम् । इति रटति निशायां पर्यटन्ती तटान्ते सहचरपरिमुक्ता चक्रवाकी वराकी ॥'

केषांचिन्नैयत्यम् । यथा—समुद्रेष्वेव मकराः ।

यथा—'रत्नानां निधिरित्यपां निलय इत्यत्युष्णतृष्णाज्वरैरस्माभिः श्रित एष केलिसदनं लक्ष्मीप्रियस्येति च । को जानाति यदस्य यास्यति करक्रोडान्तरस्थं पयस्ताम्यन्मीनमधीरलोलमकरं वातापितापी मुनिः ॥'

ताम्रपर्ण्यामेव मौक्तिकानि ।

यथा—'यस्योत्तमां मौक्तिककामधेनुरुत्पत्यकामञ्चति ताम्रपर्णी । रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ॥'

मलयगिरावेव चन्दनोत्पत्तिः ।

यथा—'ये देशा मलयोपकण्ठनिलयास्तेष्विन्धनं चन्दनं तीरोपान्तनिवासिनां जलनिधे रत्नार्जने नोद्यमः । काश्मीरप्रतिवासिनां भुवि नृणां नात्यादरः कुङ्कुमे दूरस्थस्य महार्घता परिभवः संवासतो जायते ॥'

हिमगिरावेव भूर्जजन्म ।

यथा—'तत्सैनिकाः समासाद्य भूर्जप्रस्तरितां भुवम् । तुषाराद्रिविटङ्केषु मुमुचुर्दिग्जयश्रमम् ॥'

वसन्त एव कोकिलरुतम् ।

यथा—'[1]माणं मुञ्चध देह वल्लहजणे दिट्ठिं तरङ्गुत्तरं तारुण्णं दिअहाणि पञ्च दह वा पीणत्थणत्थम्भणम्। इत्थं कोइलमञ्जुसिञ्जणमिसा देवस्स पञ्चेसुणो दिण्णा चित्तमहूसवेण सहसा(भुवणे) आण्णव्व सव्वंकसा॥'

वर्षास्वेव मयूरस्य नृत्यं रुतं च।

यथा—'ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी पुत्रप्रेम्णा कुवलयदलत्रापि कर्णे करोति। धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः॥'

अविशेषोक्तौ माणिक्यानां शोणतैव।

यथा—'विभोः सभायां भान्त्येते रत्नदीपाः प्रभाभरैः। कृतालक्तकपोतश्रीविभ्रमासन्नवारिदाः॥'

पुष्पाणां शुक्लतैव।

यथा—'फलेषु सुस्वादुतरेषु सत्सु क्रव्यार्थिनं मां मृगपृष्ठलग्नम्। जाने तदानीं स्मितपुष्पगुच्छच्छलादहासीद्वनवृक्षवीथी॥'

मेघानां कृष्णतैव।

यथा—'लक्ष्मीभृतोऽम्भोधितटाधिवासान्द्रुमानसौ नीरदनीलभासः। लतावधूसंप्रयुजोऽधिवेलं बहूकृतान्स्वानिव पश्यति स्म॥'

कृष्णनीलहरितश्यामानाम्। ऐक्यमिति [वक्ष्यमाणेन] संबन्धः। एवमग्रेऽपि।

यथा—'सजलजलदनीला भाति यस्मिन्वनाली। मरकतमणिकृष्णो यत्र नेमिर्जिनेन्द्रः। विकचकुवलयालिश्यामलं यत्सरोम्भः प्रमदयति न कांस्कांस्तत्पुरं राहडस्य॥'

पीतरक्तयोः।

यथा—'नवकनकपिशङ्गं वासराणां विधातुः ककुभि कुलिशपाणेर्भाति भासां वितानम्। जनितभुवनदाहारम्भमम्भांसि दग्ध्वा चलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः॥'

शुक्लगौरयोः।

यथा—'कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम्। अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम्॥'

रक्तगौरयोः।

---

१. कर्पूरमञ्जर्यां प्रथमजवनिकान्तरे श्लोकोऽयम्. 'मानं मुञ्चत ददत वल्लभजने दृष्टिं तरङ्गोत्तरां तारुण्यं दिवसानि पञ्च दश वा पीनस्तनस्तम्भनम्। इत्थं कोकिलमञ्जुशिञ्जनवशाद्देवस्य पञ्चेषोर्दत्ता चित्तमहोत्सवेन सहसा(भुवने) आज्ञैव सर्वंकषा॥' इति छाया.

यथा—'पयसि सलिलराशेर्नक्तमन्तर्निमग्नं स्फुटमनिशमतापि ज्वालया वाडवाग्नेः । यदयमिदमिदानीमङ्गमुद्यद्दधाति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥'

चन्द्रे शशमृगयोः ।

यथा—'लक्ष्मीक्रीडातडागं रतिधवलगृहं दर्पणो दिग्वधूनां पुष्पश्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम् । पिण्डीभूतं हरस्य स्मितममृतसरित्पुण्डरीकं शशाङ्को ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोकुलस्य ॥' यथा [वा]—'किं कारणं तु कविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः । एके मृगाङ्कमृगमादिवराहमन्ये देव त्वदस्त्रचकिताः श्रयितुं स्वजातिम् ॥'

कामकेतने मकरमत्स्ययोः ।

यथा—'बाणाहवव्याहतशंभुशक्तेरासत्तिमासाद्य जनार्दनस्य । शरीरिणा जैत्रशरेण यत्र निःशङ्कमूषे मकरध्वजेन ॥' यथा वा—'स्त्रीमुद्रां झषकेतनस्य महतीं सर्वार्थसंपत्करीं ये मूढाः प्रविहाय यान्ति कुधियो मिथ्या फलान्वेषिणः । ते तेनैव निहत्य निर्दयतरं मुण्डीकृता लुञ्चिताः केचित्पञ्चशिखीकृताश्च जटिनः कापालिकाश्चापरे ॥'

समुद्रात्रिनेत्रसमुत्पन्नयोश्चन्द्रयोः ।

यथा—'उत्पत्तिर्जलधौ तुषारशिशिरा कान्तिः क्रमच्छेदिनी वासो जह्नुसुताङ्गसङ्गशुचिनि स्थाणोर्जटाजूटके । एतस्मिँस्त्रितये तथापि न गतः संपूर्णतां चन्द्रमाः पुंसां सत्यमिदं न जन्म न गुणा नोपाश्रयः संपदे ॥' यथा च—'अत्रिजातस्य या मूर्तिः शशिनः सज्जनस्य च । क्व सावैरात्रिजातस्य तमसो दुर्जनस्य च ॥'

द्वादशानामप्यादित्यानाम् ।

यथा—'साद्रिद्यूर्वीनदीशा दिशति दश दिशो दर्शयन्प्राग्दशोर्ध्वः सादृश्यं दृश्यते नो स दशशतदृशि त्रैदशेयस्य देशो (?) । दीप्तांशुर्वः स दिश्यादशिवयुगदशादर्शितद्वादशात्मा संशास्त्यश्वाँश्च यस्याशयविदतिशयाद्दंदशूकाशनाद्याः ॥'

क्षीरक्षारसमुद्रयोः ।

यथा—'ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा । तीरे कल्पमहीरुहः किमपरं नाम्नैव रत्नाकरो दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥'

दैत्यदानवासुराणाम् ।

तत्र हिरण्याक्षहिरण्यकशिपुप्रह्लादविरोचनबलिबाणादयो दैत्याः । विप्रचितिसंवरनमुचिपुलोमप्रभृतयो दानवाः । बलवृत्रचिक्षुर(स्त)वृषपर्वादयोऽसुराः । तेषामैक्यम् । यथा—'करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम् । हरे हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥' यथा च—'तं संबरासुरशरासनशल्यसारके-

यूररत्नकिरणारुणबाहुदण्डम् । पीनांसलप्रदयिताकुचपत्रभङ्गं मीनध्वजं जितजगत्रितयं जयेत्कः ॥'

कामस्य मूर्तत्वामूर्तत्वयोः ।

तत्र मूर्तत्वस्य यथा—'स एष भुवनत्रयप्रथितसंयमः शंकरो बिभर्ति वपुषाधुना विरहकातरः कामिनीम् । अनेन किल निर्जिता वयमिति प्रियायाः करं करेण परिताडयञ्जयति जातहासः स्मरः ॥' अमूर्तत्वस्य यथा—'तव सौरूप्यमालोक्य जगज्जनविलक्षणम् । लज्जयेव जगत्स्वामिन्ननङ्गोऽनङ्गतां गतः ॥'

चक्षुरादेरेकानेकवर्णत्वस्य चैक्यम् ।

तत्र शुक्लता यथा—'जं मुक्का सवणंतरेण तरला तिक्खा कडक्खच्छडा शिङ्गाथिट्ठिअकेअअग्गिमदलद्दोणीसरिच्छच्छई। तं कप्पूररसेण णं धवलिदो जोण्हाअ णं ण्हाविदो मुत्ताणं घणरेणुण व्व छुरिदो जादो ह्मि एत्थंतरे ॥' श्यामलता यथा—'तत्प्रार्थितं जवनवाजिगतेन राज्ञा तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति । श्यामीचकार वनमाकुलदृष्टिपातैर्वातेरितोत्पलदलप्रकरैरिवाम्भः ॥' कृष्णता यथा—'पादन्यासक्वणितरसनास्तत्र लीलावधूतै रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ता । वश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दूनामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥' रक्तता यथा—'वक्त्रं चन्द्रो नयनयुगलीपाटलाम्भोजयुग्मं नासानालं दशनवसनं फुल्लबन्धूकपुष्पम् । कण्ठः कम्बुः कुचयुगमथो हेमकुम्भौ नितम्बौ गङ्गारोधश्चरणयुगलं वारिजद्वन्द्वमस्याः ॥' अनेकवर्णता यथा—'तामुत्तीर्य व्रजपरिचितभ्रूलताविभ्रमाणां पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णसारप्रभाणाम् । कुन्दक्षेपानुगमधुकरश्रीमुखामात्मबिम्बं पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥'

क्वचित्प्रतिबिम्बतया क्वचिदालेख्यप्रख्यतया क्वचित्तुल्यदेहितुल्यतया क्वचित्परपुरप्रवेशप्रतिमतया उत्तरोत्तरोत्कर्षेण महाकविकाव्यानां छायोपजीवनं पादद्वयत्रयोपजीवनम् उक्त्युपजीवनं समस्यापूरणपदपरिवृत्तिरर्थशून्याभासादयश्च शिक्षा ।

तत्र यथा(त्रा)र्थः स एव, वाक्यान्तरविरचना त्वन्या । तत्प्रतिबिम्बतुल्यम् ।

---

१. 'पौष्प्याः पञ्च शराः शरासनमपि ज्याशून्यमिक्षोर्लता जेतव्यं जगतां त्रयं स च पुनर्जेताप्यनङ्गः किल । इत्याश्चर्यपरम्पराघटनया चेतश्चमत्कारयन्व्यापारः सुतरां विचारपदवीवन्ध्यो विधिर्वन्द्यताम् ॥' इत्यपि प्रत्यन्तरे. २. कर्पूरमञ्जर्यां प्रथमजवनिकायां श्लोकोऽयं वर्तते. 'यन्मुक्त्वा श्रवणान्तरेण तरला तीक्ष्णा कटाक्षच्छटा शृङ्गाधिष्ठितकेतकाग्रिमदलद्रोणीसदृक्षच्छविः । तत्कर्पूररसेन ननु धवलितो ज्योत्स्नया ननु स्नापितो मुक्तानां घनरेणुनेव छुरितो जातोऽस्म्यत्रान्तरे ॥' इति च्छाया.

यथा—'तेजः पुष्णातु पार्श्वो दुरितविजयिनः शाश्वतानन्दबीजं संक्रान्तः सप्तरत्न्यां भुजगपतिफणाचक्रपर्यङ्कभाजि । कर्माण्यष्टौ समन्तात्त्रिभुवनभवनोत्सङ्गितानां जनानां यश्छेत्तुं तुल्यकालं वहति निजतनुं क्लृप्तसप्तान्यरूपाम् ॥' अत्रार्थे—'पार्श्वप्रभुः फणिफणामणिसप्तकान्तः संक्रान्तकान्तवपुरस्तु स वः शिवाय । कर्माष्टकं सपदि हन्तुमिवानतानां यः क्लृप्तसप्तविततान्यवपुर्बिभर्ति ॥'

कियतापि भेदेनैतस्मात्यद्भिन्नमिव प्रतिभासते । तदालेख्यप्रख्यम् ।

यथा—'जयति फणीन्द्रफणामणिसंक्रान्तवपुर्जिनः पार्श्वः । सर्वमनेकान्तमिदं वस्त्विह कथयन्निवेति भव्यानाम् ॥'

यत्र विषयभेदेऽपि नितान्तसादृश्यादभेदप्रतीतिस्तत्तुल्यदेहितुल्यम् ।

यथा—'प्रतिदिशमिह दोलान्दोलनव्यापृतानां कुवलयनयनानामाननैरुल्लसद्भिः । विमललवणिमाम्भश्चन्द्रिकां द्राक्किरद्भिर्नवशशधरमालामालिनीवाभवद्द्यौः ॥' अत्रार्थे—'जिनभवनशिखाग्रन्यस्तपर्यस्तदोषस्फुरितरुचिरकुम्भोद्दामदीप्तिप्रतानैः । प्रतिसमयमिह श्रीराहडेनाधिकं द्यौस्तरुणतरणिमालामालिनीव व्यधायि ॥'

यत्र काव्यस्य जीवितव्यैक्यं परिकरबन्धस्तु दूरादेवान्यस्तत्परपुरप्रवेशतुल्यम् ।

यथा—'अलंकारः शङ्काकरनरकपालं परिजनो विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः । अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥' यथा च—'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥' पदोपजीवनं यथा—'दूराकृष्टशिलीमुखव्यतिकरान्नो किं किरातानिमानाराद्व्यावृतपीतलोहितमुखान्किं वा पलाशानपि । पान्थाः केसरिणं न पश्यत पुरोऽप्येनं वसन्तं वने मूढा रक्षत जीवितानि शरणं यात प्रियां देवताम् ॥' यथा च—'मा गाः पान्थ प्रियां मुक्त्वा दूराकृष्टशिलीमुखम् । स्थितं पन्थानमावृत्य किं किरातं न पश्यसि ॥' पादोपजीवनं यथा—'जातो मार्गे सुरभिकुसुमः सत्फलो नम्रशाखः स्फीताभोगो बहुलविटपः स्वादुतोयोपगूढः । नैवात्मार्थं वहति महतीं पादपेन्द्रः श्रियं तामापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥' यथा च—'तं चेद्दावौ वहति सरलस्कन्धसंघट्टजन्मा बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः । अर्हस्येनं शमयितुमलं वारिधारासहस्रैरापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥' आदिशब्दात्पादत्रयोपजीवनमपि युज्यते परं तत्प्रकटचौर्यमिति नोपदिष्टम् । उक्त्युपजीवनं यथा—'कैवर्तकर्कशकरग्रहणच्युतोऽपि जाले पुनर्निपतितः शफरो वराकः । जालात्पुनर्निगलितो गलितो बकेन वामे विधौ बत कुतो व्यसनान्निवृत्तिः ॥' यथा च—छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां प्रान्तेषु ज्वलदग्निजालजटिलान्निर्गत्य दूरं वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः कूपान्तः पतितः करोतु विगुणे किंवा विधौ पौरुषम् ॥' समस्यापूरणं

त्वनेकधा भवति। पादसमस्या यथा—'समुद्राद्धूलिरुत्थिता' इति चतुर्थः पादः। अत्र क्रमशस्त्रयः पादाः। यथा—'अगस्तिहस्तविन्यस्तनिपीतसकलाम्भसः। अधःफणीन्द्रफूत्कारैः समुद्राद्धूलिरुत्थिता॥' पादद्वयसमस्या यथा—'स्तनावालोक्य तन्वङ्ग्याः शिरः कम्पयते युवा।' इति पूर्वार्धम्। 'तयोरन्तर्विनिर्मग्नां दृष्टिमुत्पाटयन्निव॥' इत्युत्तरार्धम्। पादत्रयसमस्या यथा—'गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः सद्यःकृत्तद्विरददशनच्छेदगौरस्य तस्य। कैलासस्यादिमजिनपतिं प्रार्थयेऽत्र विमुक्त्यै याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा॥' इति मेघदूतकाव्यस्य पादत्रयं तृतीयपादेन संकलितम्। यथा च—'छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः। योऽयं नेमेः सदनमचलः प्रीतये यत्र ते स्याच्छीतो वायुः परिणमयिता काननोदुम्बराणाम्॥' पदपरिवृत्तिर्यथा—'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥' तथा—'वाण्यर्थाविव संपृक्तौ वाण्यर्थप्रतिपत्तये। जगतो मातरौ (?) वन्दे शर्वाणीशशिशेखरौ॥' अर्थशून्यपदाभ्यासो यथा—'आनन्दसंदोहपदारविन्दकुन्देन्दुकुन्दोदितबिन्दुवृन्दम्। इन्दिन्दिरान्दोलितमन्दमन्दनिष्यन्दनिन्यन्मकरन्दवन्द्यम्॥'

बवयोर्डलयोरैक्यम्।

यथा—'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देवम्। विलसत्करेणुगहनं संप्रति सममावयोः सदनम्॥' यथा च—'नालस्यप्रसरो जडेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखे च मृदुता मित्रे महान्प्रश्रयः। आमूलं किल संग्रहव्यसनिता द्वेषश्च दोषाकरे यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः॥'

नानुस्वारविसर्गौ चित्रभङ्गाय।

यथा—'चन्द्रेडितं चटुलितस्वरधीशसाररत्नासनं रभसकल्पितशोकजातम्। पश्यामि पापतिमिरक्षयकारकायमल्पेतरामलतपःकचलोपलोचम्॥' पापतिमिरक्षयकारकायं पश्यामि। इति हारबन्धचित्रम्॥ कथंभूतम्। चन्द्रेडितं चन्द्रस्तुतम्। पुनः कथंभूतम्। चटुलितस्वरधीशसाररत्नासनं कम्पितशक्रोत्कृष्टसिंहासनम्। रभसकल्पितशोकजातं निराकृतशोकसमूहम्। पुनः कथंभूतम्। अल्पेतरामलतपःकचलोपलोचं केशापनोददर्शकम्॥ विसर्गो यथा—'नित्यं कुन्थ्वा(म्थ्या?)दिसत्त्वेष्वहिंस्रः कुंथ्विनितिसंज्ञकः। करिराजकराकारकरो मामवताज्जिनः॥' त्रिशूलबन्धचित्रं सुबोधम्।

शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालंकारौ काव्यम्।

दोषगुणालंकाराणामग्रे प्रपञ्च्यमानत्वान्नात्र विस्तरः। प्रायः सालंकाराविति निरलंकारयोरपि शब्दार्थयोः क्वचित्काव्यत्वख्यापनार्थम्। यथा—'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्। विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥'

---

१. परसवर्णाभावमपेक्ष्येदम्.

**तच्च पद्यगद्यमिश्रभेदैस्त्रिधा ।**

तत्र पद्यं छन्दोबन्धः । स च महाकाव्यादिः ।

तत्र प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नान्त्यवृत्तसर्गाश्वासकसंध्यवस्कन्धकबन्धम्, मुखप्रतिमुखगर्भविमर्षनिर्वहणरूपसंधिपञ्चकोपेतम्, असंक्षिप्तग्रन्थम्, अविषमबन्धम्, अनतिविस्तीर्णपरस्परसंबद्धसर्गम्, आशीर्नमस्क्रियावस्तुनिर्देशोपक्रमयुतम्, वक्तव्यवस्तुप्रतिज्ञाततत्प्रयोजनोपन्यासकविप्रशंसासज्जनदुर्जनचिन्तादिवाक्योपेतम्, दुष्करचित्राद्येकसर्गाङ्कितम्, स्वाभिप्रेतवस्त्वङ्कितसर्गान्तम्, चतुर्वर्गफलोपेतम्, चतुरोदात्तनायकम्, प्रसिद्धनायकचरितम्, नगनागरसागरर्तुचन्द्रार्कोदयास्तसमग्रोद्यानजलकेलिमधुपानसुरतमन्त्रदूतसैन्यावासप्रयाणाजिनायकाभ्युदयविवाहविप्रलम्भाश्रमनद्यादिवर्णनोपेतं महाकाव्यम् ।

तत्र संस्कृतभाषानिबद्धसर्गबन्धं रघुवंशादि । प्राकृतभाषानिबद्धाश्वासकबन्धं सेतुबन्धादि । अपभ्रंशभाषानिबद्धसंधिबन्धमब्धिमथनादि । ग्राम्यभाषानिबद्धावस्कन्धबन्धं भीमकाव्यादि । प्रायोग्रहणात्संस्कृतभाषायामपि क्वचिदाश्वासकबन्धो न दुष्यति, तथा आदितः समाप्तिपर्यन्तं कुत्राप्येकमेव छन्दो न दुष्यति । मुखसंधिर्यथा—'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा । [1]काव्यशरीरानुगतं तन्मुखं परिचक्षते ॥' प्रतिमुखं यथा—'बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् । मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ॥' गर्भो यथा—उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा । पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥' विमर्षो यथा—'[2]गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा । क्रोधव्यसनजो वापि स विमर्षः प्रकीर्तितः ॥' निर्वहणं यथा—'समानयनमर्थानां मुखाद्यानां सबीजिनाम् । नानाभावोत्तराणां यद्भवेन्निर्वहणं तु तत् ॥' आशीर्नमस्क्रियावस्तुनिर्देशोपक्रमयुतमिति । तत्राशीर्यथा चन्द्रप्रभकाव्ये—'श्रियं क्रियाद्यस्य सुरागमे नटत्सुरेन्द्रनेत्रप्रतिबिम्बलाञ्छिता । सभा बभौ रत्नमयी महोत्पलैः कृतोपहारेव स वोऽग्रजो जिनः ॥' नमस्कारो यथा रघुवंशे—'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥' वस्तुनिर्देशो यथा—'श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि । वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥' वस्तुप्रतिज्ञाततत्प्रयोजनोपक्षेप(न्यास) इति । यथा स्वोपज्ञऋषभदेवचरितमहाकाव्ये—'यत्पुष्पदन्तमुनिसेनमुनीन्द्रमुख्यैः पूर्वैः कृतं सुकविभिस्तदहं विधित्सुः । हास्याय कस्य

---

१. 'काव्ये शरीरानुगता' इति नाट्यशास्त्रस्थपाठः. २. 'गर्भान्निर्भिन्न' इति नाट्यशास्त्रे. ३. 'र्श इति स्मृतः' नाट्य०.

ननु नास्ति तथापि सन्तः शृण्वन्तु कंचन ममापि सुयुक्तिसूक्तम् ॥' कविप्रशंसा चात्रैव। यथा—'नव्यनव्यक्रमासाद्यानुक्षणं यस्य सूक्तयः। प्रभवन्ति प्रमोदाय कालिदासः स सत्कविः ॥' सुजनदुर्जनचिन्ता यथा नेमिनिर्वाणे—'गुणप्रतीतिः सुजनाज्जनस्य दोषेष्ववज्ञा खलजल्पितेषु। अतः सतो नाप्यसतो निवृत्तिर्विशेषशाली भवति प्रयत्नः ॥' दुष्करसर्गो(चित्रा)द्यङ्कितैकसर्गत्वमिति। यथा—शिशुपालवधे एकोनविंशतितमः सर्गः। स्वाभिप्रेतवस्त्वङ्कितसर्गान्तमिति। यथा—शिशुपालवधः श्र्यङ्कः, विष्णुजयो विष्ण्वङ्कः, किरातार्जुनीयं लक्ष्म्यङ्कम्। चतुर्वर्गफलोपेतमिति। चत्वारो वर्गा धर्मार्थकामलक्षणव्यस्ताः समस्ता वा तत्फलसंयुक्तम्। चतुरोदात्तनायकमिति। यथा शिशुपालवधे विष्णुः। नेमिनिर्वाणे नेमिः। प्रसिद्धनायकचरितमिति। अनेन प्रकरणादिवत्स्वकल्पितकथावस्तुनिषेधः। नगनगरेत्यादि। तत्र नगवर्णनं किरातार्जुनीयकुमारसंभवादौ। नगरवर्णनं शिशुपालवधनेमिनिर्वाणादौ। अर्णववर्णनं सेतुबन्धनेमिनिर्वाणादौ। ऋतुवर्णनं रघुवंशहरिवंशशिशुपालवधादौ। चन्द्रोदयास्तसमयवर्णनं शिशुपालवधचन्द्रप्रभचरितादौ। उद्यानजलकेलिमधुपानवर्णनं नेमिनिर्वाणराजीमतीपरित्यागादौ। मन्त्रदूतसैन्यावासप्रयाणाजिवर्णनं शिशुपालवधविष्णुविजयादौ। नायकाभ्युदयवर्णनं विष्णुविजयनेमिनिर्वाणादौ। विवाहवर्णनं कुमारसंभवादौ। विप्रलम्भवर्णनं राजीमतीपरित्यागादौ। आश्रमवर्णनं रघुवंशादौ। नदीवर्णनं मेघदूतादौ।

तत्रैकेन छन्दसा मुक्तकम्। द्वाभ्यां युग्मं संदानितकं च। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। द्वादशान्तैः कुलकम्।

सुबोधम्।

गद्यमपादः पदसंतानच्छन्दोरहितो वाक्यसंदर्भः।

तत्र नायिकाख्यातस्ववृत्तान्ताभाव्यर्थशंसिनी सोच्छ्वासा कन्यकापहारसमागमाभ्युदयभूषिता मित्रादिमुखाख्यातवृत्तान्ता अन्तरान्तराप्रविरलपद्यबन्धा आख्यायिका।

तत्रेति। गद्ये। आख्यायिका हर्षचरितादिः। शेषं सुबोधम्।

गद्यपद्यमयं मिश्रम्।

तत्र नाटकप्रकरणभाणप्रहसनडिमसमवकारेहामृगोत्सृष्टिकाङ्कव्यायोगवीथीरूपाण्यभिनेयानि।

तत्रेति। मिश्रे। नाटकादीनि दशरूपकाणि। अभिनेयानि। तेषां च भरतमुनिनोपदर्शितलक्षणमुपदिश्यते[1]। यथा—'प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव। राजर्षिवंश्यच-

---

1. नाट्यशास्त्रेऽष्टादशाध्याये.

रितं तथा च दिव्याश्रयोपेतम् ॥ नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चापि । अङ्कप्रवेशकाढ्यं भवति तन्नाटकं नाम ॥' (**प्रकरणं** तु—) 'यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव । औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥ [1]यदनार्षमनाहार्यं काव्यं [2]प्रकरोत्यभूतगुणयुक्तम् । उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥ यन्नाटके [3]मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च । तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसंधिषु तु ॥ विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् । चरितं यन्नैकक्रतं तत्प्रज्ञेयं प्रकरणं नाम ॥ नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगः । वाह्यजनसंयुतं तत्प्रज्ञेयं प्रकरणं नाम ॥ दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् । मन्दस्त्रीकुलचरितं काव्यं कार्यं [4]प्रकरणे तु ॥' (**भाणस्तु**—) 'आत्मानुभूतशंसी परशंसनवर्णना[5]प्रयुक्तश्च । विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥ परवचनमात्म[6]संस्थैः प्रतिवचनैरुत्तरोत्तरग्रथितैः । आकाशपुरुषकथितैरङ्गविकारैरभिनयेच्च ॥ धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकैश्चैव । एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥' (**प्रहसनं** तु—) 'प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च संकीर्णम् । वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् ॥ भगवत्तापसविप्रैरन्यैरपि हासवादसंबद्धम् । कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥ अविकृतभाषाचारं विशेषभावोपपन्नचरित[7]मिदम् । नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः । अनिभृतवेषपरिच्छदचेष्टितकरणं च संकीर्णम् ॥' (**डिमस्तु**—) 'प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव । [8]षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥ शृङ्गारहास्यवर्ज्यं शेषैरन्यै रसैः समायुक्तः । दीप्तरसकाव्ययोनिर्नानाभावोपसंपन्नः ॥ निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः । युद्धनियुद्धाधर्षणसंस्फोटः कृतश्च [9]विज्ञेयैः ॥ मायेन्द्रजालबहुलो [10]बहुसुप्तोत्थानयोगयुक्तश्च । देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च । षोडशनायकबहुलः सात्वत्यारभटिवृत्ति[11]संपूर्णः ॥ कार्यो डिमः प्रयत्नान्नानाश्रयभावसंयुक्तः ॥' **समवकारस्तु**—'देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव । त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिशृङ्गारः ॥ द्वादशनायकबहुलो ह्यष्टादशनायिकाप्रमाणश्च ॥' इति । (**ईहामृगस्तु**—) 'दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः । सुविहितवस्तुनिबद्धो विप्रत्ययकारणश्चैव ॥ उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च । संक्षोभविद्रवकृतः संस्फोटकृतस्तथा चैव ॥ स्त्रीभेदनोपहरणावमर्दनप्राप्तवस्तुश्शृङ्गारः । ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च ॥ यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव । ईहामृगेऽपि यत्स्यात्केवलमत्र स्त्रियो योगः ॥' (**उत्सृष्टिकाङ्कस्तु**—) 'वक्ष्याम्यतःपरमहं लक्षणमुत्सृष्टिकाङ्कस्य । प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ॥ दिव्यपुरुषैर्वि-

---

१. 'यदनर्थमपाहार्यं' 'यदनायकहार्यकार्यम्' इति वा नाट्यशास्त्रे. २. 'कुरुते प्रभूत' नाट्य०. ३. 'प्रयोगे' नाट्य०. ४. 'विशेषेषु' नाट्य०. ५. 'द्विविधा' नाट्य०. ६. 'संस्थं' नाट्य०. ७. 'पदम्' नाट्य०. ८. 'षट्त्रिंशल्लक्षणयुक्त' नाट्य०. ९. 'कर्तव्यः' नाट्य०. १०. 'बहुपुरुषोत्थानयुक्तश्च' नाट्य०. ११. 'संपन्नः' नाट्य०. १२. 'श्चतुरङ्कविभूषितश्चैव' नाट्य०.

युक्तः शेषैरन्यैर्भवेत्पुंभिः । करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ॥ स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव । नानाव्याकुलचेष्टः सात्वत्यारभटिकैशिकीहीनः ॥ कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥' (**व्यायोगस्तु**—) 'व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः । अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥ बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे । न तु तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥ न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः । युद्धनियुद्धाधर्षणसंघर्षकृतश्च कर्तव्यः ॥ एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ॥' (**वीथी** तु—) 'सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः । वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥' नाटकभेदान्नाटिका । यदाह—'प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं नृपतिम् । अन्तःपुरसंगीतककन्यामधिकृत्य कर्तव्या ॥ स्त्रीप्राया चतुरङ्का ललिताभिनयात्मका सुविहिताङ्गी । बहुनृत्यगीतवाद्या रतिसंभोगात्मिका चैव ॥ राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता । नायकदेवीदूतीसपरिजना नाटिका ज्ञेया ॥' एवं प्रकरणभेदात्प्रकरणिकापि विज्ञेया । सट्टकोऽपि कैश्चिदुक्तः । तद्यथा—'विष्कम्भकस्त्वेकरहितो यस्त्वेकभाषया भवति । अप्राकृतसंस्कृतया स सट्टको नाटिकाप्रतिमः ॥'

गेयं विभजते—

डोम्बिकाभाणप्रस्थानभाणिकाप्रेरणशिङ्गकरामाक्रीडहल्लीसकश्रीगदितरासकगोष्ठीप्रभृतीनि गेयानि ।

पदार्थाभिनयस्वभावानि डोम्बिकादीनि गेयानि रूपकाणि चिरंतनैरुक्तानि । तद्यथा—'छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः । आवर्ज्यते मनः सा तु मसृणा **डोम्बिका** मता ॥ नृसिंहशूकरादीनां वर्णनं जल्पयेद्यतः । नर्तकी तेन **भाणः** स्यादुद्धताङ्गप्रवर्तितः ॥ गजादीनां गतिं तुल्यां कृत्वा प्रसवनं तथा । अल्पविद्धं सुमसृणं तत्**प्रस्थानं** प्रचक्षते ॥ बालक्रीडानियुद्धादि तथा शूकरसिंहजा । धवलादिकृता क्रीडा यत्र सा **भाणिका** मता ॥ हास्यप्रायं **प्रेरणं** तु स्यात्प्रहेलिकयान्वितम् । सख्याः समक्षं पत्युर्यदुद्धृतं नृत्तमुच्यते ॥ मसृणं च क्वचिद्धूर्तचरितं **शिङ्गकस्तु** सः । ऋतुवर्णनसंयुक्तं **रामाक्रीडं** तु भाष्यते ॥ मण्डलेन तु यन्नृत्तं **हल्लीसक**मिति स्मृतम् । एकसूत्रं तु नेता स्याद्गोपस्त्रीणां यथा हरिः ॥ यस्मिन्कुलाङ्गना पत्युः सख्यग्रे वर्णयेद्गुणान् । उपालम्भं च कुरुते गेये **श्रीगदितं** तु तत् ॥ अनेकनर्तकीयोज्यं चित्रताललयान्वितम् । आचतुःषष्टियुगला**द्रासकं** मसृणोद्धते ॥ गोष्ठे यत्र विहरतश्चेष्टितमिह कैटभद्विषः किंचित् । रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति **गोष्ठी**ति ॥'

धीरप्रशान्तनायकोपेता गद्येन पद्येन वा सर्वभाषानुविद्धा कथा ।

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः । तस्य तु वृत्तमन्येन कविना यत्र वर्ण्यते सा काचिद्गद्यमयी कादम्बरीवत् । काचित्पद्यमयी लीलावतीवत् । सर्वभाषानुविद्धासंस्कृतप्राकृतेन मागध्या सौरसैन्या शच्या अपभ्रंशेन वा रचिता कथा ॥

**गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ।**

यान्यङ्कानि स्वनाम्ना परनाम्ना वा करोति कविः तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः । यथा वासवदत्ता दमयन्ती वा ॥

इति महाकविश्रीवाग्भटविरचितायामलंकारतिलकाभिधानस्वोपज्ञ-काव्यानुशासनवृत्तौ प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

'निर्दोषौ शब्दार्थौ काव्यम्' इत्युक्तम् । तत्र शब्ददोषानाह—

**निरर्थकनिर्लक्षणाश्लीलाप्रयुक्तासमर्थानुचितार्थश्रुतिकटुक्लिष्टाविमृष्टविधेयांशविरुद्धबुद्धिकृन्नेयार्थनिहतार्थाप्रतीतग्राम्यसंदिग्धावाचकत्वानि शब्ददोषाः पदे वाक्ये च भवन्ति ।**

तत्र—

**प्रकृतानुपयोगि निरर्थकम् ।**

पदे यथा—'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि । अभिवाञ्छितं प्रसिद्ध्यतु भगवति युष्मत्प्रसादेन ॥' अत्र हिशब्दो निरर्थकः। पादैकदेशोऽपि पदमेव । तन्निरर्थकत्वमुदाह्रियते । यथा—'आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासितप्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम् । संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥' अत्र कुरङ्गेक्षणेत्येकवचनात् दृशामिति बहुवचनं निरर्थकम् । वाक्ये यथा—'बल्यरिक्रत्वरी पातां साम्बुव्यम्बुघनोपमौ । सदृशौ काकबकाभ्यां च वै हि तु च वै हि तु ॥'

**तच्च मत्तोन्मत्तबालाद्युक्तौ विशेषतो रम्यम् ।**

तत्र चैश्वर्यबलरूपतपोवयःश्रुतादिभेदैर्मदोऽनेकधा भवति । तत्रैश्वर्यमदो यथा—'एहि गच्छ बतोत्तिष्ठ वद मौनं समाचर । एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥'एवमन्यदप्युदाहार्यम् ॥

**शब्दानुशासनच्छन्दोऽनुशासनादिलक्षणरहितं निर्लक्षणम् ।**

शब्दानुशासनरहितं पदे यथा माघस्य—'संमूर्च्छदुच्छृङ्खलशङ्खनिःस्वनः स्वनुप्रयाते पटहस्य शार्ङ्गिणि । सत्वानि निन्ये नितरां महान्त्यपि व्यथां द्वयेषामपि मेदिनीभृताम् ॥' अत्र 'द्वयेषाम्' इति न प्राप्नोति । द्वयानामिति भवति । कालिदासस्य यथा—'दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि । तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥' अत्र पाण्ड्या इति बहुवचने तद्धितप्रत्ययलोपे पाण्डव इति प्राप्नोति । तथा—'तेनाभिघातरभसस्य विकृष्य पत्री वन्यस्य नेत्रविवरे महिषस्य मुक्तः । निर्भिन्नविग्रहमशोणितलिप्तगात्रस्तं पातयां प्रथममास पपात पश्चात् ॥' अत्र पातयामासेति अव्यवधानेन प्रयोगः प्राप्नोति । भारवेर्यथा—'उन्मज्यच्छफर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः । गाण्डीवी

कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥' अत्र आजघ्ने इति आत्मनेपदं न प्राप्नोति । हन्तेः स्वाङ्गकर्मकत्वाभावात् । त्रिविक्रमस्य यथा—'सरित इव गावः पीवरोधसः' । अत्र पीवरोध्न्य इति प्राप्नोति । शीताया यथा—'मा भैः शशाङ्क मम सीधुनि नास्ति राहुः खे रोहिणी वसति कातर किं बभाषे । प्रायो विदग्धवनिता नवसंगमेषु पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥' अत्र मा भैषीरिति प्राप्नोति । वाक्ये यथा—'प्रदत्तं नैव यैः स्वीयविभवस्फीतमानतः । तपो न तपितं किंचित्तेषां जन्मस्य किं फलम् ॥' अत्र प्रदत्तस्थाने प्रत्तमिति, स्वीयस्थाने स्वकीयमिति, स्फीतस्थाने स्फातिरिति, तपितस्थाने तप्तमिति, जन्मस्येति स्थाने जन्मन इति प्राप्नोति । छन्दोऽनुशासनलक्षणरहितं पदे यथा—'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः' इति शिखरिणीछन्दसि षष्ठे यतिर्या नियता सा नास्ति । वाक्ये यथा—'अपि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्' । अत्र वैतालीयसमपादे षड्लघवो निरन्तरा न स्युः । अयं च सर्वः प्रपञ्चः श्रीवाग्भटाभिधानस्वोपज्ञच्छन्दोनुशासने प्रपञ्चित इति नात्रोच्यते ॥

अनुकरणे न दोषः ।

'नृपाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटोऽबलायाः । सोपानपङ्क्त्यां पतितः करोति ठंठंठठंठंठठठंठठंठः ॥'

व्रीडाव्यञ्जकममङ्गलव्यञ्जकं जुगुप्साव्यञ्जकं चेति त्रिधाश्लीलम् ।

तत्र त्रीण्यनुक्रमेण पदे यथा—'मनीषिताः सन्ति गृहेऽपि देवतास्तपः क्व वत्से क्व च तावकं वपुः । पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥' 'दग्धोत्तीर्णसुवर्णवर्णरुचिरच्छायं वसानोऽम्बरं भास्वत्कौस्तुभकान्तिकर्बुरतरभ्राजिष्णु वक्षःस्थलम् । शङ्खं चक्रमसिं गदामविरतं बिभ्रच्चतुर्भिः करैरारूढो गरुडं नवीनजलदश्यामो हरिः पातु वः ॥' 'प्रासादानामुपरि वलभीजालवातायनेषु भ्रान्त्यावृत्तः परिणतसुरागन्धसंभारगर्भः । माल्यामोदी मुहुरुपचितः स्फारकर्पूरवासो वायुर्यूनामभिमतवधूसंनिधानं व्यनक्ति ॥' अत्र पेलवदग्धवायुशब्दाः क्रमेण व्रीडामङ्गलजुगुप्साव्यञ्जकाः । त्रीण्यप्यनुक्रमेण वाक्ये यथा—'भूपतेरुपसर्पन्ती कम्पना वामलोचना । तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥' 'पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे । भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥' 'ये विमुच्यापि वाञ्छन्ति भोगाञ्जैनव्रतस्थिताः । छर्दितं ते समश्नन्ति विष्ठामपि कुबुद्धयः ॥' अत्रोपसर्पणप्रहणनमोहनशब्दास्तथा पितृवसतिपावकाशेषितशल्यशब्दाश्छर्दितविष्ठादिशब्दाश्च व्रीडामङ्गलजुगुप्साव्यञ्जकाः ॥

शान्तविदूषकाद्युक्तौ न दोषः ।

शान्तोक्तौ यथा—'उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे । क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥' एवमन्यदपि ॥

कविभिरनादृतत्वादप्रयुक्तम् ।

यथा—'शीते चोष्णपटी न चाग्निशकटी नापि द्वितीयापटी जीर्णा पर्णकुटी न तन्दु-

लपुटी भूमौ च घृष्टा कटी। वृत्तिर्नारभटी प्रिया न गुमुटी सौख्यं न चैका घटी भूयाद्भूप तव प्रसादकरटी भङ्गं ममापत्तटी॥' अत्र गुमुटीति देश्यत्वादप्रयुक्तम्। यदाह—'प्रकृतिप्रत्ययमूला व्युत्पत्तिर्यस्य नास्ति देश्यस्य। तन्मडहादिकथंचिन्न रूढिरिति संस्कृते रचयेत्॥' वाक्ये यथा—'धत्ते तेजोभिराधिक्यं दैवतोऽयं सहस्रगुः'। अत्र दैवतशब्दः पुंलिङ्गे कथितोऽप्यप्रयुक्तः। सहस्रगुरित्यादित्य इत्यपि अप्रयुक्तम्॥

देश्यानां प्राकृताद्युक्तौ मुग्धोक्तौ च न दोषः।

तत्र प्राकृते यथा—'जुन्हा ऊरिय को सकंति धवले सव्वंगगंधुक्कडे णिव्विग्घं घरदीहियासु सरसं बेंबंत ओमासलम्। आसाए इसुमंजुगुंजियरवो तिंगिंछिपाणासवं उम्मिल्लन्तदलावलीपरिगऊ चंदुज्जए छप्पउ॥' अत्र तिंगिंछि मकरन्द इति देश्यः। मुग्धोक्तौ यथा—'देव स्वस्ति वयं द्विजास्तत इतः स्नानेन निष्कल्मषाः कालिन्दीसुरसिन्धुसङ्गपयसि स्नातुं समीहामहे। तद्याचेमहि सप्तविष्टपशुचीभावैकतानव्रतं संयच्छस्व यशः सितासितपयोभेदाद्विवेकोऽस्तु नः॥' अत्र स्वस्तीति मुग्धस्यैव ब्राह्मणस्योक्तौ न दोषः॥

श्लेषे चाप्रयुक्तमपि प्रयोक्तव्यं न दोषः।

यथा—'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो यश्चोद्वृत्तभुजंगहारवलयो गङ्गां च योऽधारयत्। यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदोमाधवः॥'

तदर्थप्रतिपादनाक्षममसमर्थम्।

तत्पदे यथा—'राजेन्द्र भवतः कीर्तिश्चतुरो हन्ति वारिधीन्'। अत्र हन्तीति पदं गमनार्थे पठितमपि प्रतिपादनायासमर्थम्। वाक्ये यथा—'नशां हत्वा वस्त्रं धावतीति'। अत्र हन्तिशब्दो व्याख्यातः। धावतीति शुद्ध्यर्थे पठितमपि तत्प्रतिपादनायासमर्थम्॥

अनौचित्येन प्रयुक्तमनुचितार्थम्।

पदे यथा—'यः प्राप निर्वृतिं क्लेशाननुभूय भवार्णवे। तस्मै विश्वैकमित्राय त्रिधा नाभिभुवे नमः॥' अत्र क्लेशाननुभूयेति जिनपतिं प्रत्यनुचितम्। वाक्ये यथा—'सा जयइ कूडवरडो सिद्धनरिंदो धराइसयला। इच्छित्तणरायवंसे एकच्छत्तं कयं जेण॥'

तच्च निन्दायां प्रोत्साहने च न दुष्टम्।

यथा—'चतुरसखीजनवचनैरतिवाहितवासरा विनोदेन। निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः॥' प्रोत्साहने यथा—'विशन्तु वृष्णयः सर्वे रुद्रा इव महौजसः॥'

पुरुषवर्णं (यथा) श्रुतिकटु।

पदे यथा—'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्। नवरसरुचिरां निर्वृतिमादधती भारती कवेर्जयति॥' अत्र ह्लादेति श्रुतिकटु। वाक्ये यथा—'व्यग्रैरप्यग्रहेन्दुप्रसनगुरुभरैर्नो समग्रैरुदग्रैः प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन्गाम्।

उद्गाढार्चिर्विलीनामरनगरनगं ग्रावगर्भामिवाह्नामग्रेऽग्रे यो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ॥'

वीररौद्रबीभत्सेषु सिंहादिवर्णनेषु च विशेषतो गुणः ।

तत्र वीररौद्रबीभत्सानामुदाहरणं रसाध्याये । सिंहादिवर्णने यथा—'मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारंगा महिषा मदं त्यजत रे शून्येषु शूरा न के । कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः सिंहध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥'

व्यवहितार्थप्रत्ययजनकं क्लिष्टम् ।

पदे यथा—'मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा । तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ॥' वाक्ये यथा—'मानसौकःपतद्यानदेवासनविलोचनः । तमोरिपुविपक्षारिः प्रियं दिशतु वो जिनः ॥'

झगित्यर्थार्पकत्वे गुणः ।

[यथा—] 'एतावता नन्वनुमेयशोभि काञ्चीगुणस्थानमनिन्दितायाः । आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥' अत्र काञ्चीगुणस्थानं जघनमिति प्रसिद्धम् ॥

यत्र विधातुमर्होऽशो न प्राधान्येन परामृष्टस्तदविमृष्टविधेयांशम् ।

तत्पदे यथा—'स्रस्तां नितम्बादवलम्बमानां पुनः पुनः केसरपुष्पकाञ्चीम् । न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥' अत्र मौर्वीं द्वितीयामिवेति युक्तम् । वाक्ये यथा—'शय्या शाद्वलमासनं शुचि शिला सद्म द्रुमाणामधः शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः । इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने दुष्प्रापार्थिनि यत्परार्थघटनावध्यैर्वृथा स्थीयते ॥' अत्र शाद्वलं शय्येति विध्यनुवादौ । विधेयौ यथा—'त्वक् तारवी निवसनं मृगचर्म शय्या गेहं गुहा विपुलपत्त्रपुटा घटाश्च । मूलं दलं च कुसुमं च फलं च भोज्यं पुत्रस्य जातमटवीगृहमेधिनस्ते ॥'

विपरीतार्थप्रतिभासकं विरुद्धबुद्धिकृत् ।

यथा—'चतुर्मुखमुखाम्भोजवनहंसवधूर्मम । मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥' अत्र मम वधूरिति विरुद्धां बुद्धिं जनयति । वाक्ये यथा—'अनुत्तमानुभावस्य परैरपिहितौजसः । अकार्यसुहृदोऽस्माकमपूर्वाश्चित्तवृत्तयः ॥' अत्रापकृष्टच्छादितमकार्येषु मित्रमपूर्वो यासां ता अकीर्तय इति विरुद्धां बुद्धिमुत्पादयति ॥

लक्षितोऽर्थो यत्र ज्ञायते तन्नेयार्थम् ।

पदे यथा—'नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामप्युषां जागरित्वा । अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥' अत्र हस्तशब्देन करा लक्ष्यन्ते । तेन च किरणा इति नेयार्थत्वम् । वाक्ये यथा—'सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना । विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजि-

ताजितम् ॥' अत्र पङ्क्तिविहंगमनामभृद्दशरथः । उलूकः कौशिकस्तेन चेन्द्रशब्दो लक्ष्यते । इन्द्रजितेत्यर्थः ॥

उभयार्थवाचकमप्यप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थम् ।

पदे यथा—'यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन । मुग्धा साध्वसतरला विलोक्य परिरभ्य चुम्बिता सहसा ॥' अत्र शोणितशब्दो रुधिरे प्रसिद्धः। वाक्ये यथा—'सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः । अब्जरुचिभास्वरस्ते भातितरामवनिपः श्लोकः ॥' सायकशब्दः खड्गपर्यायः शरे प्रसिद्धः। मकरध्वजशब्दो जलधिपर्यायः कन्दर्पे प्रसिद्धः । क्षमाशब्दो भूपर्यायः क्षान्तौ प्रसिद्धः । अब्जशब्दश्चन्द्रपर्यायः पद्मे प्रसिद्धः । श्लोकशब्दः कीर्तिपर्यायोऽनुष्टुभि प्रसिद्धः ॥

अप्रतीतमागमादेव प्रसिद्धम् ।

पदे यथा—'भान्ति धर्मगजालानस्तम्भविभ्रमकारिणः । चतसृष्वपि काष्ठासु मानस्तम्भा महोच्छ्र्याः ॥' अत्र मानस्तम्भशब्दो जैनागमे प्रसिद्धः । वाक्ये यथा—'पञ्चाणुव्रतानि गुणास्त्रयः शिक्षाव्रतानि च । चत्वारि स्युर्गृहस्थानां शुद्धसंपत्कयोगतः ॥' अत्राणुव्रतादीनि जैनागमे प्रसिद्धानि । असौ तु स्वदर्शनोक्तौ विशेषतो गुणः ॥

ग्राम्यमविदग्धजनोक्तिः ।

पदे यथा—'राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा कटिश्च हरते मनः ॥' अत्र कटिरिति ग्राम्यम् । वाक्ये यथा—'ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानवः । करोति खादनं पानं सदैव तु यथा तथा ॥'

तच्च विदूषकमुग्धादिजल्पिते विशेषतो रम्यम् ।

यथा—'फुल्लुक्करं कलमकूरसमं वहंति जे सिंदुवारविडवा मह वल्लहा दे । ये गालिदस्स महिसीदहिणो सरिच्छा ते किं च मुद्धवियइल्लपसूणपुंजा ॥'

अन्यार्थप्रतिभासनेन [यत्] संशयकृत्तत्संदिग्धम् ।

पदे यथा—'न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः । ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥' अत्र 'संयतशब्दो बद्धपर्यायः, उत संयमितपर्यायः' इति संदिग्धम् । वाक्ये यथा—'सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः । मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥' अत्र सुरालयकम्पनमार्गणभूतिशब्दाः संदिग्धाः । वक्रोक्तौ गुणः । यथा—'अभिधाय तथा तदप्रियं शिशुपालोऽनुशये परं गतः । भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥' अत्रानुशयः कोपः, पश्चात्तापश्च ।

---

१. कर्पूरमञ्जर्यामेकोनविंशस्यास्य च्छाया यथा—'पुष्पोत्करं कलमकूरसमं वहन्ति ये सिन्दुवारविटपा मम वल्लभास्ते। ये गालितस्य महिषीदध्नः सदृक्षास्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥'.

अभिमना निर्भीकमनाः, उत्कण्ठितश्च । सरुषः सरोषस्य स शिशुपालो रुषो माननामिति च ॥

इष्टार्थप्रतिपादनाक्षममवाचकम् ।

पदे यथा—'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरहंसः । भर्तुर्नृत्यानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥' अत्र दधदित्यर्थे विदधदित्यवाचकम् । विपूर्वो हि दधातिः करोत्यर्थे वर्तते । यदाह—'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' । यथा च—'उद्गर्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः सर्वाः पर्वतकन्दरोदरभुवः कुर्वन्प्रतिध्वानिनीः । उच्चैरुच्चरतिध्वनिः श्रुतिपथोन्माथी यथायं तथा प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति ॥' अत्र ध्वनिशब्दो गीतादौ प्रसिद्धः । समुद्रे तु गर्जितमेव । यदाह—'ध्वनितं मृदङ्गादिषु, गर्जितं मेघसमुद्रादिषु, रणितं वलयादिषु, क्वणितं वीणादिषु, शिञ्जितं नूपुरादिषु, मणितं सुरतादिषु, कूजितं विहंगादिषु, बृंहितं वारणेषु, हेषितं हयेषु, आरवः पटहेषु, ढेक्कृतं वृषभेषु, रवो मण्डूकेषु, नादः सिंहेषु, फूत्कारः सर्पेषु, बूत्कारः कपिषु, घूत्कारो घूकेषु, चटत्कारोऽग्निस्फुलिङ्गेषु, कटत्कारो भङ्गेषु, सूत्कारः सायकेषु, गुञ्जाकारो भृङ्गेषु, घमघमारवो घर्घरेषु, भाङ्कारो भेरीषु, केकारवः कलापिषु, सीत्कारः कामिनीषु, झङ्कारः किङ्किणीषु, टङ्कारो मौर्वीषु, भात्कारो झल्लरीषु, घोषो नदीवीचिषु, प्रसिद्धो नान्यत्र । तद्यथा प्रसिद्धं तत्तथैव बध्नीयात् । अन्यथा त्ववाचकत्वदोषः । वाक्ये यथा—'विभजन्ते न ये भूपमालभन्ते न ते श्रियम् । आवहन्ते न ते दुःखं प्रस्मरन्ति न ये प्रियाम् ॥' अत्र विपूर्वो भजिर्विभागे, न सेवने । आङ्पूर्वो लभिर्विनाशे, न प्रापणे । आङ्पूर्वो वहिः करोत्यर्थे, न धारणे । प्रपूर्वः स्मरतिर्विस्मरणेऽर्थे, न तु स्मरणे इति ॥

न्यूनपदाधिकपदोक्तपदास्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्ताविसर्गसंकीर्णगर्भितभग्नप्रक्रमानन्वितार्थान्तरैकवाचकाभवन्मतयो योगादयो वाक्यदोषाः।

तत्र—

विश्लेषेऽश्लीलत्वे कष्टत्वे च संधिवैरूप्यं विसंधिः ।[1]

विश्लेषे यथा—'राजन् विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलान्तः । धीदोर्बले अतितते उचितार्थवृत्ती आतन्वती विजयसंपदमत्र भातः ॥' अश्लीलत्वे यथा—'विरेचकमिदं नृत्तमाचार्याभासयोजितम् । चकाशे पनसप्रायैः पुरी षण्डमहाद्रुमैः ॥' अत्र विरेचकशेपपुरीषशब्दा अश्लीलाः । कष्टत्वे यथा—'उर्व्यसावत्र तर्वालीमर्वन्ते चार्ववस्थितिः । नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥'

१. 'विसंधि' इति पाठ आदौ त्रुटितो भवेत्.

अवश्यवाच्यस्यानभिधाने न्यूनपदम्।

यथा—'अन्येषु जन्तुषु रजस्तमसावृतेषु विश्वस्य धातरि समः परमेश्वरेऽपि। सोऽयं प्रसिद्धविभवः खलु चित्तजन्मा मा लज्जया तव कथंचिदपह्नुतिर्भूत्॥' विश्वस्य धातरीत्यत्र चशब्दो युज्यते। स नास्तीति न्यूनपदत्वम्। 'परमेश्वरे च' इति तु पाठे युक्तम्। तथात्रैव 'मा लज्जया तव कथंचिदपह्नुतिर्भूत्' इत्यत्र स्वाभिप्रायस्येति न्यूनम्॥

विक्लवाद्युक्तौ न दोषः।

यथा—'गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा। मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं नु मृता नु किं मनसि मे लीना विलीनाथवा॥'

तद्विनाप्यर्थावगमेऽधिकपदम्।

'दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम्। वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम॥' अत्र भजिः सशब्दो युजिश्चाधिकः। एतद्विनाप्यर्थावगतेः। यथा च—'बिसकिसलयच्छेदपाथेयवन्तः'। अत्र 'मत्वर्थीयाद्वरं बहुव्रीहिः' इति मत्वर्थीयोऽधिकः। पाथेया इति तु युक्तम्॥

एकस्य पदस्य द्विस्त्रिरभिधानमुक्तपदम्।

'नैकं पदं द्विः प्रयुञ्जीत' इति कविसमयः। 'सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः शूराणां व्यवसाय एव हि परं संसिद्धये कारणम्। उद्गर्जद्विकटाटवीगजघटापीठैकसंचूर्णनव्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः॥' अत्रैकशब्दः॥

लाटानुप्रासे गृहीतमुक्तके विहितानुवादे च गुणः।

तत्र लाटानुप्रासे यथा—'चोलः क्रोधं पयोधेर्विशति निविशते रन्ध्रमान्ध्रो गिरीणां कर्णाटः पट्टबन्धं भजति न भजते गुर्जरो निर्भराणि। चेदिर्लीलायतेऽसौ क्षितिपतितिलकः कान्यकुब्जः सुकुब्जो भोज त्वत्तन्त्रमात्रप्रसररसभयव्याकुलो राजलोकः॥' गृहीतमुक्तके यथा—'जयति क्षुण्णतिमिरस्तिमिरान्धकवल्लभः[1]। वल्लवी(भी)कृतपूर्वाशः पूर्वाशातिलको रविः॥' विहितानुवादे यथा—'निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसा निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति। निर्विण्णः शुचमेति शोकविकलो बुद्ध्या परिभ्रश्यते निर्बुद्धिः क्षयमेत्यहो विधनता सर्वापदामास्पदम्॥'

असंबद्धपदन्यासोऽस्थानपदम्।

यथा—'मा भाङ्क्षीर्विभ्रमं भ्रूरधरविधुरता केयमस्यास्य रागं प्राणे प्राण्येव नायं कलयसि कलहं श्रद्धया किं त्रिशूलम्। इत्युद्यत्कोपकेतून्प्रकृतिमवयवान्प्रापयन्त्येव देव्या न्यस्तो वो मूर्ध्नि मुख्यान्मरुदसुहृदसून्संहरन्नङ्घ्रिरंहः॥' अत्र 'वः' इति पदं 'मूर्ध्नि' इतिपदसां-

---

१. तिमिरेऽन्धका अन्धास्तेषां वल्लभः.

निध्यादस्थाने पतितम् । यथा च—'सरभसपरिरम्भारम्भसंरम्भभाजा यदधिनिशमपास्तं वल्लभेनाङ्गनायाः । वसनमपि निशान्ते नेष्यते तत्प्रदातुं रथचरणविशालश्रोणिलोलेक्षणेन ॥' अत्र 'वसनम्' इति पदं पूर्वार्धमतिक्रम्यास्थाने पतितम् । 'नार्धे किंचिदसमाप्तम्' इति कविसमयः । तथा 'अपि निशान्ते' इत्यत्रापि 'निशान्तेऽपि' इति युक्तम् ॥

आनुपूर्व्या हीयमानप्रकर्षं पतत्प्रकर्षम् ।

यथा—'अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः । उद्भिन्नवश्मश्रुश्रेणिरिव गणाधिपो जयति ॥'

समाप्य पुनर्गृहीतं समाप्तपुनरात्तम् ।

यथा—'[1]गाहाण रसा महिलाण बिब्भमा कइप(व)राण वयणाइं । कस्स न हरन्ति हिअअं बालाण य मम्मणुल्लावा ॥' अत्र 'बालाण य मम्मणुल्लावा' इति पदं संधितपुच्छप्रायं न स्वदते ॥

विसर्गस्याभावोऽविसर्गत्वम् ।

यथा—'धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः । यस्य भृत्या बलोत्सिक्ता भक्ता [2]बुद्धिप्रदायिनः ॥' अत्रोत्वेन लोपेन च विसर्गाभावः ॥

वाक्यान्तरपदैरनुविद्धं संकीर्णम् ।

यथा—'[3]कायं खायइ छुहिड कूरं क्खल्लोइ निट्ठुरं रुट्ठो । सुणयं गिण्हइ कण्ठे हक्केइ अनत्ति यंथेरो ॥' अत्र 'काकं क्षिपति, कूरं खादति, श्वानं भेषयति, नप्तारं कण्ठे गृह्णाति' इति वक्तुमुचितम् ॥

उक्तिप्रत्युक्तौ गुणः ।

यथा—'कोऽयं नाथ जिनो भवेत्तव वशी उंहुं प्रतापी प्रिये हुंहुं तर्हि विमुञ्च कातरमते शौर्यावलेपक्रियाम् । मोहोऽनेन विनिर्जितः प्रभुरसौ तत्किंकराः के वयं(?) इत्येवं रतिकामजल्पविषयः सोऽयं जिनः पातु वः ॥'

वाक्यान्तरानुप्रवेशो गर्भितम् ।

यथा—'मार्गे कर्दमदुस्तरे जलभृते गर्ता(?)शतैराकुले खिन्ने शाकटिके भरेऽतिनिभृते दूरोद्धुरे रोधसि । शब्दैनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनीमीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को भरम् ॥' अत्र तृतीयः पादोऽन्य इव प्रविष्टो लक्ष्यते ॥

प्रक्रमभङ्गो भग्नप्रक्रमत्वम् ।

---

१. 'गाथानां रसा महिलानां विभ्रमाः कविवराणां वचनानि । कस्य न हरन्ति हृदयं बालानां च मन्मनोल्लापाः ॥' इति च्छाया. २. 'बुद्धिप्रभान्विताः' इति काव्यप्रदीपे. ३. 'काकं खादति क्षिपति कूरं भाषयति निष्ठुरं रुष्टः । शुनकं गृह्णाति कण्ठे आकारयति ..................॥' इति च्छाया.

यथा—'बभूव भस्मैव कृताङ्गरागः कपालमेवामलशेखरश्रीः । उपान्तभागेषु च रोचनाङ्कः सिंहाजिनस्यैव दुकूलभावः ॥' अत्र 'मृगेन्द्रचर्मैव दुकूलमस्य' इति युक्तम्। यथा—'ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम् । सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥' अत्र 'अनेन विसृष्टाः' इति युक्तम् । यथा च—'पाश्चात्यभागमिह सानुषु संनिषण्णाः पश्यन्ति शान्तमलसान्द्रतरांशुजालम् । संपूर्णलब्धललनाललनोपमानमुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेः ॥' अत्र 'उत्सङ्गसंगतमृगस्य मृगाङ्कमूर्तेः' इति युक्तम् ॥

अघटमानसंबन्धोऽनन्वितम् ।

यथा—'प्रज्ञापुञ्जमयाज्ञानं राधा वेधस्य कारणम् । धाराया विपरीतस्य नूनं न क्षमते प्रभुः ॥' अत्र वैपरीत्यं शब्दकृतम्, उतार्थकृतमित्यनन्वयः ॥

द्वयोरपि वाक्ययोः संबद्धमर्थान्तरैकवाचकम् ।

यथा—'उदयमहिमरश्मिर्याति शीतांशुरस्तम्।' अत्र 'याति' इति पदमुभयत्रापि संबध्यते॥

यत्र नेष्टसंबन्धप्रतिपत्तिस्तदभवन्मतयोगम् ।

यथा—'चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः । अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥' अत्र भार्गवस्य निन्दा तात्पर्यम् । कृतवतेति परशौ प्रतीयते । कृतवत इति तु युक्तम् ॥

कष्टापुष्टव्याहतग्राम्याश्लीलसाकाङ्क्षसंदिग्धाक्रमपुनरुक्तभिन्नसहचरविरुद्धव्यङ्ग्यप्रसिद्धिविरुद्धविद्याविरुद्धनिर्हेतवोऽर्थदोषाः ।

तत्र—

दुरवबोधः कष्टः ।

यथा—'शूलं तूलं तु गाढं प्रहर हर हृषीकेश केशोऽपि वक्रश्चक्रेणाकारि किं ते पविरवति न हि त्वाष्ट्रशत्रोर्युराष्ट्रम् । पाशाकेशोऽब्जनालान्यनल न लभसे भातुमित्यात्तदर्पो जल्पन्देवान्दिवौको रिपुरवधि यया सास्तु शान्त्यै शिवा वः ॥'

प्रकृतानुपयोग्यपुष्टः ।

यथा—'अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् । परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥' अत्र वर्णसावर्ण्यमेव, न वाच्यवैचित्र्यकणिकापि काचिदस्तीत्यपुष्टार्थम् ॥

पूर्वापरप्रतिबन्धो व्याहतत्वम् ।

यथा—'जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिसुभगाः सन्त्येवान्ये मनो

---

१. "अत्र 'अस्मै' इतीदमा प्रक्रमात् 'तद्विसृष्टाः' इत्यत्रापि 'अनेन विसृष्टाः' इत्येव वाच्यम्" इति काव्यप्रदीपे.

मदयन्ति ये। मम तु यदियं जाता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः ॥' अत्र नवेन्दुकलादयो भावा यं प्रति न किंचिदिव, स एवोत्कर्षार्थं चन्द्रिकात्वमारोपयतीति व्याहतत्वम् ॥

अविदग्धजनोचितं ग्राम्यम्।

यथा—'छादयित्वा सुरान्पुष्पैः पुरो धान्यं क्षिपाम्यहम्।'

व्रीडाव्यञ्जकोऽश्लीलः।

यथा—'तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः। नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥' अत्र मध्यमणिशब्देनाश्लीलं व्यज्यते ॥

अवश्यवाच्यार्थहीनः साकाङ्क्षः।

यथा—'अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया। उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥' अत्र स्त्रीरत्नं परस्येत्याकाङ्क्ष्यते ॥

उभयार्थप्रतिपत्तिकृत्संदिग्धम्।

यथा—'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु। सेव्या नितम्बाः किल भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥' अत्र कारणाद्यभावे संदेहः ॥

क्रमपरिहाराद्यक्रमः।

तुरङ्गं मातङ्गं वा मे प्रयच्छ। रूपकं विंशोपकं वा गृहाण। भुक्त्वा स्नात्वा च देवानर्चति। साहित्यं लक्षणं चाधीते। शतेनाधिका विंशतिः। सचापं बाणमादत्ते। वैश्यादयो वर्णाः ॥

कारणव्यतिरेकेण पुनरभिधानं पुनरुक्तम्।

यथा—'तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः। दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥' अत्रेन्दुरिति पुनरुक्तम् ॥

कारणोक्तौ तु गुणः।

यथा—'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा। कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥' अत्र—'अहं कुसुमायुधः, हरस्तु पिनाकपाणिः, तथापि धैर्यच्युतिं करिष्यामि' इति विशेषोक्तौ गुणः ॥

---

१. "अत्र 'स्त्रीरत्नम्' इत्यर्थः 'उपेक्षितुम्' इत्यस्यार्थमाकाङ्क्षति। अन्यथा 'कथं मृष्यते' इत्यनेनामर्षार्थकेनान्वयाप्रसङ्गः। नहि स्त्रीरत्नमेवामर्षः, किंतु तदुपेक्षायाम्। न च 'परस्य' इत्येतदन्तर्भाव्य तदन्वयोऽस्त्विति वाच्यम्। तस्य जनितान्वयबोधत्वेन निराकाङ्क्षत्वात्" इत्यादि काव्यप्रदीपे. २. 'सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः। मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥' इति काव्यप्रदीपोदाहरणमेव युक्तं प्रतिभाति.

उचितसहचारिभेदो भिन्नसहचरत्वम् ।

यथा—'श्रुतेन बुद्धिर्व्यसनेन मूर्खता प्रियेण नारी सलिलेन निम्नगा । निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥' अत्र श्रुतबुद्ध्यादिभिरुत्कृष्टैः सह व्यसनमूर्खत्वयोर्निकृष्टयोरुक्तिः ॥

विरुद्धार्थप्रतिभासकं विरुद्धव्यङ्ग्यम् ।

यथा—'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभे कः प्राणान्रणमखमुखे यं मृगयसे । सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥' अत्र तस्या अनेककामोऽभिलाषो ध्वन्यते ॥

अन्यथा वर्णनात्प्रसिद्धिविरुद्धम् ।

यथा—'येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया नीता येन निशा शशाङ्कधवला पद्मोदरे शारदी । भ्रान्तं येन मदप्रवाहमलिने गण्डस्थले दन्तिनां सोऽयं भृङ्गयुवा करीरविटपे बध्नाति तुष्टिं कुतः ॥' अत्र शशाङ्कोदये पद्मविकाशोऽप्रसिद्धः ॥

शास्त्रोक्तविपर्यासे विद्याविरुद्धः ।

यथा—'मृगीदृशः पल्लवरागकोमलो विभाति दन्तव्रणमुत्तराधरे ।' अत्र व्रणमधराधर एव कामशास्त्रे विहितं नोत्तराधरे ॥

अहेतूक्तौ निर्हेतुः ।

यथा—'चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्तानक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः । रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥' अत्र किमर्थं चक्री चक्रारपङ्क्तिमेव स्तवीतीति हेतुर्नोक्तः ॥

लोकप्रसिद्धौ तु न दोषः ।

यथा—'चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् । उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥' अत्र रात्रौ पद्मस्य संकोचः । दिवा चन्द्रमसो निष्प्रभत्वं च लोके प्रसिद्धम् इति हेतुं नापेक्षते । परिवृत्तनियमानियमसामान्यविशेषविध्यनुवादादयः काव्यप्रकाशादावुक्ता अपि पूर्वोक्तेष्वेवान्तर्भवतीत्यस्माभिर्नोक्ताः ॥

दोषानभिधाय गुणानाह—

कान्तिसौकुमार्यश्लेषार्थव्यक्तिसमाधिसमतौदार्यमाधुर्यौजःप्रसादा दश गुणाः ।

तत्र—

लौकिकार्थानतिक्रमेणौज्ज्वल्यं कान्तिः ।

---

१. 'मदेन' इति काव्यप्रदीपे.

यथा—'सजलनिबिडवस्त्रव्यक्तनिम्नोन्नताभिः परिगततटभूमिस्नानमात्रोच्छ्रिताभिः । रुचिरकनककुम्भश्रीमदाभोगतुङ्गस्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥'

अकाठिन्यं सौकुमार्यम् ।

यथा—'जिनवरगृहे कौन्तेयस्य प्रतिक्षणदाक्षणं चतुरतरुणीगीतैर्गीतैः समाहृतमानसा । इह हि हरिणी मन्दं मन्दं प्रयाति नभःपथे समजनि मृगीनेत्रा रात्रिस्ततोऽतिगरीयसी ॥'

यत्र पदानि परस्परस्फूर्तानीव, स श्लेषः ।

यथा—'जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः । सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥'

यत्र सुखेनार्थप्रतीतिः सार्थव्यक्तिः ।

यथा—'बाले तिलकलेखेयं भाले भल्लीव राजते । भ्रूलताचापमाकृष्य न विद्मः कं हनिष्यति ॥'

अन्यस्य धर्मो यत्रान्यत्रारोप्यते स समाधिः ।

यथा—'रिपुषु सहजतेजःपुञ्जलीलायितैस्तैरजनि जनितकम्पस्तत्सुतो भूमिभर्ता । प्रतिनृपतिवधूनां पल्लविन्यश्रुपूरैरधिवियदधिरूढा कीर्तिवल्लिर्यदीया ॥'

अविषमबन्धत्वं समता ।

यथा—'मसृणचरणपातं गम्यतां भूः सदर्भा विरचयसि च यान्तं मूर्ध्नि घर्मः कठोरः । तदिति जनकपुत्रीलोचनैरश्रुपूर्णैः पथि पथिकवधूभिः शिक्षिता वीक्षिता च ॥'

विकटबन्धत्वमौदार्यम् ।

यथा—'वाचाला कनकमयध्वजाग्रसङ्गिव्यालोलस्फुरदुरुकिङ्किणीनिनादैः । चैत्याली जगति न कस्य राहडस्य प्रेङ्खन्ती भवति मनःप्रहर्षणायम् ॥'

यत्रानन्दममन्दं मनो द्रवति, तन्माधुर्यम् । शृङ्गारशान्तकरुणेषु क्रमेणाधिक्य(क)म् ।

शृङ्गारे यथा—'प्रियतमावदनेन्दुविलोकितैरसुहितः कलकण्ठयुवा नवः । प्रतिमुहुः प्रतिगत्य नभस्तलाद्वलति याति चलत्यथ यात्यथ ॥' शान्ते यथा—'यैः शान्तरागरुचिभिः परमाणुभिस्त्वं निर्मापितस्त्रिभुवनैकललामभूतः । तावन्त एव खलु तेऽप्यणवः पृथिव्यां यत्ते समानमपरं न हि रूपमस्ति ॥' करुणे यथा—'गृहिणीसचिवः सखा मिथः प्रियशिष्याललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वं वद किं न मे हृतम् ॥'

दीप्तिहेतुरोजः । वीरबीभत्सरौद्रेषु क्रमेण विशेषतो रम्यम् ।

तत्र वीरे यथा—'शैलोत्तुङ्गतरङ्गवेगगमनप्रोत्कम्पमानात्वनिस्तम्बक्षोभितभैरवार्णवभवत्कल्पान्तकालभ्रमम् । क्रोधान्धाः खरदूषणत्रिशिरसः प्राप्तास्त एव द्रुतं ब्रूत ब्रूत भटाः

क्क स क्क स नरः शम्बूकजीवाहरः ॥' बीभत्से यथा—'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा । आत्तस्नाय्वन्त्रनेत्रात्प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥' रौद्रे यथा—'चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य । स्त्यानावबद्धघनशोणितशोणशोचिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥'

झगित्यर्थार्पणेन चेतोविकासजनकः सर्वरसरचनात्मकः प्रसादः ।

यथा—'पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः । लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥' इति । इति दण्डिवामनवाग्भटादिप्रणीता दश काव्यगुणाः । वयं तु माधुर्यौजःप्रसादलक्षणांस्त्रीनेव गुणान्मन्यामहे । शेषास्तेष्वेवान्तर्भवन्ति । तद्यथा—माधुर्ये कान्तिः सौकुमार्यं च, ओजसि श्लेषः समाधिरुदारता च, प्रसादेऽर्थव्यक्तिः समता चान्तर्भवति । यदाह—'माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश । केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ॥ अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥'

माधुर्यगुणोपयुक्ता वैदर्भी रीतिः । अस्यां च प्रायेण कोमलो बन्धोऽसमासः, टवर्गरहिता निजपञ्चमाक्रान्ता वर्गाः, रणौ ह्रस्वान्तरितौ च प्रयोज्यौ ।

तत्र कोमलबन्धो यथा—'अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन । यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥' असमासो यथा—'अमीभिः संसक्तैस्तव किमु फलं वारिद घटेयदेतेऽपेक्षन्ते सलिलमवटेभ्योऽपि तरवः । अयं युक्तो व्यक्तं न तु सुखयितुं चातकपशुर्य एष ग्रीष्मेऽपि स्पृहयति न पाथस्त्वदपरान् ॥' निजपञ्चमाक्रान्ता वर्गा यथा—'शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः । कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः ॥' ह्रस्वान्तरितौ रणौ यथा—'दारुणरणे रणन्तं करिदारणकारणं कृपाणं ते । रमणकृते रणरणकी पश्यति रमणीजनो दिव्यः ॥' 'टवर्गरहिताः' इति वचनाट्टवर्गो न कार्यः । यथा—'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठिनाम् । कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥'

ओजोगुणयुक्ता गौडीया रीतिः । अस्यां च बन्धौद्धत्यं समासदैर्घ्यं संयुक्तवर्णत्वं प्रथमतृतीयाक्रान्तौ द्वितीयचतुर्थौ युक्तौ रेफश्च कार्यः ।

यथा—'दंष्ट्रालः स्फुटकुन्दकुड्मलशतैर्जिह्वाल उल्लासिभिः किं किल्लिद्रुमपल्लवैः शितमुखैः प्रेङ्खन्नखः किंशुकैः । वल्लीजालविशालबालधिरसावत्रोजयन्ताचलो बन्धूकोद्धतलोचनः प्रकुरुते शार्दूलविक्रीडितम् ॥' यथा च—'मूर्धामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधाराधौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् । कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां दोष्णां चैषामिदं तत्फलमिह नगरीरक्षणे यत्प्रयासः ॥'

प्रसादगुणयुक्ता पाञ्चाली । अत्र सुश्लिष्टो बन्धः प्रसिद्धानि च पदानि ।

'निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वणशशाङ्क । सुचिरं हन्त न सहते हतविधिरिह सुस्थिरं किमपि ॥' एताश्चोपनागरिका परुषा कोमलेति केचिदाहुः । यदाह—'माधुर्यव्यञ्जकैः शब्दैरुपनागरिकेष्यते । ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ॥ केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ॥'

इति महाकविश्रीवाग्भटविरचितायामलंकारतिलकाभिधानस्वोपज्ञकाव्यानुशासनवृत्तौ दोषगुणविवेचनो नाम द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

अलंकाराः खलु द्विविधाः । शब्दालंकारा अर्थालंकाराश्च ।

तत्र तावदर्थमधिकृत्य शब्दः प्रवर्ततेऽतः प्रथममर्थालंकारा एवोदाह्रियन्ते । तद्यथा—जात्युपमोत्प्रेक्षारूपकदीपकान्योक्तिसमासोक्त्यप्रस्तुतप्रशंसापर्यायोक्त्यतिशयोक्तिसहोक्त्याक्षेपविरोधार्थान्तरन्यासव्याजस्तुतिव्यतिरेकससंदेहापह्नुतिपरिवृत्त्यनुमानस्मृतिभ्रान्तिविषमसमसमुच्चयान्यापरपरिसंख्याकारणमालानिदर्शनैकावलीयथासंख्यपरिकरोदात्तसमाहितविभावनान्योन्यमीलितविशेषपूर्वहेतुसारसूक्ष्मलेशप्रतीपपिहितव्याघातासंगतिहेतुश्लेषमतोत्तरोभयन्यासभावपर्यायव्याजोक्त्यधिकप्रत्यनीकानन्वयतद्गुणातद्गुणसंकरा आशीःप्रभृतयोऽर्थालंकाराः ।

तद्यथा(तत्र)—

यथास्थितवस्तुस्वरूपवर्णनमग्राम्यं जातिः । सा च त्रस्तार्भकदीनतिर्यग्युवतिप्रभृतिषु विशेषतो रम्या ।

तत्र त्रस्तस्वरूपं यथा—'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् । दर्भैरर्धावलीढैः श्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥' अर्भकस्वरूपं यथा—'उदयशिखरिशृङ्गप्राङ्गणेष्वेव रिङ्खन्सकमलमुखहासं वीक्षितः पद्मिनीभिः । प्रसृतमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥' दीनस्वरूपं यथा—'बर्हावलीबहलकान्तिरुचो विचित्रभूर्जत्वचारचितचारुदुकूललीलाः । गुञ्जाफलग्रथितहारलताः सहेलं खेलन्ति खेलगतयोऽत्र वने शबर्यः ॥' तिर्यक्स्वरूपं यथा—'मेदस्विनः सरभसापगतानभीकान्भङ्क्त्वा परानडुहो मुहुराहवेण । ऊर्जस्वलेन सुरभीमनुनिःसपत्नं जग्मे जयोद्धुरविशालविषाणमुक्ष्णा ॥' योषित्स्वरूपं यथा—'उत्तालतालीविचलद्वलयावलीकं सद्यः सखीजनविनिर्मितमण्डलीकम् । गायन्ति रासकविधाविह मेदपाटनार्योऽधुनापि तव नेमिकुमार कीर्तिम् ॥'

**चमत्कारि साम्यमुपमा । सा प्रत्ययाव्ययतुल्यार्थसमासैश्चतुर्धा ।**

चमत्कारि सहृदयहृदयहारि उपमानोपमेययोः साम्यमुपमा । यथा—'गत्या विभ्रममन्दया प्रतिपदं या राजहंसीयते यस्याः पूर्णमृगाङ्कमण्डलमिव श्रीमत्सदैवाननम् । यस्याश्चानुकरोति नेत्रयुगलं नीलोत्पलानि श्रिया तां कुन्दाग्रदतीं त्यजञ्जिनपती राजीमतीं पातु वः ॥' चमत्कारीति वचनात् 'कुकुम्भ इव मुखम्' इत्यादौ सादृश्येषूपमा न कार्या । सा प्रत्ययाव्ययतुल्यार्थसमासभेदैश्चतुर्धा भवति ॥

तत्रापिवत्कल्पदेश्यदेशीयप्रभृतयः प्रत्ययाः । अव्ययानि इव वायथाप्रभृतीनि । 'तुल्यार्थास्तुल्यसंकाशाः(श)प्रकाशप्रतिरूपकाः । नीकाशसदृक्सदृशसदृक्षनिभसंनिभाः ॥ प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः । हार्यनुकारिसंवादिसजातीयानुवादिनः ॥ प्रतिबिम्बप्रतिच्छन्दस्वरूपसमसप्रभाः । सलक्षणसमानासाः(भाः) सपक्षोपमितोपमाः ॥ सु-(स)वर्णतुलितौ शब्दौ प्रख्यौ प्रतिनिधी अपि । स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ आक्रोशत्यवजानाति कदर्थयति निन्दति । विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति ॥ तस्य पुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति । तेन सार्धं विगृह्णाति तस्य कक्षां विगाहते ॥ तत्पदव्यां पदं धत्ते तुलां तेनाधिरोहति । तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्य चानुकरोतीति शब्दाः सादृश्यवस्तुनि ॥' समासो बहुव्रीहिप्रभृतिः । यथा—चन्द्रवदनेत्यादि । सा च धर्मवस्तुविपर्यासान्योन्यनियमानियमसमुच्चयातिशयोत्प्रेक्षाद्भुतमोहसंशयनिर्णयश्लेषसमानप्रशंसाचिख्यासाविरोधप्रतिषेधचटुतत्वाख्यानसाधारणभूतासंभावितबहुविक्रियामालावाक्यार्थप्रतिवस्तुतुल्ययोगहेतुरसनोपमादिभेदैरनेकधा भवति । तत्प्रबन्धस्तु दण्डिनो द्रष्टव्यः । इह तु ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च नोच्यते ॥

---

१. 'अम्भोरुहमिवाताम्रं मुग्धे करतलं तव । इति **धर्मोपमा**साक्षात्तुल्यधर्मप्रदर्शनात् ॥ राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव । इति प्रतीपमानैकधर्मा **वस्तूपमैव** सा ॥ तवाननमिवोन्निद्रमरविन्दमभूदिति । सा प्रसिद्धिविपर्यासा**द्विपर्यासोपमे**ष्यते ॥ त्वदाननमिवाम्भोजमम्भोजमिव ते मुखम् । **इत्यन्योन्योपमा** सेयमन्योन्योत्कर्षशंसिनी ॥ त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित् । इत्यन्यसाम्यव्यावृत्तेरियं सा **नियमोपमा** ॥ पद्मं तावत्तवान्वेति मुखमन्यच्च तादृशम् । अस्ति चेदस्तु तत्कारीत्यसाव**नियमोपमा** ॥ **समुच्चयोपमा**प्यस्ति न कान्त्यैव मुखं तव । ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥ त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः । इयत्येव भिदा नान्वेत्यसाव**तिशयोपमा** ॥ मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः । पद्मेऽपि सा यदस्त्येवेत्यसा**वुत्प्रेक्षितोपमा** ॥ यदि किंचिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम् । तत्ते मुखश्रियं धत्तामित्यसा**वद्भुतोपमा** ॥ शशीत्युत्प्रेक्ष्य तन्वाङ्गि त्वन्मुखं त्वन्मुखाशया । इन्दुमप्यनुधावामीत्येषा **मोहोपमा** मता ॥ किं पद्ममन्तर्भ्रान्तेति किं ते नीलेक्षणं मुखम् । मम दोलायते चित्तमितीयं **संशयोपमा** ॥ न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः । अतस्त्वन्मुखमेवेन्दुमित्यसौ

**लिङ्गवचनवैषम्यं हीनाधिक्यं चोपमादोषः ।**

तत्र लिङ्गवचनवैषम्यं यथा—'परमातेव निःस्नेहाः परकार्याणीव शीतलाः । सक्तवो भक्षिता राजन् शुद्धाः कुलवधूरिव ॥' हीनाधिक्यं यथा—'शुनीयं गृहदेवीव प्रत्यक्षा प्रतिभासते । खद्योत इव सर्वत्र प्रतापश्च विराजते ॥'

**अत्यन्तसादृश्यादसतोऽपि धर्मस्य कल्पनमुत्प्रेक्षा । तां चेवमन्येशङ्केध्रुवमित्यादिभिर्द्योतयेत ।**

इव यथा—'दिशतु विरतिलाभानन्तरं पार्श्वसर्पन(?)मिविनमिकृपाणोत्सङ्गदृश्याङ्गलक्ष्मीः । त्रिजगदपगता यत्कर्तुमातान्यरूप(?)द्वय इव भगवान् वः संपदं नाभिसूनुः ॥' मन्ये यथा—'नाभेयचैत्यसदने दिशि दक्षिणस्यां द्वाविंशतिं विदधता जिनमन्दिराणि । मन्ये निजाग्रजवरप्रभुराहडस्य पूर्णीकृतो जगति येन यशःशशाङ्कः ॥' शङ्के यथा—'विर-

---

**निर्णयोपमा** ॥ शिशिरांशुप्रतिद्वन्द्वि श्रीमत्सुरभिगन्धि च । अम्भोजमिव ते वक्त्रमिति **श्लेषोपमा** मता ॥ सरूपशब्दवाच्यत्वात्सा **समानोपमा** यथा । बालेवोद्यानमालेयं सालकाननशोभिनी ॥ पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् । समानमपि सोत्सेकमिति **निन्दोपमा** मता ॥ ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शंभुशिरोधृतः । तौ तुल्यौ त्वन्मुखेनेति सा **प्रशंसोपमे**ष्यते ॥ चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः । स गुणो वास्तु दोषो वे**त्याचिख्यासोपमां** विदुः ॥ शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् । परस्परविरोधीति सा **विरोधोपमा** मता ॥ न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् । कलङ्किनो जडस्येति **प्रतिषेधोपमैव** सा ॥ मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी । तथापि सम एवासौ नोत्कर्षीति **चटूपमा** ॥ न पद्मं मुखमेवेदं भृङ्गौ तु चक्षुषी इमे । इति विस्पष्टसादृश्या**त्तत्त्वाख्यानोपमै**व सा ॥ चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव । आत्मनैवाभवत्तुल्यमि**त्यसाधारणोपमा** ॥ सर्वपद्मप्रभासारः समाहृत इव क्वचित् । त्वदाननं विना भाति ता**मभूतोपमां** विदुः ॥ चन्द्रबिम्बादिव विषं चन्दनादिव पावकः । परुषा वागितो वक्त्रादित्य**संभावितोपमा** ॥ चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः । स्पर्शस्तवेत्यतिशयं प्रथयन्ती **बहूपमा** ॥ चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् । तव तन्वङ्गि वदनमित्यसौ **विक्रियोपमा** ॥ पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः । विक्रमस्त्वय्यधाल्लक्ष्मीमिति **मालोपमा**क्रमा ॥ वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात्सा **वाक्यार्थोपमा** द्विधा ॥ वस्तु किं विदुपन्यस्य व्यसनात्तत्सधर्मणः। साम्यप्रतीतिरस्तीति **प्रतिवस्तूपमा** यथा ॥ अधिकेन समाहृत्य हीनमेकक्रियाविधौ । यद्वदन्ति स्मृता सेयं **तुल्ययोगोपमा** यथा ॥ कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् । राजन्ननुकरोषीति सैषा **हेतूपमा** स्मृता ॥' इत्यादि रीत्या दण्डिग्रन्थे विस्तरः.

१. 'न लिङ्गवचने भिन्ने न न्यूनाधिकतापि वा । उपमा दूषणायालं यत्रोद्वेगो न धीमताम् ॥' इति दण्डी.

क्तसंध्यापुरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जिहीते। शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः॥' ध्रुवं यथा—'क्रमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं विगाह्यते। ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदुप्रकृत्या च सुरार(?)मेव च॥' नूनं यथा—'यदङ्गनारूपसरूपतायाः कंचिद्गुणं भेदकमिच्छतीभिः। आराधितोद्वा(?)मनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिह्नाः॥'

सादृश्याद्भेदेनारोपो रूपकम्।

सादृश्याद्धेतोर्भेदेन विषयविषयिणोर्निर्देशेनारोपोऽतथाभूतेऽपि वस्तुनि तथात्वेनाध्यवसायो रूपकम्। सादृश्यादिति वचनादायुर्घृतमित्यादौ कार्यकारणभावादारोपे न रूपकम्। भेदग्रहणादभेदेनारोपो(पे)ऽतिशयोक्तिरेव, न रूपकम्। तच्चैकानेकमालासमस्तव्यस्तखण्डाखण्डयुक्तायुक्तविषमविशेषहेतुश्लेषोपमाव्यतिरेकाक्षेपसमाधानरूपकत्वापह्नवरसनापरम्परितादिभेदैरनेकधा। तत्रैकविषयं यथा—विश्वेभ्यो भूर्भुवः स्वः शतमखमुकुटश्लिष्टमुक्तामयूखस्नाताः श्रीनाभिसूनोः क्रमनखमणयो मङ्गलानि क्रियासुः। येषामुत्सङ्गवियां शुचिरुचिलहरीताण्डवाडम्बरायां संक्रामन्दुग्धसिन्धोः स्मरसि मुहुरसौ यामिनीकामिनीशः॥' अनेकविषयम्—'कामं संघटितेष्टकान्तविभवे राजत्तुलाकोटिके प्रोत्तुङ्गस्तनयुग्महेमकलशे तत्कायदेवालये। तं देवं विहितावतारमचिरादागत्य सेन्द्राः सुराः सर्वे नेमुरनर्तिषुर्जगुरगुर्वैतालिकत्वं पुरः॥' एवमन्यदपि दण्ड्यादिशास्त्रेभ्योऽभ्यूह्यम्॥

आदिमध्यवर्तिनैकेन जातिक्रियागुणद्रव्यरूपिणा पदार्थेन यत्रार्थसंगतिस्तद्दीपकम्।

जात्या यथा—'उत्साहसंपन्नमदीर्घसूत्रिणं क्रियाविधिज्ञं व्यसनेष्वसक्तम्। शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं मार्गति वासहेतोः॥' क्रियया यथा—'शाठ्येन मित्रं कपटेन धर्मं परोपतापेन समृद्धिभावम्। सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते॥' गुणेन यथा—'जवो हि सप्तेः प्रथमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः। विप्रस्य विद्यैव मुनेरपि क्षमा पराक्रमः शस्त्रबलोपजीविनाम्॥' द्रव्येण यथा—'विष्णुना विक्रमस्थेन दानवानां विभूतयः। क्वापि नीताः कुतोऽप्यासन्नानीता देवतर्द्धयः॥' अस्य च कारणमालैकार्थार्थावृत्तिपदावृत्त्युभयावृत्त्यादयो भेदा भवन्ति। तत्र कारकदीपकं यथा—'एते मेलककन्यकाप्रणयिनः पातालमूलस्पृशः संत्रासं जनयन्ति विन्ध्यभिदुरां वारां प्रवाहाः पुरः। हेलोन्मूलितनर्तितप्रचलितव्यावर्तितप्रेरितत्यक्तस्वीकृतनिह्नुतप्रकटितप्रोद्धूततीरद्रुमाः॥' इत्युत्तरार्धे कारकदीपकं यथा। एवमन्यदपि॥

उपमेयस्यैवोक्तावन्यप्रतीतिरन्योक्तिः।

यथा—'न्यग्रोधे फलशालिनि स्फुटरसं किंचित्फलं पच्यते बीजान्यङ्कुरगोचराणि कतिचित्सिद्ध्यन्ति तस्मिन्नपि। एकस्तेष्वपि कश्चिदङ्कुरवरो बध्नाति तामुन्नतिं यामध्वन्यजनः स्वमातरमिव क्लान्तिच्छिदे धावति॥' सा क्वचिन्निन्दारूपा यथा—'यत्तदूर्जितमू-

र्जितं यदपि च प्रोद्दामसौदामनीदामाडम्बरमम्बरे विरचितं यच्चोन्नतं दूरतः । तेषां पर्यवसानमीदृशमिदं जातं यदम्भोधर द्वित्राः कृत्रिमरोदनाश्रुतनवो मुक्ताः पयोबिन्दवः ॥' क्वचित्स्तुतिरूपा यथा—'क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टां दशामापन्नोऽपि विपन्नदीधितिरपि प्राणेषु गच्छत्स्वपि । मत्तेभेन्द्रविशालकुम्भदलनव्यापारबद्धस्पृहः किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥' उभयरूपा यथा—'निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां कशेरुस्थलीम् । जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान् । दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियं यस्या एव शिशोः स्थिता वसुमती सा पुत्रिणी पौत्रिणी ॥'

उपमेयश्लेषोक्तौ उपमानप्रतीतिः समासोक्तिः ।

यथा—'उपोढरागेण विलोलतारकं तथागृहीतं शशिना निशामुखम् । यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'

उपमेयस्य किंचिदुक्तावप्रस्तुतप्रशंसा ।

यथा—'लावण्यसिन्धुरपरैव हि केयमत्र यत्रापरे कदलिकाण्डमृणालदण्डाः । यत्रोत्पलानि शशिना सह संप्लवन्ते उन्मज्जति द्विरदकुम्भतटी च यत्र ॥'

ध्वनिताभिधानं पर्यायोक्तिः ।

वाच्यादिव्यतिरिक्तस्यार्थस्य प्रतीतिर्ध्वनितम् । तस्याभिधानं पर्यायेण समीहितार्थोक्तिः पर्यायोक्तिः । सा च वाच्ये विधिरूपे क्वचिन्निषेधरूपा यथा—'भम धम्मिअ वीसत्थो सो सुणहो अज्ज मारिओ तेण । गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥' अत्र विश्रब्धो भ्रमेति विधिवाक्ये सांप्रतं तत्र संकेतस्थाननिकुञ्जे सिंहः समायातोऽस्तीति त्वया तत्र न गन्तव्यमिति निषेधः प्रतीयते ॥ क्वचिन्निषेधे विधिर्यथा—'एकाकिनी यदबला तरुणी तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशम् । किं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥' अत्र वासं किं याचसे समीहितक्रीडादिकमपि कुरुष्वेति विधिः प्रतीयते ॥ क्वचिद्विधौ विध्यन्तरं यथा—'मध्याह्नेऽतिखरे निदाघसमये तापं रवौ मुञ्चति शीते कुब्जवटे सुपत्रनिचये हे पान्थ विश्राम्यताम् । एकाकी च भवानहं च तरुणी शून्या प्रपा वर्तते लज्जा मे भणितुं त्वमेव चतुरो जानासि कालोचितम् ॥' अत्र विश्राम्यतामिति विधौ मामुपभुङ्क्ष्वेति विध्यन्तरं प्रतीयते ॥ क्वचिन्निषेधे निषेधान्तरं यथा—'वयं बाल्ये डिम्भांस्तरुणिमनि यूनः परिणतावपीप्सामो वृद्धान्परिणयविधिस्तु स्थितिरियम् । त्वयारब्धं जन्म क्षपयितुमयुक्तेन विधिना न नो गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥' अत्र नास्मत्कुले सतीकलङ्कोऽभूदिति निषेधे नैकभर्तृतत्परतया त्वयापि स्थातव्यमिति निषेधः प्रतीयते ॥ क्वचिदविधिनिषेधे विधिर्यथा—'शुभे वृद्धः कोऽयं गृहपरि-

१. 'भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन । गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥' इति च्छाया.

वृद्धः किं तव पिता न मे भर्ता रात्रावपगतदृगन्यच्च बधिरः । हुहुंहुं श्रान्तोऽहं शिशयिषुरिहैवापवरके क्व यामिन्यां यामि स्वपिमि ननु निर्देशमशके ॥' अत्राहं त्वदर्थी अत्रैव स्थास्यामीति विधिः प्रतीयते ॥ क्वचिदप्यविधिनिषेधे निषेधो यथा—'चंकमणियाइं कत्तो कत्तो अद्धच्छिपि छियव्वाइं । उससि यंपि मुणिज्जइ छइल्लपुरे हयग्गामे ॥' अत्रास्मिन्विदग्धजनमये ग्रामे प्रच्छन्नकामुकं प्रति त्वया रतिर्न कर्तव्येति कयाचित्कां प्रति निषेधः क्रियते ॥ क्वचिद्विधिनिषेधयोर्विध्यन्तरं यथा—'आसन्नकुडंगेज्जन्नादेउलेबहुन्नदेउलेज्जयाणसंकिण्णे । थेरुत्तिपइ मा रुअसु पुत्ति दिण्णासि सुग्गामे ॥' अत्र मा रोदीः, सुग्रामे दत्तासीति विधिनिषेधयोस्त्वया स्वैरं वर्तितव्यमिति विध्यन्तरं प्रतीयते ॥ क्वचिद्विधिनिषेधयोर्निषेधान्तरम् । यथा—'उच्चिणसु पडिअ कुसुमं मा धुन सेहालिअं हलिअसुन्हे । एस अवसाणविरसो ससुरेण सुओ वलयसद्दो ॥' अत्र पतितं कुसुममुच्चिनु मा शेफालिकां धुनीहीति विधिनिषेधयोरभिधाने सखि, चौर्यरते प्रसक्तया त्वया वलयशब्दो न कर्तव्य इति निषेधान्तरं प्रतीयते ॥ क्वचिद्विधावनुभयं यथा—'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् । आनीतं पुरतः शिरोंऽशुकमधःक्षिप्ते चले लोचने वाचां तच(त्र) निवारितं वित्र(प्रस)रणं संकोचिते दोर्लते ॥' अत्र तयैतत्कृतमिति विधौ सानुरागिणीवेति न प्रतीयते ॥ क्वचिन्निषेधेऽनुभयं यथा—'निःशेषच्युतचन्दनं स्तनतटं प्रोन्मुक्तरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तथेयं तनुः । मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥' अत्र त्वं तस्यान्तिकं न गतासीति निषेधे प्रतीयमानेऽपि स त्वया मत्प्रियः कामित इति व्यज्यते ॥ क्वचिद्विधिनिषेधयोरनुभयं यथा—'चन्द तुमं न गणिज्जसि जाव इमो बहलपत्तलच्छाओ । गामस्स तिलअभूओ सहइ वडो किण्हपरकुव्व ॥' चन्द्र त्वं न गण्यसे यावदेष वटः शोभते इति विधिनिषेधयोरुक्तावनेनापि वटेन चौर्यरतादिगोपनं भवतीति व्यज्यते ॥ क्वचिदविधिनिषेधे तूभयं यथा—'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥' एवमादिभेदैर्ध्वनितोक्तिर्भवति । परं ग्रन्थगौरवभयादस्माभिर्नोदाह्रियते । स प्रपञ्चस्त्वानन्दवर्धनादवगन्तव्यः ॥

अत्युक्तिरतिशयोक्तिः ।

यथा—'त्वद्वारितारितरुणीश्वसितानलेन संमूर्च्छितोर्मिषु महोदधिषु क्षितीशाः । अन्त-

---

१,२. अनयोश्छाया न स्फुटा. ३. 'उच्चिनुष्व पतितानि कुसुमानि मा धुनु शेफालिकां हलिकस्नुषे । एषोऽवसानविरसः श्वशुरेण श्रुतो वलयशब्दः ॥' इति च्छाया. ४. 'चन्द्र त्वं न गण्यसे यावदेष बहलपत्रच्छायः । ग्रामस्य तिलकभूतः शोभते वटः·········॥' इति च्छाया.

लैलद्विरिपरस्परश्रृङ्गसङ्घघोरारवैर्मुररिपोरपयाति निद्रा॥' यथा च—'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् । तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥'

सहभावकथनं सहोक्तिः ।

यथा—'सह दिअसनिसाइँ दीहरा सासदण्डा सह मणिवलएहिं बाहधारा गलन्ति । तुह सुहअ विओए तीइ उव्विग्गरीए सह अ तणुलदाए दुव्वला जीविदासा ॥'

प्रतिषेधपुरःसरोक्तिराक्षेपः ।

यत्रोक्तौ कस्याचिदुपमानादेर्वस्तुनः प्रतिषेधः प्रतीयते स आक्षेपः । यथा—'तद्वक्त्रं यदि मुद्रिता शशिकला तच्चेत्स्मितं का सुधा सा दृष्टिर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु । सा चेत्कान्तिरतन्त्रमेव कनकं किं वा बहु ब्रूमहे यत्सत्यं पुनरुक्तवस्तुविरसः सृष्टिक्रमो वेधसः ॥' यथा च—'ऐं एहि किं पि कीए वि कए णिक्किव भणामि अलमहवा । अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥' अयं च भूतभविष्यद्वर्तमानधर्मकारणकार्यानुज्ञाप्रभुत्वानादराशीर्वचनपरुषसाचिव्यपरवशोपायरोषानुशयार्थान्तरप्रतिषेधादिभेदैरनेकधा भवति । तस्य च नात्र विस्तरः ॥

अविरोधेऽपि विरोधप्रतीतिर्विरोधः । साक्षाद्विरोधे तु काव्यत्वासंभवात् ।

यथा—'दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः । चकार यस्याध्वरधूमसंचयो मलीमसः शुक्लतरं निजं यशः ॥' यथा च—'ब्रह्मण्योऽपि ब्रह्मवित्तापहारी स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः । सद्वेषोऽपि द्वेषनिर्मुक्तचित्तः को वा तादृग्दृश्यते श्रूयते वा ॥'

विशेषस्य सामान्येन समर्थनमर्थान्तरन्यासः । साधर्म्येण वैधर्म्येण च ।

तत्र साधर्म्येण यथा—'अधिकुचतटं पौष्पं दाम श्रुती किसलार्चिते विशवलयितौ पाणी श्रोणीलता रसनाञ्चिता । तदपि च तनोर्लक्ष्मीरस्याः स्फुरत्यपदं गिरां प्रकृतिसुभगे पात्रे वेषो य एव स एव वा ॥' वैधर्म्येण यथा—'अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् । त एव धन्याः सुहृदां पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥' अयं च श्लेषाविद्धविश्वव्यापिविशेषस्थविरोधवदयुक्तकारियुक्तायुक्तादिभेदैरनेकधा भवति । तत्र श्लेषाविद्धो यथा—'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् । क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥'

---

१. 'सह दिवसनिशार्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति । तव सुभग वियोगे तस्या उद्वेगशीलायाः सह च तनुलताया दुर्बला जीविताशा ॥' इति च्छाया. २. 'अये एहि किमपि कस्या अपि कृते निष्कृप भणाम्यलमथवा । अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्ये ॥' इति च्छाया.

**स्तुतौ निन्दा निन्दायां स्तुतिर्यत्र पर्यवसीयते सा व्याजस्तुतिः ।**

स्तुतौ निन्दा यथा—'हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः । तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥' निन्दायां स्तुतिर्यथा—'कीर्तिस्तव कालपात्मजेन्दो भ्रमतितरां भुवनं समग्रमेतत् । अपरजनविलक्षणं तवेदं नौपच्छन्दसका वयं भवामः ॥' यथा च—'अस्माकं परमान्दिरस्य चरितं वक्तुं न युक्तं भवेत्स्वामी त्वं कथयामि तेन भवतः किंचित्प्रियादूषणम् । स्वामिन् राम कृतस्त्वया रणगृहे पाणिग्रहः सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती मया ॥'

**साम्यस्य भेदकारणस्य चोक्तौ यद्द्वयोर्भेदकारणं स व्यतिरेकः ।**

यत्र साम्यस्य सादृश्यस्योक्तावनुक्तौ वा भेदकारणस्य च धर्मस्योक्तावनुक्तौ वा यद्द्वयोरुपमानोपमेययोर्भेदकारणं स व्यतिरेकः । तत्र सादृश्यभेदयोरुक्तौ यथा—'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि । कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

**स च सदृशस्वजाति एकानेकश्लेषाक्षेपहेतुभेदैरनेकधा भवति ।**

तत्र सदृशव्यतिरेको यथा—'त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी । भ्रमद्भ्रमरमम्भोजं लोलदृष्टिमुखं तु ते ॥' 'विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् । अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥' स्वजातिव्यतिरेको यथा—'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥'

**सादृश्यात्प्रतिपत्तुः संशयः ससंदेहः । स च केवलो निर्णयान्तश्च ।**

तत्र केवलो यथा—'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः श्रृङ्गारैकरसः स्वयं तु मदनो मासो नु पुष्पाकरः । वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥' निर्णयगर्भो यथा—'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥' निर्णयान्तो द्विधा—हेतोरुक्तावनुक्तौ च । तत्र हेतोरुक्तौ यथा—'किं नन्दी किं मुरारिः किमु रतिरमणः किं हरः किं कुबेरः किं वा विद्याधरोऽसौ किमुत सुरपतिः किं नलः किं कुमारः । नायं नायं न चायं न खलु न हि न वा नापि नासौ न चैष क्रीडां कर्तुं प्रवृत्तस्त्वयमिह हि हले भूपतिर्भोजदेवः ॥'

**प्रकृतस्य सदृशेनापलापोऽपह्नुतिः ।**

यथा—'बाले नैते पयोदाः सुरपतिकरिणो नावकाः (?) कर्णपूराः, सौदामन्योऽपि

नैताः कनकमयमिदं भूषणं वारणानाम् । नैतत्तोयं नभस्तः पतति मदजलं वारिधाराव-धूतं तत्किं मुग्धे वृथा त्वं मलिनयसि मुखं प्रावृडित्यश्रुपातैः ॥'

समेनासमेन वा व्यत्ययः परिवृत्तिः ।

निकृष्टेनोत्कृष्टेन वस्तुना व्यत्ययो व्यतिहारः परिवृत्तिः । यथा—'लतानामेतासामुदितकुसुमानां मरुदयं निजं लास्यं दत्त्वा श्रयति बहुशो गन्धमसमम् । लतास्त्वध्वन्याना-महह दृशमादाय सहसा ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥'

हेतोरर्थप्रतिपत्तिरनुमानम् ।

यथा—'सानुज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः । कथमन्यथा ललाटे यावक-रसतिलकपङ्क्तिरियम् ॥'

सदृशदर्शनात्पूर्वार्थस्मरणं स्मृतिः ।

यथा—'तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः क्रीडाशैलः कनककदलीवेष्टनप्रेक्ष-णीयः । मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥' यथा च—'अपि तुरगसमीपादुत्पतन्तं मयूरं न स रुचिरकलापं बाणलक्ष्यी-चकार । सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे रतिविगलितबन्धे केशपाशे प्रियायाः ॥'

मिथ्याज्ञानं भ्रान्तिः ।

यथा—'वृक्षश्रेणीछन्नसमस्तान्तरमार्गे रम्योद्याने कालपसूनो भवदीये । मेघभ्रान्त्या भानुकरौघादर्शिनो(?)मी केकायन्ते मत्तमयूरास्ततबर्हाः ॥' यथा वा—'पन्थानमाशु वि-जहीहि पुरा स्तनौ ते पश्यन्प्रतिद्विरदकुम्भविशङ्किचेताः । स्तम्बेरमः परिणिनं सुरसा-नुपैति शृङ्गैरगयत ससंभ्रममेवमेका ॥'

असंभावितसंबन्धः कार्याभावेऽनर्थश्च विषमम् ।

यत्रासभावितस्याघटमानस्यार्थस्य संबन्धः क्रियते, तद्विषमम् । यथा—'क्व चायं भूभागः क्व च गगनमेतद्व्यवहितं तथाप्यम्भोराशिर्विकसति सितांशोः समुदये । वृथा प्रत्यासत्तिः किमु किमपि मृष्यं तदपरं यदत्यन्तं भावान्घटयति विदूरानपि मिथः ॥'

यत्र न केवलं कार्यस्यासिद्धिः किं तु प्रत्युतानर्थश्च तदपि विषमम् ।

यथा—'प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मितस्त्रिभुवनगुरुर्भीत्या सद्यः प्रणाम-परो भवान् । नमितशिरसो गङ्गालोके तया चरणाहताववतु भवतस्त्र्यक्षस्यैतद्विलक्षम-वस्थितम् ॥'

औचित्येनोत्कृष्टापकृष्टयोर्योगः समम् ।

उत्कृष्टयोर्यथा—'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा । इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥' निकृष्टयोर्य-

था—'न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् । व्रजविटपममुं ददस्व तस्यै भवतु यतः सदृशोश्चिराय योगः ॥'

हेतोर्हेत्वन्तरस्य कार्ये कार्यान्तरस्याभिधानं समुच्चयः ।

यथा—'पउरजुवाणो गामो महुमासो जोव्वणं पइ ठेरो । साहीणा जुण्णसुरा असही मा होउ किं मरउ ॥' यथा च—'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥'

अनेकेषामेकत्र निबन्धस्त्वन्यः ।

यथा—'माहिषं दधि सशर्करं पयः कालिदासकविता नवं वयः । शारदेन्दुरबला च कोमला स्वर्गशेषमुपभुञ्जते जनाः ॥'

गुणक्रियायां युगपदभिधानमपरः ।

यथा—'अलसलुलितमुग्धस्निग्धनिस्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः । हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं च ॥'

पृष्टमपृष्टं वा यदन्यव्यवच्छेदपरतयोच्यते सा परिसंख्या ।

यथा—'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥'

पूर्वस्योत्तरमुत्तरं प्रति हेतुत्वे कारणमाला ।

यथा—'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥'

प्रस्तुतार्थप्रसिद्ध्यै निदर्शनं दृष्टान्तः । साधर्म्येण वैधर्म्येण च ।

यथा—'महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् । अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमालाः सविशेषसङ्गाः ॥' यथा च—'नवाहवे साहसकर्मनर्मणः पाणिं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः॥'

पूर्वपूर्वार्थनिष्ठानामर्थानामुत्तरोत्तरं विधिनिषेधाभ्यां विरचनैकावली ।

यथा—'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपतिरस्कृताङ्गयः । रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥' यथा च—'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥'

उद्देशक्रमेणार्थानां प्रतिनिर्देशो यथासंख्यम् ।

यथा—'मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निःकारणवैरिणो जगति ॥'

१. 'प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः । स्वाधीना जीर्णसुरा असती मा भवतु किं म्रियताम् ॥' इति च्छाया.

साभिप्रायविशेषणैर्भक्तिः[1] परिकरः।

यथा—'वल्मीकः किमुतोद्धृतो गिरिरियत्कस्य स्पृशेदाशयं त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता। सर्वं साध्वथ [सं]रुणद्धि विरहक्षामस्य रामस्य चेत्त्वद्दन्ताङ्कितवालि कक्षरुधिरक्लिन्नाग्रपुङ्खं शरम्॥'

वस्तुसंपत्त्या महदुपलक्षणेन च वर्णनमुदात्तम्।

यथा—'उच्चीयन्तेऽस्य वेश्मन्यवि···रहिते यत्नतः श्रोत्रियाणां यत्र श्यामाकबीजान्यपि चटकवधूचञ्चुकोटिच्युतानि। यस्मिन्दातर्यकस्माच्चटुलबहुकराकृष्टहारावचूलभ्रष्टास्तत्रैव दृष्टा युवतिभिरलसं चूर्णिता मौक्तिकौघाः॥' यथा च—'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः। दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥' महदुपलक्षणं यथा—'तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी। निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः॥'

कार्यमारभमाणस्य दैवादुपायसंपत्तिः समीहितम्।

यथा—'मनस्विनी वल्लभवेश्म गन्तुमुत्कण्ठिता यावदभून्निशायाम्। तावन्नवाम्भोधरधीरनादप्रबोधितः सौधशिखी चुकूज॥'

कारणाभावेऽपि कार्योपक्षेपो विभावना।

यथा—'अनाहूतसहायस्त्वं त्वमकारणवत्सलः। अनभ्यर्थितसाधुस्त्वं त्वमसंबन्धबान्धवः॥' यथा च—'वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः। भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥'

यत्र क्रियया परस्परं कार्यकारित्वं तदन्योन्यम्।

यथा—'कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तुलस्य। अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः॥'

नित्येनागन्तुना वापरेण हर्षकोपादि यत्र तिरस्क्रियते तन्मीलितम्।

नित्येन यथा—'तिर्यक्प्रेक्षिततरले सुस्निग्धे च स्वभावतस्तस्याः। अनुरागो नयनयुगे सन्नपि केनोपलक्ष्येत॥' आगन्तुकेन यथा—'मदिरामदभरपाटलकपोलतललोचनेषु वदनेषु। कोपो मनस्विनीनां न लक्ष्यते कामिभिः प्रभवन्॥'

प्रसिद्धाधारं विनाप्याधेयावस्थानं विशेषः।

यथा—'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्। रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः॥'

---

१. 'उक्तिः' इति काव्यप्रदीपे.

अर्वाचीनस्यार्थस्य पृथगभिधानं पूर्वम् ।

यथा—'हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन । चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥'

कार्यकारणयोरभेदो हेतुः ।

यथा—'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः । रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥'

समुदायादुत्कृष्टोत्कृष्टनिर्धारणं सारम् ।

यथा—'संसारे मानुष्यं सारं मानुष्यके च कौलीन्यम् । कौलीन्ये धर्मित्वं धर्मित्वे चापि सदयत्वम् ॥'

इङ्गिताकारलक्ष्येऽर्थे सूक्ष्मम् ।

यथा—'अद्यापि तन्मनसि संप्रति वर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात्कर्णे कृतं कनकपत्रमनालपन्त्या ॥'

कार्यतो गुणदोषविपर्ययो लेशः ।

तत्र गुणस्य दोषीभावो यथा—'द्वित्रैः पाणिसरोरुहं त्रिचतुरैर्धम्मिल्लमाल्यस्रजः कण्ठान्मौक्तिकमालिकास्तदनु च क्षिप्ताः पदैः पञ्चषैः । हित्वा भारपरम्परामिति जवात्त्वद्दर्शनोत्कण्ठिता तन्वङ्गी निरुपायमध्वनि मुहुः श्रोणीभरं निन्दति ॥' दोषस्य गुणीभावो यथा—'सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैव परापवादचकितास्तिष्ठन्त्यहो दुष्करम् । अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥'

निन्दासमता वोपमानेनोपमेयस्य भङ्ग्या स्तुतिर्वा प्रतीपम् ।

निन्दा यथा—'वदनमिदं सममिन्दोः सुन्दरमपि ते कथं चिरं न भवेत् । मलिनयति यत्कपोलौ लोचनसलिलं हि कज्जलवत् ॥' समता यथा—'गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं भद्रे । सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥'

एकत्राधारे यत्राधेयद्वयस्यैकेनैकं पिधीयते तत्पिहितम् ।

यथा—'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् । एकोऽपि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'

---

१. काव्यप्रदीपे तु कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्त्युदाहरणत्वमङ्गीकृतम्.
२. ''नन्वेवमत्र कार्यकारणभावालंकृतिप्रपञ्चनप्रसङ्गेन हेत्वलंकारोऽपि लक्षणार्हः । उक्तश्चायं भट्टोद्भटेन—'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति । तत्किं न लक्षितः—इति चेत् 'आयुर्घृतम्' इत्यादिरूपस्यास्य वैचित्र्याभावेनालंकारत्वस्यैवाभावात् ।'' इत्यादि कारणमालालंकारप्रकरणे काव्यप्रदीपे द्रष्टव्यम्.

एकेन कृतकार्यमपरेण तथैवान्यथा विधीयते स व्याघातः ।

यथा—'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥'

यत्र कार्यकारणयोर्युगपद्भिन्नदेशतयोपलम्भः सा असंगतिः ।

यथा—'अनया जघनापायभयमन्थरया तया । अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥'

विकारहेतावप्यविकृतिरहेतुः ।

यथा—'निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते । श्लथीकृताश्लेषरसे भुजंगे चचाल नालिङ्गनतो नताङ्गी ॥' विशेषोक्तिरिति काव्यप्रकाशः ।

एकस्मिन्वाक्येऽनेकार्थता श्लेषः ।

यथा—'उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्तयति श्रियम् । रचयतितरां स्वैराचारप्रवर्तनकर्तनं बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥' अत्रैकस्मिन्पक्षे विभाकरो नाम राजा ।

प्रकृतमुत्क्षिप्य वक्ता यदन्यथा मन्यते तन्मतम् ।

यथा—'यदेतत्कन्यानामुरसि तरुणीसङ्गसमये कृतोद्भेदं किंचित्पुलकमिदमाहुः किल जनाः । मतिस्त्वेषास्माकं कुचयुगतटीचुम्बकशिलासमावेशाकृष्टस्मरशरशलाकोत्कर इव ॥'

उत्तरवचनश्रवणात्प्रश्नोन्नयनमुत्तरोत्तरम् ।

यथा—'गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः । पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥'

सामान्यं सामान्येन यत्समर्थ्यते स उभयन्यासः ।

यथा—'आपत्समुद्धरणधीरधियः परेषां जाता महत्यपि कुले न भवन्ति सर्वे । विन्ध्याटवीषु विरलाः खलु पादपास्ते ये दन्तिदन्तमुशलोल्लिखितं सहन्ते ॥'

यत्र प्रतीयमानोऽर्थो वाच्योपयोगी स भावः ।

यथा—'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥'

एकमनेकस्मिन्क्रमेण भवति स पर्यायः ।

यथा—'तेनामरवधूहस्तसदयालूनपल्लवाः । अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः॥'

उद्भूतवस्तुनश्छद्मना निगूहनं व्याजोक्तिः ।

यथा—'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः । हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'

आधारादाधेयस्या(धेयादाधारस्य वा)धिक्येऽधिकम् ।

तत्राधारादाधेयस्याधिक्यं यथा—'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत । तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥' आधेयादाधारस्याधिक्यं यथा—'नवेन्दुना तन्नभसोपमेयं शावैकसिंहेन च काननेन । रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत् ॥'

प्रतिपक्षबाधाशक्तौ तदीयतिरस्कारे प्रत्यनीकम् ।

यथा—'चक्रेण विष्णोः कृतशीर्षशेषः प्रहर्तुमिच्छन्नपि नास्य शक्तः । राहु समानाख्यतयैव वध्यान् तमोमिपः सन् भजति स्म चक्रान् ॥'

एकस्यैवोपमानोपमेयत्वेऽनन्वयः ।

यथा—'गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥'

यत्र वस्तु स्वगुणमुत्सृज्यान्यगुणयोगात्तद्गुणतामेति स तद्गुणः ।

यथा—'विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या । रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥'

तत्संश्लिष्टमपि वस्तु यद्गुणं नाश्रयति सोऽतद्गुणः ।

यथा—'सज्जणसङ्गेण विदुज्जणस्स कसुसिमानओसरइं । ससिमण्डलमज्झपरिहिडहि किस णुव्विय कुरंगो ॥'

स्वातन्त्र्येणाङ्गत्वेन संशयेनैकपद्येन वा अलंकाराणामेकत्रावस्थानं संकरः ।

तत्र परस्परनिरापेक्ष्यं स्वातन्त्र्यं यथा—'मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया । मधुकराङ्गनया मुहुरुद्धतध्वनिभृता निभृताक्षरमुज्जगे ॥' अत्र यमकानुप्रासयोः शब्दालंकारयोः संकरः । 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥' अत्रोत्प्रेक्षोपमयोः ॥ यथा—'हुतहुताशनमर्मरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः । निपतिताः परितः पथिकव्रजानुपरि ते परिते पुरतो भृशम् ॥' अत्र यमकोत्प्रेक्षयोः शब्दा(र्था)लंकारयोः । उपकारकत्वमङ्गत्वम् । यथा—'हरिरिव बलिबन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव । कमलाश्रयश्च विधिरिव जयति श्रीमूलराजनृपः ॥' अत्र श्लेष उपमाया अङ्गम् । संशय एकतरस्यानिर्णयः । यथा—'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति । अधुनापि निरुद्धाशमविशीर्णमिदं तमः ॥' अत्र मुखेन सहाभेदारोपात्किमतिशयोक्तिः । किमेतदिति मुखं निर्दिश्य इन्दुसमारोपणात् रूपकम् । किं मुखनैर्मल्यप्रस्तावेऽन्योक्तिः । अथैतयोः समुच्चयविवक्षायां दीपकम् । किं प्रदोषवर्णने विशेषणसाम्यात्समासोक्तिः । किं मदनोद्दीपककालो वर्तत इति पर्यायोक्तिरित्यनेकालंकारसंशयः । एकस्मिन्पदेऽर्थशब्दालंकारयोरनुप्रवेश एकपद्यम् । यथा—'प्रथममरुणच्छायस्तावत्ततः कन-

कप्रभस्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः । उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥' अत्र जात्यनुप्रासयोः ॥

इष्टार्थस्याशंसनमाशीः ।

यथा—'अजस्रं यस्योच्चैः स्फुरदुरुभुजस्तम्भशिखरः स्थितो मुग्धस्निग्धां जननिचयरोचिः कचचयः । प्रशस्तिप्रागल्भ्यं वहति मदमोहारिविजये श्रियं वः स श्रीमान् प्रथमजिननाथः प्रथयतु ॥'

इति महाकविश्रीवाग्भटविरचितायामलंकारतिलकाभिधानस्वोपज्ञकाव्यानुशासनवृत्तौ अर्थालङ्कारनिरूपणो नाम तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

अर्थालंकारानुक्त्वा शब्दालंकारानाह—

चित्रश्लेषानुप्रासवक्रोक्तियुक्तियमकपुनरुक्तवदाभासाः षट् शब्दालंकाराः ।

क्रमेण लक्षयति—

आकारगतिस्वरव्यञ्जनस्थाननियमच्युतगुप्तादिभेदैरनेकधा चित्रम् । बन्धस्य खड्गधनुर्बाणमुसलशूलशक्तिहलच्छत्रपद्ममुरजचक्रस्वस्तिकाद्याकारसादृश्यादाकारचित्रम् ।

तत्र खड्गबन्धो यथा—'भव्यानां परमानन्दकन्दोद्भेदघनाघनः । नतामरशिरोरत्नविवर्धितनखप्रभा ॥' 'भवाब्धिपरपारान्तप्रापणा पोतसंनिभा । भर्ता विमलतीर्थेश कुरु मे निर्मलं मनः ॥' धनुर्बन्धो यथा—'अनन्तज्ञानसंताननिध्यातभुवनत्रयः । यतीन्द्रसेव्यचरणः श्रियेऽनन्तजिनोऽस्तु वः ॥' बाणबन्धो यथा—'मुखेन्दुचन्द्रिकापूररतामरचकोरकः । करोतु धर्मो निर्मारः सुरलोकनतः श्रियम् ॥' मुसलबन्धो यथा—'सदाशान्तिर्जगन्नाथः श्रियं शान्तिं तनोतु नः । नतशान्तशचीनाथः कृतशान्त्यर्चनो हि सः ॥' शूलबन्धो यथा—'नित्यं कुन्थ्वादिसत्त्वेष्वहिंस्रः कुन्थ्विति संज्ञकः । करिराजकराकारकरो मामवताज्जिनः ॥' शक्तिबन्धो यथा—'पदं श्रियामराभिख्यो भित्कर्मारेर्जिनः परः । रदनच्छेदधामोमो मोदायास्तु शिवप्रदः ॥' अस्य व्याख्या—अराभिख्योऽराभिधानो जिनो मोदायास्तु । कथंभूतः । भित्कर्मारेर्भिनत्तीति भित् भेदकः । कस्य । कर्मारेः कर्मरूपशत्रोः । पुनः कथंभूतः । रदनच्छेदधामोमः रदनच्छेदधामा करिकलभदन्तच्छेदधवला उमा कीर्तिर्यस्य स तादृशः । शेषं संबोधनम् । हलबन्धो यथा—'श्रियं वितनुतां मल्लिसखा जिनमतल्लिका । कामं कुन्दविभोदाररदांशुहततामसः ॥' जिनमतल्लिका जिनप्रधानं तमसां समूहस्तामसम् ॥ छत्रबन्धो यथा—'श्रिये श्रीसुव्रतो देवः श्रितो मुनिभिरस्तु वः । नरामरनमन्मौलिलिह्यमानक्रमो जिनः ॥' पद्मबन्धो यथा—'एनश्छिनत्तु न इनः सुनयेन पुनः पुनः । ध्यानज्ञान-

धनस्थानः स्वनमिर्ध्वनदनः स्वनः ॥' तिष्ठन्त्यस्मिन्निति स्थानः । आधिकरणेऽत्रानप्रत्ययः। ध्यानज्ञानधनस्थानः शब्दायमानशकटस्वनः । अत्र कविनात्मशक्त्यतिशयात् गोमूत्रिकाचित्रमप्यन्तर्भावितम् ॥ मुरजबन्धो यथा—'नेमिनाथ जिनाविघ्न शमिनां तनु नाविभ । भविना नुत नागश्रीस्त्वां विनाथ घनागसाम् ॥' व्याख्या—हे नेमिनाथ जिन शमिनामविघ्नं विघ्नाभावं तनु । कथंभूत । नाविभ न निःप्रभ अपि तु सप्रभ । तथा भविना संसारिणा नुत । भविनेति जातावेकवचनम् । तथा त्वां विना घनागसां घनपापानां पुरुषाणां न अगश्रीर्भवति । न गच्छतीति अगा अविनश्वरेत्यर्थः । अयमभिप्रायः—सपापा अपि पुरुषास्त्वां सेवमानाः पापमुक्तेरगश्रियं लभन्ते । कविनामाङ्कितो य उरश्चक्रबन्धो यथा—'सर्वं कृन्ततु कल्मषं स भवतो वाग्भर्त्सितासौहृदः सद्रीतिश्रितविश्वपार्श्वभवहृत्कूटस्थिरोऽमर्महा । निर्मारः परवारिदप्रभतनुर्यस्य स्फुटा हारभाभात्कीर्तिः सकले सदावनितले दत्तेशहासप्रभा ॥' व्याख्या—भवं हरन्तीति भवहृज्जिनः । पार्श्वाभिधानो भवहृत् । पार्श्वजिन इत्यर्थः । सती शोभना रीतिर्यस्य स सद्रीतिः । श्रितं विश्वं जगद्यस्य स श्रितविश्वः । सद्रीतिश्चासौ श्रितविश्वश्च सद्रीतिश्रितविश्वः । स चासौ पार्श्वभवहृच्च सद्रीतिश्रितपार्श्वभवहृत् भवतः सर्वं कल्मषं कृन्ततु छिनत्तु । कथंभूतः । कूटस्थिरः । कूटं गिरिशृङ्गं तद्वत्स्थिरो निश्चलः । पुनः कथंभूतः । अमर्महा । न मर्माणि हन्तीति अमर्महा । निर्मारो निष्कंदर्पः । परवारिदप्रभा श्यामवर्णा तनुर्यस्य । पुनः कथंभूतः । वाग्भर्त्सितासौहृदः । वाचा वचनेनापि भर्त्सितं निराकृतमसौहृदमवात्सल्यं येन । यस्य पार्श्वजिनस्य स्फुटा प्रकटा हारप्रभा कीर्तिरभात् । कथंभूता । सकलेऽवनितले दत्तेशहासप्रभा ईशस्य हासप्रभा धवलितेत्यर्थः । सा दत्ता यया सा तथोक्ता । स्वस्तिकबन्धो यथा—'प्रसीद स सदा वीर प्रभो धीर रजोम्बुद । प्रति मां ददस्व श्रेयः प्रधानाययसद्यशः ॥' हे वीर स प्रसिद्ध । सेति वीरस्य विशेषणम् । प्रसीद । कथंभूत । रजोम्बुद । तथा मां प्रति श्रेयो ददस्व । प्रधान उत्तम । तथा सद्यश आयय प्रापय । 'अय गतौ' । अयमानं प्रयुङ्क्ते आययति । आदिशब्दादष्टारद्वादशारचक्रसप्तचक्रिकगोमूत्रिकानन्द्यावर्तभृङ्गारचामरघण्टाप्रभृतीनि तत्सदृशनामान्यूह्यानि ॥

गतिचित्रं सर्वतोभद्रगतप्रत्यागतगोमूत्रिकार्धभ्रमरथपदतुरगपदगजपदादिभेदैरनेकधा भवति ।

तत्र सर्वतोभद्रं यथा—'देवाकानिनि कावादे वाहिकास्वस्वकाहि वा । काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥,' 'वारणागगभीरा सा साराभीगगणारवा । कारितारिवधा सेना नासेधा वरितारिका ॥' एवमन्यदपि ॥

ह्रस्वादिस्वरनियमो स्वरचित्रम् ।

---

१. किरातार्जुनीये पञ्चदशसर्गे पञ्चविंशोऽयं श्लोकः. २. शिशुपालवधेकोनविंशसर्गेचतुश्चत्वारिंशोऽयं श्लोकः.

यथा—'जय मदनगजनमन वरकमलभगतमन । गतजनन मदमरण भव भयगनरशरण ॥' अत्र सर्वत्र ह्रस्वोऽकारः । एवं ह्रस्वेनेकारादिना दीर्घेणाकारादिना द्वित्र्यादिस्वरैश्चोदाहार्यम् ॥

एकद्वित्र्यादिव्यञ्जननियमो व्यञ्जनचित्रम् ।

एकव्यञ्जनं यथा—'किंकांकुकुं ककेकाङ्क केकिकोकैककः ककः । ककुकौ कः कका काकः कक्काकुकुक कां ककुः ॥' द्विव्यञ्जनचित्रं यथा—'दूरादारदरोदार दूरोदरदुरादुरः । दरदी दद्दुरदरा दारं दारं दरैरदान् ॥' एवं त्र्यादिव्यञ्जनचित्रं उदाहार्यम् ॥

कण्ठतालुमूर्धदन्तौष्ठादिस्थाननियमः स्थानचित्रम् ।

यथा—'सूनुसूनूदितिसूनुं निन्युर्युद्भूमिमुम्भितुम् । स्थितिमूलुः श्रुतिर्नीतिस्मृती इषु रुजीदृशी ॥' अकण्ठ्योऽयम् । 'आसाद्य सात्वतो बाणं प्राणीति कृष्णसर्पवत् । तत्पृष्ठो तारथोपस्थं मोहापन्नोपतत्परः ॥' अतालव्योऽयम् । 'भौमसूनुं समायान्तं समायान्तं महाभुजः । अभ्यगच्छद्वासुदेवो वासुदेवो मधुं यथा ॥' अमूर्धन्यः । 'उभयोः शरराजीभिरराजीभिश्चमूकयोः । अर्कांशुश्रीः पराभाजि पराभाजि च खाजिरे ॥' अदन्त्यः । 'नाचालीत्सात्यकिः शौर्यात्स तेन निहतस्तथा । गिरिः कररदाघातैः करिणा कीर्तयेऽत्र किम् ॥' निरौष्ठ्यः ॥

मात्राबिन्दुवर्णादिभेदैश्च्युतमनेकधा ।

तत्र मात्राच्युतकं यथा—'भूतियोजितभर्तव्यः कृपणाक्रान्तमण्डलः । महापदशुभावास त्वत्समः कुपतिः कुतः ॥' अत्र कृपणेति आकारस्य च्युतिः । बिन्दुच्युतकं यथा—'सहसा नलिनी ताराशारिता गगनावनिः । शोभते भूमिपालानां सभा च विबुधाश्रिता ॥' सह हंसेन वर्तते सहंसा । वर्णच्युतकं यथा—'परहिततत्परो दुरितवारहरो भगवान्भयनाशको जगति वीर इति सुरवन्दितः प्रथितशान्तिरलं मदनापहः शिवसुखं शिवोद्भवो भवक्षयनाशको जगति वीर इति प्रभवः श्रियां नरसुरवन्दितः प्रथितशान्तिरलं वृषभो जयी जिनो मदमदनापहः शिवसुखं तनुतां भवतां मुहुर्मुहुः ॥' अत्र सिद्धिछन्दसि नेमिनाथस्तुतिः । अत्र चान्तरवृत्तम्—'परहिततत्परो दुरितवारहरो भगवान्भवभयनाशको जगति वीर इति । सुरवन्दितः प्रथितशान्तिरलं मदनापहः शिवसुखं तनुताम् ॥' अत्र प्रमिताक्षरे छन्दसि श्रीवीरनाथस्तुतिः । 'दुरितवारहरो भगवाञ्शिवो जगति वीर इति प्रभवः श्रियाः । प्रथितशान्तिरलं वृषभो जयी शिवसुखं तनुतां भवतां मुहुः ॥' अत्र द्रुतविलम्बितछन्दसि वृषभनाथस्तुतिः ॥

गुप्तकं क्रियाकारकसंबन्धविषयत्वेन चतुर्धा ।

तत्र क्रियागुप्तकम्—'प्रत्यक्षेपि परोक्षेपि येन वीर्यं महीभृताम् । तस्य देवतुरुष्कस्य के गुणग्रहणे वयम् ॥' अत्र प्रत्यक्षेपीति क्रिया । कारकगुप्तकं यथा—'केनेमौ दुर्विदग्धेन

---

१–५. श्लोका अनवगतार्थाः. ६. एतदुदाहरणपद्यानि दुर्बोध्यानि.

हृदये विनिवेशितौ । पिबतस्ते शरावेण वारि कह्लारशीतलम् ॥' अत्र शराविति कर्मणो गुप्तत्वम् । संबन्धगुप्तकं यथा—'न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि । अस्थानरुदितैरेभी रत्नमालोहितेक्षणे ॥' अत्र न मे अगोरसाभिज्ञमिति संबन्धगुप्तकम् । पादगुप्तकं यथा—'युवियद्गामिनी तारसंरावविहतश्रुतिः । हेमेषु माला शुशुभे ।' अत्र 'विद्युतामिव संहतिः' इति चतुर्थपादस्य गुप्तत्वम् । आदिशब्दात्प्रश्नोत्तरप्रहेलिकादुर्वचकादयोऽपि भवन्ति । परं कष्टकाव्यत्वात्क्रीडामात्रफलत्वान्नात्र प्रपञ्चिताः ॥

परोक्तस्य श्लेषेण काक्वा वान्यथोक्तिर्वक्रोक्तिः ।

तत्र श्लेषवक्रोक्तिर्द्विधा भङ्गश्लेषेणाभङ्गश्लेषेण च । तत्र भङ्गश्लेषेण यथा—'सद्वाः प्रेयसि दीयतां प्रियतम द्वारं किम(मु)च्छाद्यते सत्कं सुन्दरि याचितं कथय मे किं कस्य सत्कं प्रिय । श्रीनाभेयजिनस्य मज्जनजलं कस्त्वं जनः किं जलं दम्पत्योरिति जल्पितं जिनपतेः स्नानोत्सवे पातु वः ॥' अभङ्गश्लेषे यथा—'कोऽयं द्वारि, हरिः, प्रयाह्युपवनं शाखामृगस्यात्र किं, कृष्णोऽहं दयिते, बिभेमि नितरां कृष्णादहं वानरात् । कान्तेऽहं मधुसूदनो, व्रज लतां तामेव मध्वन्वितामित्थं निर्विषयीकृतो दयितया ह्रीतो हरिः पातु वः ॥' यथा च—'भर्तुः पार्वति नाम कीर्तय न चेत्त्वां ताडयिष्याम्यहं क्रीडाब्जेन शिवेति सत्यमनघे किं ते शृगालः पतिः । नो स्थाणुः किमु कीलको नहि पशुस्वामी तु गोप्ता गवां दोलाखेलनकर्मणीति विजयागौर्योर्गिरः पान्तु वः ॥' भिन्नकण्ठो ध्वनिः काकुः । तद्वक्रोक्तिर्यथा—'लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य । आकृष्य पाण्डववधूपरिधानकेशान्स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥' यथा च—'अपि चण्डानिलोद्धूततरङ्गस्य महोदधेः । शक्येत प्रसरो रोद्धुं नानुरक्तस्य चेतसः ॥'

अदूरान्तरितावृत्तिरनुप्रासश्छेकवृत्तिलाटभेदेन त्रिधा ।

आवृत्तिः पुनः पुनर्निबन्धः । अर्थाद्वर्णानां पदानां वा । सरसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ॥

स च त्रिधा भवतीत्याह—

सकृद्वर्णावृत्तिश्छेकानुप्रासः ।

वर्णावृत्तिरिति समस्तं पदम् । यत्रैकस्य यथा—'ततोऽरुणपरिस्यन्दमन्दीकृतवपुः शशी । दध्रे कामपरिक्षामकामिनीगल्लपाण्डुताम् ॥' अनेकवर्णानां यथा—'निरानन्दः कौन्दे मधुनि विधुरो बालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते । प्रियङ्गोर्नो सङ्गं रचयति न चूते विचरति स्मरँल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥'

१. व्यञ्जनपरस्यैकस्यानेकस्य वा समानव्यञ्जनस्योच्चारणे श्रवणयोर्विशेषाभावस्य 'दीड्डो गुडाचि—' इति सूत्रभाष्यसंमतत्वेन जलद्वारार्थकता. २. 'सुखशीर्षजलेषु कम्' इति मेदिनीतो जलार्थकशब्दस्य सुखार्थत्वमपि. ३. स्नानजलमित्यभिप्रायवतो मज्जनजलशब्दस्य 'मम जनस्य जलम्' इत्यभिप्रायेण प्रश्नः.

असकृद्वृत्त्यनुप्रासः ।

वर्णावृत्तिरित्यनुवर्तते । यथा वर्णस्य 'वाचाटाकटपूतनाचटुपटुः कापठ्यकोटी पुटी विस्पष्टा नृतनाटिकानटभटी लाम्पट्यसाटाटवी । व्याचष्टे प्रकटं जनाश्रुतिपुटी तट्टीकते वो मुचा साटोपे भुवि नाभिभावकभटे मय्यत्र वर्तिन्यपि ॥' अनेकस्य यथा—'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिद्यादुद्यदुदारदर्दुरदरी दीर्घोदरिद्रद्रुमद्रोहोद्रेकमयोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥'

सकृदसकृद्वा पदावृत्तिर्लाटानाम् ।

अत्रापि पदावृत्तिरिति समस्तं पदम् । तेन पदस्य पदानां वा सकृत् असकृद्वा आवृत्तिर्लाटानां प्रियत्वाल्लाटानुप्रासः । पदस्य यथा—'निशाकरकरस्मेरैर्गुणैर्गुणवतां मतैः । जने जनयति प्रीतिं प्रीत्यानतनृपो नृपः ॥' असकृद्यथा—'सम्यङ् निषेध्य चतुरश्चतुरोऽप्युपायाञ्जित्वोपभुज्य च भुवं चतुरब्धिकाञ्चीम् । विद्याचतुष्टयविनीतमतिर्जितात्मा काष्ठामवाप पुरुषार्थचतुष्टये यः ॥' अनेकस्यासकृद्यथा—'वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाश काशाः काशाभा भान्ति तासां नवपुलिनतटे स्त्रीनदीहंसहंसाः । हंसाभाम्भोदमुक्तः स्फुरदमलवपुर्मेदिनीचन्द्र चन्द्रश्चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां कालकालः ॥' पदात्मकत्वाद्वाक्यस्य तस्याव्या(प्या)वृत्तिर्यथा—'त्वमेकश्चेतसि न चेत्तपोभिस्तदलं नृणाम् ॥'

एकेनानेकस्यार्थस्य युगपदुक्तिः श्लेषो भङ्गाभङ्गाभ्यां द्विधा ।

एकेन पदेन वाक्येन वा अनेकस्य द्वयोस्त्र्यादीनां वा अर्थानामभिधानं श्लिष्यन्ति शब्दा अत्रेति श्लेषः । हरिप्रभृतयः शब्दा अनेकार्थाभिधायिनः सन्तीत्याह—युगपदेकस्मिन्प्रयोगे । स च भङ्गाभङ्गाभ्यां द्विधा । भङ्गश्लेषोऽभङ्गश्लेषश्च । तत्र खण्डनाद्भङ्गश्लेषः । स वर्णलिङ्गवचनविभक्तिप्रत्ययपदभाषाभेदैरनेकधा भवति । तत्र वर्णश्लेषो यथा—'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥' अत्र विधिर्विधुश्चेति इकारोकारयोर्वर्णयोः श्लेषः । लिङ्गश्लेषो[1] यथा—'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये । लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥' वचनश्लेषो यथा—'प्राज्यप्रभावः[2] प्रभवो धर्मस्यास्तरजस्तमाः । ददतां निर्वृतात्मान आद्योऽन्येऽपि मुदं जिनाः' । अत्रैकपक्षे एकवचनम् । द्वितीयपक्षे बहुवचनम् । स्यादीनां त्यादीनां च भङ्गाद्विभक्तिश्लेषो यथा—'विषं निजगले येन चक्रे[3] च भुजगप्रभुः । देहे[4] येनाङ्गजो दग्धो(?) जाया च स जयत्यजः ॥' प्रकृतिश्लेषो यथा—'विहितापर(चि)ति-

१. 'लिङ्गवचनयोः श्लेषो यथा—' इति काव्यप्रदीपे. २. 'प्राज्यप्रभाः, वः, निर्वृतात्मा, नः' इत्यपि पदच्छेदः. ३. 'चक्रे' इति कृञ्धातोर्लिटि, चक्रशब्दात्सप्तम्यां च समानम्. ४. 'देहे' इति दहधातोर्लिटि, देहशब्दस्य सप्तम्यां च.

महीयसां द्विषतामाहितसाध्वसो बलैः । भव सानुचरस्त्वमुच्चकैर्महतामप्युपरि क्षमाभृताम् ॥' अत्रापचितिरिति चायेश्चिनोतेश्च रूपम् । प्रत्ययश्लेषे यथा—'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः' । अत्र अस्त्रीकृतः स्त्रीकृतश्चेति च्विङीप्रत्यये श्लेषः । पदश्लेषो यथा—'[1]जननीतिमुदितमनसा नित्यं सुस्वामिना कृतानन्दा । सा नगरी नगतनया गौरीव मनोहरा भाति ॥' संस्कृतप्राकृतमागधपिशाचसूरसेनापभ्रंशभाषाणां संकरे भाषाश्लेषः । तत्र संस्कृतप्राकृतयोर्यथा—'सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् । विरहं विरहायासं सोढुं तव चित्तमसहं मे ॥' संस्कृतमागधयोर्यथा—'शूलं शलन्तुशं वा विशन्तु शबला वशं विशङ्का वा । अशमदशं दुःशीला दिशन्ति काले खला अशिवम् ॥' संस्कृतपैशाचिकयोर्यथा—'चम्पककलिकाकोमलकान्तिकपोलाथ दीपिकानङ्गी । इच्छति गजपतिगमना चपलायतलोचना लपितुम् ॥' संस्कृतसूरसेन्योर्यथा—'अधरदलं ते तरुणा मदिरामदमधुरवाणि सामोदम् । साधु पिबन्तु सुपीवरपरिणाहिपयोधरारम्भे ॥' संस्कृतापभ्रंशयोर्यथा—'क्रीडन्ति प्रसरन्ति मधु कमलप्रणयि लिहन्ति । भ्रमरा मित्र सुविभ्रमा मत्ता भूरि रसन्ति ॥' षण्णामपि भाषाणां योगो यथा—'आलोलकमले चित्ते ललाम कमलालये । पाहि चण्डि महामोहभङ्गभीमबलामले ॥'

अखण्डितभेदैरभङ्गश्लेषः ।

यथा—'किं तत्रास्ति निरन्तरं न भवतः सङ्गः कुरङ्गीदृशां किं वा तत्र तथा पयोधरपरिष्वङ्गोऽपि नाह्लादकः । यन्मामत्र विहाय निर्वृतिमना नाथोज्जयन्तं गतः पायाद्वोऽभिहितः स भोजसुतया देवः शिवानन्दनः ॥'

तुल्यं श्रुतिक्रमा क्षरावृत्तिर्यमकम् । तच्च श्लोकश्लोकार्धपादभागभेदैरनेकधा ।

तत्र श्लोकयमकं महायमकं यथा—'सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् । सर्वदारणमानैषी दावानलसमस्थितः ॥'[2] असावेव पृथगर्थतया द्विः परावर्तनीयः । अर्धावृत्त्या अर्धयमकं समुद्रकं यथा—'ननाम लोको विदमानवेन मही न चारित्रमुदारधीरम्' । इदमर्धं पृथगर्थतया द्विः [3]परावर्तनीयम् ॥

पादयमकं मुखं संदंश आवृत्तिगर्भसंदष्टकपुच्छपङ्क्तिपरिवृत्तियुग्मकभेदैर्नवधा ।

तत्र प्रथमद्वितीययोः पादयोरावृत्त्या मुखयमकं यथा—'चक्रं दहतारं चक्रन्द हतारम् । खड्गेन तवाजौ राजन्नरिनारी ॥'

प्रथमतृतीययोरावृत्त्या संदंशः ।

---

१. दमयन्तीकथास्थोऽये श्लोकः. २. 'स त्वारं भरतोऽवश्यमबलं विततारवम् । सर्वदा रणमानैषीदावानलसमस्थितः ॥' इति काव्यप्रदीपे रुद्रटालंकारे च स्फुटः. ३. 'न नामलोऽकोविदमानवेनमहीनचारित्रमुदारधीरम्' इति रुद्रटालंकारे.

यथा—'सारं गवयसांनिध्यराजत्काननमग्रतः। सारङ्गवयसांनिध्यदारुणं शिखरे गिरेः॥'

प्रथमचतुर्थयोरावृत्त्या संदंशः।

यथा आवृत्तिः—'आसन्नदेवा नरराजराजिरुच्चैस्तटानामियमत्र नाद्रौ। क्रीडाकृतो यत्र दिगन्तनागा आसन्नदे वानरराजराजिः॥'

द्वितीयतृतीययोरावृत्त्या गर्भः।

यथा—'यो राज्यमासाद्य भवत्यचिन्तः समुद्रतारम्भरतः सदैव। समुद्रतारं भरतः स दैवप्रमाणमारभ्य पयस्युदास्ते॥'

द्वितीयचतुर्थयोरावृत्त्या संदष्टकम्।

यथा—अमरनगरस्मेराक्षीणां प्रपञ्चयति स्फुरत्सुरतरुचये कुर्वाणानां बलक्षमरंहसाम्। इह सह सुरैरायान्तीनां नरेश नगेऽन्वहं सुरतरुचये कुर्वाणानां बलक्षमरंहसाम्॥'

तृतीयचतुर्थयोरावृत्त्या पुच्छम्।

यथा—उत्तुङ्गमातङ्गकुलाकुलो यो व्यजेष्ट शत्रून्समरे सदैव। स सारमानीय महारिचक्रं ससार मानी यमहारिचक्रम्॥'

चतुर्णामपि परस्परावृत्त्या पङ्क्तिः।

यथा—'रम्भारामा कुरुबककमलारम्भारामाकुरुबककमला। रम्भारामाकुरुबककमला रम्भारामाकुरुबककमला॥'

प्रथमचतुर्थयोर्द्वितीयतृतीययोरावृत्त्या परिवृत्तिः।

यथा—'मुदा रतासौ रमणी यता यां स्मरस्यदोऽलं कुरुतेन वोढा। स्मरस्यदोऽलंकुरुतेऽनवोढामुदारतासौ रमणीयतायाम्॥'

प्रथमद्वितीययोस्तृतीयचतुर्थयोरावृत्तिर्युग्मकम्।

यथा—'विभाति रामापरमारणस्य विभाऽतिरामा परमा रणस्य। सदैवतेजोर्जितराजमाना सदैव तेजोऽर्जितराजमाना॥' पादभागयमकानि अनयैव रीत्यानेकधा भवन्ति। तानि च काव्यहृदयशङ्कुत्वान्नोक्तानि॥

भिन्नरूपाणां शब्दानामेकार्थतेव पुनरुक्तवदाभासः।

यथा—'स त्वं सम्यक् समुन्मील्य हृदि भासि विराजसे। द्विषामरीणां त्वं सेनां वाहिनीमुदकम्पयः॥'

इति श्रीवाग्भटविरचितायामलंकारतिलकाभिधानस्वोपज्ञकाव्यानुशासनवृत्तौ शब्दालंकारविवेचनश्चतुर्थोऽध्यायः।

---

१. 'स्मेराक्षीणां' इति शोभनम्. २-३. 'मासीय' इति पाठ आसीत्. तथापि रुद्रटालंकारस्थोऽयं पाठः साधीयान्भूतः. ३. अस्य श्लोकस्यार्थोऽनवगतः. ४. रुद्रटालंकारस्थोऽयं श्लोकः. ५. सप्तम्यन्तत्वेन दोषाभावः. ६. अरीणामिति सेनाविशेषणम्.

पञ्चमोऽध्यायः ।

दोषमुक्तं गुणयुक्तमलंकारभूषितं शब्दार्थरूपमुक्तं काव्यशरीरम् । परं तत्त्वप्राणिशरीरमिव निरात्मकं न प्रतिभासते । अतः काव्यस्य प्राणभूतान्रसानाह । यदाह—'यामिनीवेन्दुना मुक्ता नारीव रमणं विना । लक्ष्मीरिव ऋते त्यागान्न वाणी भाति नीरसा ॥' यथा च—'साधुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा । तथैव नीरसं काव्यमिति ब्रूमो रसान् (खलु) क्रमात् ॥'

तत्र विभावानुभावैर्व्यभिचारिभिश्चाभिव्यक्ता रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः, क्रमेण शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्ता नव रसा भवन्ति ।

परस्परमास्थाबन्धात्मिका रतिः । हासश्चेतोविकाशः । वैधुर्यं शोकः । तीक्ष्णत्वं क्रोधः । संरम्भो वैक्लव्यम् । भयं संकोचः । जुगुप्सा चित्तविस्तारः । [आश्चर्यं] विस्मयः । तृष्णाक्षयः शमः ॥

अथ क्रमेण रसांल्लक्षयति—

स्त्रीपुंसयोः परस्परावलोकनमाल्यर्तुहर्म्यपुरशैलनदीचन्द्रोपवनोद्यानदीर्घिकाजलक्रीडाविलेपनादिविभावा जुगुप्सालस्यौग्र्यवर्जसर्वव्यभिचारिभावा रतिः । स्थायीभावश्चर्वणीयतां गतः शृङ्गारः ।

'स्त्रीपुंसयोः' इति वचनात् समविषयग्रामसमययोः स्थिरानुरागयोः संप्रयोगसुखैषिणोर्यूनोः स्त्रीपुरुषयोर्या परस्परं रतिः स एव शृङ्गारः । देवगुरुमुनिपुत्रादिविषया तु रतिरनुभाव एव, न पुनः शृङ्गारः । तत्र देवविषया यथा—'नो मुक्त्यै स्पृहयामि नाथ विभवैः कार्यं न सांसारिकैः किं त्वायोज्य करौ पुनः पुनरिदं त्वामीशमभ्यर्थये । स्वप्ने जागरणे स्थितौ विचलने दुःखे सुखे मन्दिरे कान्तारे निशि वासरे च सततं भक्तिर्ममास्तु त्वयि ॥' एवमन्यदपि । ये चास्यानुगताः कटाक्षभुजक्षेपप्रभृतयोऽनुभावास्तेषामग्रे प्रपक्ष्यमानत्वान्नात्र विस्तरः ॥

स च संभोगविप्रलम्भाभ्यां द्विधा ।

तत्र संभोगमाह—

एकान्तसुखमयो धृत्यादिव्यभिचारी रोमाञ्चस्वेदकम्पाश्रुमोचनमेखलास्खलनध्वसितसाध्वसकेशबन्धवस्त्रसंयमनाभरणादिमाल्यादिसम्यग्निवेशनविचित्रेक्षणचाटुप्रभृतिवाचिककायिकव्यापाराभावः परस्परालिङ्गनचुम्बनावलोकनाद्यनन्तभेदः संयुक्तयोः संभोगः ।

यथा—'वक्त्रेन्दुः स्मितमातनोदधिगते दृष्टी विलासश्रियं बाहू कण्टककोरकाण्याबिभृतां

प्राप्तं गिरो गौरवम् । किं नाङ्गानि तवातिथेयमसृजन्स्वस्वापतो याचितं संप्राप्ते मयि नैतदुज्झति कुचद्वन्द्वं पुनः स्पर्धताम् ॥'

अथ विप्रलम्भमाह—

औत्सुक्यमदग्लानिनिद्रासुप्तप्रबोधचिन्तायासाश्रमनिर्वेदमरणोन्मादजडताव्याधिस्वप्नापस्मारादिव्यभिचारी संतापजागरकार्श्यप्रलापक्षामनेत्रवचोवक्रतादीनसंचरणानुकारलेखलेखनवाचनस्वभावनिह्नववार्ताप्रश्नस्नेहनिवेदनसात्त्विकानुभवनशीतप्रयोगसेवनमरणोद्यमसंदेशदानाद्यनुभावो वियुक्तयोर्विप्रलम्भः । स चाभिलाषमानप्रवासभेदाद्द्विधा[2] ।

दैवात्(पितृमातृस्वामि)पारवश्यादभिलाषविप्रलम्भो द्विधा ।

तत्र दैवाद्यथा—'नगरपरिघदीर्घौ बाहुदण्डौ ममैतौ विजितकनककुम्भा सा च तस्याः कुचश्रीः । तव शिशिरसमीरश्चैष नीहारसारस्त्रितयमपि समेतं दुर्लभं रावणेन ॥' पितृमातृपारवश्याद्यथा—'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी दहतु मदनः किं वा मृत्योः परेण विधास्यति । मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया कुलम[म]लिनं न त्वेवायं जनो न च जीवितम् ॥' स्वामिपारवश्याद्यथा—'स्मरनवनदी पूरेणोढा मुहुर्गुरुसेतुभिर्यदपि विधृता दुःखं तिष्ठत्यपूर्णमनोरथा । तदपि लिखितप्रख्यैरङ्गैर्मुहुर्मुहुरुन्मुखा नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥'

मानः प्रणयभङ्गेर्ष्याभ्यां द्विधा ।

तत्र प्रणयभङ्गाद्यथा—'गतप्राया रात्रिः कृशतनुशशी शीर्यत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव । प्रणामान्तः कोपस्तदपि न जहासि क्रुधमहो स्तनप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥' ईर्ष्यया यथा—'संध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे धत्ते यच्च नदीं विलज्जशिरसा तच्चापि सोढं मया । श्रीर्यातामृधिमन्थने यदि हरिं कस्माद्विषं भक्षितं मा स्त्रीलम्पट मां स्पृशेत्यभिहतो गौर्या हरः पातु वः ॥'

कार्याच्छापाद्दैवात्पारवश्याच्च प्रवासः ।

कार्याद्यथा—'याते द्वारवतीं तदा मधुरिपौ तद्दत्तस(झ)म्पानतां कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया । तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥' शापाद्यथा—'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ शेषान्मासान्गमय चतुरो लोचने मीलयित्वा । पश्चादावां विरहगणितं तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥' दैवाद्यथा—'आपृष्टासि व्यथयति मनो दुर्बला वासरश्रीरेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि । नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा दैवासक्तस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥' पारवश्याद्यथा—

१. 'नागानि' इति पाठः. २. 'त्रिधा' इति तूचितम्.

'उद्यत्प्रेम्णि प्रथमवयसि प्रावृषि प्राप्तवत्यां स्कन्धावारं जिगमिषुरयं मत्प्रियो मां विहाय । सेयं जाता जगति सकले सुप्रसिद्धा जनोक्तिरग्रग्रासग्रसनसमये मक्षिकासंनिपातः ॥'

अथ हास्यरसमाह—

विकृतवेषादिविभावो नासौष्ठकपोलस्पन्दनदृष्टिव्याकोशनापकुञ्चनस्वेदास्यरागपार्श्वग्रहणाद्यनुभावो निद्रावहित्थतन्द्रात्रपालस्यादिव्यभिचारी हासाभिधानस्थायीभावश्चर्वणीयतां गतो हास्यरसतां याति । स चोत्तमानां स्मितरूपः, मध्यमानां विहसितरूपः, अधमानामपहसितरूपो भवति ।

तत्र

स्मितमीषद्विहसितकपोलं सौष्ठवोपेतदृष्टिभावमप्रेक्ष्यमाणदशनं भवति । विहसितं पुनराकुञ्चिताक्षिकपोलमीषदुद्भूतमुखरागं भवति । अपहसितं त्वस्थानहसितं साश्रुकणाक्रान्तनेत्रमुत्कम्पितांशशिरोविभागं भवति ।

तत्र सामान्यहासोदाहरणम्—'त्रस्तः समस्तजनहासकरं करेणोस्तावत्स्वरः प्रखरमुल्लमयांचकार(?) । यावच्चलांसनविलोलनितम्बबिम्बविस्रस्तवस्त्रमवरोधवधूः पपात ॥'

अथ करुणमाह—

इष्टवियोगानिष्टसं[प्र]योगविभावो दैवोपालम्भनिःश्वासतानवमुखश्लेषस्वरभेदाश्रुतपातवैवर्ण्यप्रलयस्तम्भ[वै]कम्पभूलुठनविलापगात्रांशाद्यश्रुभावनिर्वेदग्लानिचिन्तौत्सुक्यमोहश्रमत्रासविषाददैन्यव्याधिजडतोन्मादापस्मारालस्यमरणप्रभृतिदुःखमयव्यभिचारी चित्तवैधुर्यलक्षणः शोकाभिधानः स्थायिभावश्चर्वणीयतां गतः करुणरसतां याति ।

यथा—'हा मातस्त्वरितासि कुत्र किमिदं हा देव ताः क्वाशिषो धिक् प्राणान् पतितोऽशनिर्हुतवहस्त्वङ्गेषु[1] दग्धे दृशौ । इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥'

अथ रौद्रमाह—

हारापहारदेशजात्यभिजनविद्याकर्मनिन्दासत्यवचनस्वभृत्याविक्षेपोपहासवाक्याभाष्यद्रोहमात्सर्यादिविभावो नयनरागभ्रुकुटीकरुण(र्ण)दन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिःशेषताडनपाटनपीडनप्रहरणाहरणशस्त्रसंपातरुधिराकर्षणच्छेदनाद्यनुभाव औग्र्यावेगोत्साहविबोधानर्थचापलादिव्यभिचारी क्रोधाभिधानः स्थायीभावश्चर्वणीयतां गतो रौद्ररसतामाप्नोति ।

---

१. काव्यप्रकाशे तु 'स्तेङ्गेषु' इत्युपलभ्यते.

यथा—'उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषात्कामं त्रिःसप्तकृत्वो जगति विशसतः सर्वतो राजवंशान् । पिङ्क्ष (?) तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमानक्रोधाग्नेः सर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥'

अथ वीरमाह—

प्रतिनायकवर्तिनमविनयसंमोहाध्यवसायबलशक्तिप्रतापप्रभावविक्रमाधिक्षेपादिविभावः स्थैर्यौदार्यधैर्यगाम्भीर्यशौर्यविशारदाद्यनुभावो धृतिस्मृत्यौग्र्यगर्वामर्षामत्यावेगहर्षादिव्यभिचारी उत्साहाभिधानः स्थायिभावश्चर्वणीयतां गतो वीररसतां याति ।

स च त्रिधा । दानवीरो धर्मवीरो युद्धवीरश्च । तत्र दानवीरा बलिजीमूतवाहनादयः । तद्यथा—'स्वस्ति स्वागतमर्थ्यहं वद विभो किं दीयतां मेदिनी का (किं) मात्रा मम विक्रमत्रयमिदं दत्तं गृहीतं मया । मा देहीत्युशनाह किं हरिरयं पात्रं किमस्मात्परमित्येवं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥' यथा च—'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति । तृप्तिं न पश्यामि तवैव तावता किं भक्षणात्त्वं विरतो गरुत्मन् ॥' धर्मवीराः श्रीपार्श्वमहावीरप्रभृतयः । 'दन्तक्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे । दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥' यथा च—'शठकमठविमुक्ताग्रावसंघातघातव्यथितमपि मनो न ध्यानतो यस्य नेतुः । अचलदचलतुल्यं विश्वविश्वैकधीरः स दिशतु शिवमीशः पार्श्वनाथो जिनो वः ॥' युद्धवीरा रामादयो मन्तव्याः ॥

अथ भयानकमाह—

पिशाचादिविकृतस्वरश्रवणतदवलोकनस्वजनवधबन्धादिदर्शनशून्यगृहारण्यतमआदिविभावः करकम्पचलदृष्टिनिरीक्षणकरस्यन्दशुष्कौष्ठकण्ठमुखवैवर्ण्यस्वरभेदाद्यनुभावः शङ्कापस्मारमरणत्रासचापलावेगदैन्यमोहादिव्यभिचारी स्त्रीनीचानां स्वाभाविकभयाभिधानः स्थायिभावश्चर्वणीयतां प्राप्तो भयानको रसः ।

यथा—'जाताकस्मिकविस्मयैः किमिदमित्याकर्ण्यमानः सुरैः सद्यःस्तम्भितकर्णतालचलनाद्दिग्दान्तिनः कम्पयन् । जन्तूनां जनितज्वर. स मृगयाकोलाहलः कोऽप्यभूद्येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्डभाण्डोदरम् ॥'

अथ बीभत्समाह—

अहृद्यानामुद्वान्तव्रणपूतिकृमिकीटादीनां दर्शनश्रवणादिविभावोऽङ्गसंकोचहृल्लासनासामुखविकूणनाच्छादननिष्ठीवनाद्यनुभावोऽपस्माररौग्र्यमोहग-

दादिव्यभिचारी जुगुप्साभिधानः स्थायिभावश्चर्वणीयतां गतो बीभत्सतामाप्नोति ।

यथा—'अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रायप्रेङ्खितभूरिभूषणरवैराघोषयत्यम्बरम् । पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥'

तथाद्भुतमाह—

दिव्यदर्शनेप्सितमनोरथावाप्त्युपधूतदेवकुलादिगमनसभाविमानमायेन्द्रजालातिशायिशिल्यकर्मादिविभावो नयनविस्तारानिमेषप्रेक्षणरोमाञ्चाश्रुस्वेदसाधुवाददानाहोकारचेलाङ्गुलिभ्रमणाद्यनुभावो हर्षवेगजडतादिव्यभिचारी विस्मयाभिधानः स्थायिभावश्चर्वणीयतां गतोऽद्भुतरसतामाप्नोति ।

यथा—'पादाङ्गुष्ठनिपीडितामरगिरित्रुट्यत्तटीविभ्रमद्भूगोलातिभरासहाहिनिवहाश्यामास्यनिर्यद्व्रहत् । निःश्वासोच्छलिताब्धिवारिलहरीविभ्रष्टतारावलिः पायाद्वो जिनवीरशैशववयोव्यापारलीलारसः ॥' यथा च—'यत्राभ्रंलिहभूरिभूधरशिरोऽग्रे हि स्खलत्स्यन्दनो देवोऽपि द्युमणिः प्रयाति महता कष्टेन ताराध्वना । बाढं शैशवमक्षिमीलनकलामात्रेण संलङ्घ्य तां यात्रा कालपनन्दनेन विदधे श्रीपार्श्वनाथप्रभोः ॥'

अथ शान्तः—

वैराग्यसंसारभीरुतातत्त्वज्ञानवीतरागचरणपरिचरणपरमेश्वरानुग्रहादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृतिस्मृति(निर्वेद)[1]मत्यादिव्यभिचारी शमाभिधानः स्थायिभावश्चर्वणीयतां गतः शान्तरसतां याति ।

यथा—'अहौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः कदा पुण्येऽरण्ये जिन जिन जिनेति प्रलपतः ॥'

विभावैरनुभावैर्व्यभिचारिभिश्चाभिव्यक्ता इत्युक्तम् । तत्र व्यभिचारिणो ब्रूते—

धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थाशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः शान्तिस्थित्युदयप्रशमशबलत्वधर्माणस्त्रयस्त्रिंशद्व्यभिचारिणः ।

तत्र धृतिः संतोषः । स्मृतिः स्मरणम् । मतिरर्थनिश्चयः । व्रीडा चित्तसंकोचः । जाड्यमर्थाप्रतीतिः । विषादो मनःपीडा । मद आनन्दसंमोहसंभेदः । व्याधिर्मनस्तापः । निद्रा मनःसंमीलनम् । सुप्तं निद्राया गाढावस्था । औत्सुक्यं कालाक्षमत्वम् । अवहित्था-

१. चेष्टाहानेरनुभावत्वेन रसगङ्गाधरे निर्णीतत्वादत्रास्य पाठः प्रक्षिप्तः प्रतीयते.

कारगुप्तिः। शङ्कानिष्टोत्प्रेक्षा। चापलं चेतोऽनवस्थानम्। आलस्यं पुरुषार्थेष्वनादरः। हर्षश्चेतःप्रसादः। गर्वः परावज्ञा। अत्युग्रता चण्डता। प्रबोधो विनिद्रत्वम्। ग्लानिर्बलापचयः। दैन्यमनौजस्यम्। श्रमः खेदः। उन्मादश्चित्तस्य विप्लवः। मोहो मूढत्वम्। चिन्ता ध्यानम्। अमर्षः प्रतिचिकीर्षा। त्रासश्चित्तचमत्कारः। अपस्मार आवेशः। निर्वेदः स्वावमाननम्। आवेगः संभ्रमः। वितर्कः संभावना। असूया अक्षमा। मृतिर्म्रियमाणता। एते च शान्तिस्थित्युदयप्रशमशबलत्वधर्माणः।

तत्र निद्रायाः स्थिति(शान्ति)र्यथा—'प्रत्यग्रोन्मेषजिह्माक्षणमनभिमुखी रत्नदीपप्रभाणामात्मव्यापारगुर्वीजनितजललवाक्षम्भणैः स्वाङ्गभङ्गैः। नागाकं(ङ्गं) मोक्तुमिच्छोः शयनगुरुफणाचक्रवालोपधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः॥' स्थितिर्यथा—'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च। सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया॥' अत्र वितर्कस्य स्थितिः। उदयो यथा—'कृतगुरुतरहारच्छेदमालिङ्ग्य पत्यौ परिशिथिलितगात्रे गन्तुमापृच्छ्यमाने। विगलितनवमुक्तास्थूलबाष्पाम्बुबिन्दुस्तनयुगमबलायास्तत्क्षणाद्रोदितीव॥' अत्र विषादस्योदयः। संधिर्यथा—'एकेनाक्ष्णा प्रविततरुषा पाटलेनास्तसंस्थं पश्यत्यक्ष्णा स्वजललुलितेनापरेण स्वकान्तम्। अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा॥' अत्र रोषदैन्ययोः संधिः। शबलता यथा—'[1]क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्। किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु जनो धन्यो धुरं धास्यति॥' अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलत्वम्। एवमन्येष्वपि व्यभिचारिषूदाहार्यम्॥

अथ सात्विकानाह—

स्तम्भस्वेदोऽथ रोमाञ्चः स्वरभङ्गश्च वेपथुः।
वैवर्ण्याश्रुप्रलापाश्च इत्यष्टौ सात्त्विकाः स्मृताः॥

यथा—'वारंवारं तिरयति सुधावुद्गतो बाष्पपूरस्तत्संकल्पोपहितजडिमस्तम्भमभ्येति गात्रम्। सद्यः खिद्यन्नयनविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि॥' अत्राश्रुस्तम्भस्वेदवेपथुरूपाश्चत्वारः सात्त्विकभावाः। 'सर्वाङ्गीणविसारिभूरिपुलकोद्भेदत्रुटत्कञ्चुकाः स्वाकूतं गुरुबाष्पगद्गदगिरा सख्यै गिरन्त्यो मुहुः। प्राप्तव्यः कथमेष वल्लभ इति म्लायन्मुखास्त्वाममूः श्रीमद्वाग्भट वीक्ष्य चित्रलिखितप्रख्या मृगाक्ष्यो-

---

१. अत्र 'क्वाकार्यम्' इति वितर्कः, 'भूयोऽपि' इत्यौत्सुक्यम्, 'दोषाणाम्' इति मतिः, 'कोपेऽपि' इति स्मृतिः, 'किं वक्ष्यति' इति शङ्का, 'स्वप्नेऽपि' इति दैन्यम्, 'चेतः स्वास्थ्यम्' इति धृतिः, 'कः खलु' इति चिन्ता, स्फुटं पूर्वपूर्वोपमर्देन प्रतीयमाना शबलता चमत्कारभूमिः' इति काव्यप्रदीपे स्पष्टमुक्तम्.

ऽभवन् ॥' अत्र रोमाञ्चस्वरभेदवैवर्ण्यप्रलापाश्चत्वारः सात्त्विकभावाः । एवं च नव स्थायिनस्त्रयस्त्रिंशद्व्यभिचारिणोऽष्टौ सात्त्विका इति पञ्चाशद्भावा बभूवुः ॥

अथैतानभिधाय तदाभासानाह—

तत्र वृक्षादिष्वनौचित्येनारोप्यमाणौ रसभावौ रसभावाभासतां भजतः ।

यथा—'मधुर्द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः । शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥' अनौचित्येन यथा—'तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा सा दृष्टिर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु । सा चेत्कान्तिरतन्त्रमेव कनकं किं वा बहु ब्रूमहे यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥' अत्रानुरागविमुखायां सीतायां रावणस्योक्तिः । आदिशब्दाच्चन्द्रादीनां यथा—'अङ्गुलीभिरिव केशसंचयं संनिरुध्य तिमिरं मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥' अस्मिन्नुदाहरणद्वये संभोगशृङ्गाररसाभासः । एवमन्येऽपि रसाभासा भावाभासाश्चोदाहर्तव्याः ॥

अथ रसानभिधाय दोषानाह—

स्वशब्दोक्तिविभावादिप्रातिकूल्यप्रकृतिव्यत्ययविभावानुभावक्लेशव्यक्तिपुनःपुनर्दीप्त्यकाण्डप्रथनाकाण्डाच्छेदाङ्गातिविस्तराङ्ग्यननुसंधानानङ्गाभिधाना दश रसदोषाः । रसस्थायिव्यभिचारिणां स्वशब्देन वाच्यत्वं स्वशब्दोक्तिः ।

तत्र रसानां स्वशब्दोपादानं यथा—'शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया । रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरादित्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये ॥' स्थायिनां यथा—'रूपनिर्जितकन्दर्पे नयनानन्ददायिनि । अभूत्तस्या रतिः कापि प्रिये चाटुविधायिनि ॥' अत्र रतिशब्दः । व्यभिचारिणां यथा—'सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥' अत्र व्रीडादयः ॥

क्वचित्संचारिणां न दोषः ।

यथा—'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥' अत्र औत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् ॥

यत्र विभावानुभावादयः प्रतिकूला(स्तः?)द्विभावादिप्रातिकूल्यम् ।

यथा—'त्यजत मानवलंबत विग्रहैर्न पुनरेति गतं चतुरं वयः । परभृताभिरितीवमु-

दीरिते स्मरमते रमते स्म वधूजनः ॥' अत्र 'न पुनरेति चतुरं वयः' इति पदमनित्यतां प्रकाशयन् शान्तस्य विभावतां याति शृङ्गारस्य नोपयोगि। यथा—'प्रच्छन्नकामुकं दृष्ट्वा गुरूणां मध्यतो वधूः। विमुच्य सर्वव्यासङ्गं वनाय कुरुते स्पृहाम् ॥' अत्र सकलव्यासङ्गविमोचनवनस्पृहे शान्तस्यानुभावौ ॥

परस्परबाध्यबाधकभावे पृथक्पृथगाश्रये अन्यरसैरन्तरितत्वेऽङ्गत्वे च न दोषः।

तत्र परस्परबाध्यत्वं यथा—'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना वाताः सीकरिणः पयोदसुहृदामानन्दकेकाः कलाः। कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥' अत्र धैर्यापस्मारौ परस्परबाध्यबाधकभावेनोपनिबद्धौ विप्रलम्भरसोपकाराय। 'स्नायुव्यासनिबद्धकीकसतनुं नृत्यन्तमालोक्य मां चामुण्डा करतालकुट्टितलयं वृत्ते विवाहोत्सवे। ह्रीमुद्रामपनुद्य यद्विहसितं चित्रं समं शंभुना तेनाद्यापि मयि प्रभुः स जगतामास्ते प्रसादोन्मुखः ॥' अत्र बीभत्सहास्यरसयोर्भिन्नाश्रयत्वेन निबद्धयोर्न दोषः। अन्यरसैर(न)न्तरितत्वे यथा—'भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः। गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः ॥ सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्। संवीजिताश्चन्दनवारिसेकसुगन्धिभिः कल्पलतादुकूलैः ॥ विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्। निर्दिश्यमाना ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन् ॥' अत्र बीभत्सशृङ्गारयोरन्तरे वीरा इति पदेन वीररसनिवेशान्न दोषः। अङ्गत्वे च यथा—'कोपात्किंचिदुपागतोऽपि रभसादाकृष्य केशेष्वलं नीत्वा मोहनमन्दिरं दयितया हारेण बद्ध्वा दृढम्। भूयो यास्यसि तद्गृहानिति मुहुः कण्ठार्धरुद्धाक्षरं जल्पन्त्यश्रवणोल्लखेन(?)सुकृती कश्चिद्रहस्ताड्यते ॥' अत्र केशाकर्षणबन्धताडनादयो रौद्रानुभावा अपि रूपकबलादारोपिताः शृङ्गारस्याङ्गत्वं भजन्ति ॥

प्रकृतीनामन्यथात्वेन कलाद्यौचित्यपरिहारेण च निबन्धनं प्रकृतिव्यत्ययः। तत्र प्रकृतयोऽनेकधा भवन्ति—तद्यथा। तत्र दिव्या मर्त्याः पातालीयाः। तथा दिव्यमर्त्या दिव्यपातालीया मर्त्यपातालीया दिव्यमर्त्यपातालीया च।

दिव्या यथा—'स्मृत्वायं निजवारवासगतया वीणासमं तुम्बरोरुद्गीतं नलकूबरस्य विरहादुत्कञ्चुलं रम्भया। तेनैरावणकर्णचापलमुषा शक्रोऽपि निद्रां जहद्भ्रूयः कारित एव हासिनि शचीवक्त्रे दृशां विभ्रमम् ॥' मर्त्या यथा—'निक्षिप्योत्क्षिप्य यत्नाद्द्रविणमिह मुहुर्मा स्म संक्लेशयस्त्वं पृथ्वीं स्वं च प्रकामं शृणुत हितमिदं सावधानं धनेशाः। नैवेयं शाश्वती श्रीः प्रभवति भुवने कस्यचित्तेन सद्यः शिक्षध्वं राहडस्य प्रसभमभिनवां त्यागधर्मादिलीलाम् ॥' पातालीया यथा—'कर्कोटं कोटिकृत्वः प्रणमति पुरतस्तक्षके देहि

चक्षुः सज्जः सेवाञ्जलिस्ते कपिलकुलकयोः स्तौति च स्वस्तिकस्त्वाम्। पद्मः सद्मैष भक्तेः रवलगति पुनः कम्बलोऽयं वलोऽयं सोत्सर्पः सर्पराजो व्रजतु निजगृहं प्रेष्यतां शङ्खपालः॥' दिव्यमर्त्या यथा—'बर्हिर्ध्वजेऽपि सति सत्यपि दन्तवक्त्रे प्रेमोपधानमवधूय पिनाकपाणिः। हस्तेन नित्यधृतवासुकिकंकणेन प्राज्ञः प्रियः स्पृशति भार्गवमेव पृष्ठे॥' दिव्यपातालीया यथा—'भस्माङ्गरागधवलीकृतसर्वगात्रो यः कण्ठदेशे वरपन्नगावृतः। चन्द्रेण भासुरजटामुकुटस्थितेन शंभुर्ददातु नियतं तव सुप्रभातम्॥' मर्त्यपातालीया यथा—'आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नो लक्षितः कञ्चुको जिह्वे जल्पत एव मे न गणिते द्वेधा प्रवृत्ते मुखात्। तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नद्विषो नैता दुःसहशोकसूक्तमरुत्स्फीताः फणाः पश्यसि॥' दिव्यमर्त्यपातालीया यथा—'आस्तीकोऽस्ति मुनिः सविस्मयकृतः पारिक्षितीयान्मुखान्त्रावा(?)लक्षकलक्ष्मणः फणभृतां वंशस्य शक्रस्य च। उद्वेल्लन्मलयाद्रिचन्दनलतास्वान्दोलनप्रक्रमे यस्याद्यापि सविभ्रमं फणिवधूवृन्दैर्यशो गीयते॥'

तथा धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ता वीररौद्रशृङ्गाररसप्रधानाश्चत्वारो नायकाः। तत्र धीरोदात्ता रामादयः। धीरोद्धता भीमसेनादयः। धीरललिता नलादयः। धीरप्रशान्ता जीमूतवाहनादयः। तत्र धीरललितश्चतुर्धा भवति। अनुकूलः शठो धृष्टो दक्षिणश्च।

तत्र स्थिरप्रेमा एकस्यां रतोऽनुकूलः।

यथा—'अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः। किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्॥'

प्रियमाचक्षाणोऽपि विप्रियं यः कुरुते स शठः।

यथा—'दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः। ईषद्वक्रितकन्धरः सपुलकप्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥'

कृतदोषोऽपि निःशङ्को धृष्टः।

यथा—'लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रागतं वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः। दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसे लीलातामरसोदरे मृगदृशः श्वासः समाप्तिं गतः॥'

अन्यचित्तोऽपि यः पूर्वस्यां सौरव(स्थ?)भयप्रेमादि न त्यजति स दक्षिणः।

यथा—'सैवास्य प्रणतिस्तदेव वचनं ता एव केलिक्रिया भीतिः सैव तदेव नर्ममधुरं पूर्वानुरागोचितम्। कान्तस्य प्रियकारिणी तु भवती तं वक्ति दोषाविलं किं स्यादित्थमहर्निशं सखिमनो दोलायते चिन्तया॥'

बुद्ध्युत्साहस्मृतिप्रज्ञाशौर्यौदार्यगाम्भीर्यधैर्यस्थैर्यमाधुर्यकलाकुशलत्वविनीतत्वकुलीनत्वनीरोगित्वशुचित्वाभिमानित्वयोषिदभिमतत्वप्रियंवदत्वजनानुरागित्ववाग्मित्वमहावंशजत्वतेजस्वित्वदृढत्वतत्त्वशास्त्रज्ञत्वाग्राम्यत्वशृङ्गारित्वसुभगत्वादयो नायकगुणाः।

व्यसनी पापकृदन्यायी लुब्धः स्तब्धः क्रोधी धीरोद्धतश्च प्रतिनायकः। यथा रामस्य रावणः। युधिष्ठिरस्य दुर्योधनः। त्रिपृष्ठस्य हयग्रीवः। विष्णोर्जरासंधः।

नायकस्य च नर्मसचिवपीठमर्दविटविदूषका अनुचराः। तत्र कुपितस्त्रीप्रसादको नर्मसचिवः। नायकगुणयुक्तस्तदनुचरः पीठमर्दः। एकविद्यो विटः। क्रीडनकप्रायो विदूषकः।

नायिका त्रिधा—स्वकीया परकीया सामान्या च।

तत्र देवगुरुसमक्षमूढा आर्जवमार्दवसत्यशौचाद्युपेतौत्सुक्या मुग्धा मध्या प्रौढा भेदेन त्रिधा स्वकीया।

तत्र मुग्धा यथा—'अपहरति यदास्यं चुम्बने श्लिष्यमाणा वलति च शयनीये कम्पते च प्रकामम्। वदति च यदलक्ष्यं किंचिदुक्तापि भूयो रमयति सुतरां मा चित्तमन्तर्नवोढा॥'

उद्भिद्यमाननवयौवना मध्या।

यथा—'तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च। दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलतामहो सारङ्गाक्ष्यास्तरुणिमनि गाढं परिचयः॥'

वयःकलाकौशल्यपरिपूर्णा प्रौढा।

यथा—'नितम्बो मन्दत्वं जनयति गुरुत्वाद्द्रुतगतौ महत्त्वादुद्वृत्तः स्तनकलशभारः श्रमयति। विकाशिन्या कान्त्या प्रकटयति रूपं मुखशशी ममाङ्गानीमानि प्रसभमभिसारे हि रिपवः॥' एताश्च धीराधीरादिभेदेनानेकधा भवन्ति। परमत्र ग्रन्थगौरवभयान्नोच्यन्ते (यथा)॥

परकीया परस्त्री कन्या च।

परस्त्री यथा—'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति। एकाकिन्यपि यामि तद्वरमितः श्रो(स्रो)तस्तमालाकुलं नीरन्ध्राः पुनरालिखन्तु जरठच्छेदा नलग्रन्थयः॥' कन्या यथा—'दृष्टिः शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यति पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते। नो धत्ते गुरुतां तथाप्युपचिता···नितम्बस्थलं तन्व्याः स्वीकृतमन्मथं विजयते नेत्रैकपेयं वयः॥'

१. 'सत्वर' इति. २. 'तनुमा' इति साहित्यदर्पणे.

कलाकलापकुशला वैशिकाचारचतुरा धूर्ता चित्तैकबद्धचित्ता सगुणनिर्गुणयोः साधारणी गणिका सामान्या ।

यथा—'गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं संदष्टाधरमुक्तकर्लाकृतलसङ्क्रान्तोरुगल्लस्थलम् । चाटुप्रायवचो विचित्रमणितं घातै रुतैश्चाङ्कितं वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥'

एतस्याश्च लिङ्गिनः प्रच्छन्नकामुकाः पण्डकाः सुखप्राप्तवित्ता मूर्खाः पितृवित्तगर्विताश्चाभिगम्याः ।

सर्वासामपि योषितां प्रव्रजिता धात्रेयिका हीनस्त्री दासी च दूत्यो भवन्ति ।

स्वाधीनपतिका प्रोषितभर्तृका कलहान्तरिता वासकसज्जा विरहोत्कण्ठिता विप्रलब्धा अभिसारिका खण्डिता चेति स्त्रीणामष्टावस्थाः ।

यस्याः सौभाग्यबद्धः पतिः पार्श्वं न मुञ्चति सा स्वाधीनपतिका ।

यथा—'लिखति कुचयोः पत्रं कण्ठे नियोजयति स्रजं तिलकमलके कुर्वन्गण्डादुदस्यति कुन्तलान् । इति चटुशतैर्वारंवारं वपुः परितः स्पृशन्विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥'

केनापि कारणवशेन यस्याः पतिर्देशान्तरं गतः सा प्रोषितभर्तृका ।

यथा—'श्वासा बाष्पजलं गिरः सकरुणा मार्गे च नेत्रार्पणं केनेदं न कृतं प्रियस्य विरहे कस्यासवो निर्गताः । सख्येवं यदि तेन नास्मि कलिता पान्थः कथं प्रोषितः प्राणाः संप्रति मे कलङ्कमलिनास्तिष्ठन्तु वा यान्तु वा ॥'

मानकलहेन निर्गते भर्तरि तत्संगमसुखेनान्तरिता कलहान्तरिता ।

यथा—'उच्छ्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते निद्रा नैव न दृश्यते प्रियमुखं नक्तं दिनं रुद्यते । अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथा(थो)पेक्षितः सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥'

उचिते वासके प्रगुणीकृतसर्वोपकरणा वासकसज्जा ।

यथा—'कस्तूरीं परिमर्दय प्रियसखि श्रीखण्डमत्रानय मालां गुम्फ विधेहि केलिशयनं सज्जं प्रदीपं कुरु । संप्रत्येष्यति वल्लभो मम गृहे स्नेहैकपात्रं यतः प्राचीनाचलकाननानि भजते देवस्तमीवल्लभः ॥'

चिरयति प्रेयसि विरहेणाकुलिता विरहोत्कण्ठिता ।

यथा—'किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः । इत्यालोच्य मृगीदृशा करतले [1]संस्थाप्य वक्त्राम्बुजं दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥'

---

१. 'विन्यस्य' इति साहित्यदर्पणे.

केनापि कारणेन संकेतमनागतेन प्रियेण वञ्चिता विप्रलब्धा ।

यथा—'यत्संकेतगृहं प्रियेण कथितं संप्रेक्ष्य दूती स्वयं तच्छून्यं सुचिरं निषेव्य सुदृश पश्चाच्च भग्नाशया । स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभिर्भूमावक्षरमालिकेव रु दि(रचि)ता दीर्घं रुदन्त्या शनैः ॥'

या स्मरार्ता कान्तं स्वयमभिसरति तमभिसारयति वा साभिसारिका ।

यथा—'निशा वा वृष्टिर्वा तिमिरमथ वा गर्जिरथ वा तडिद्वा यंको(पङ्को) वाभिन वसरितां श्रेणिरथ वा । यथेष्टं चेष्टन्तां यदि न दयितः प्रेमविमुखः प्रदीपः स्नेहाढ्यो न खलु शलभौघैर्विरमति ॥'

अन्यत्र भर्तरि त्रिरात्रमुषिते खण्डिता । यदाह—'निद्राकषायमुकुली कृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोऽपि गृह मेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः ॥'

यथा—'नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम् । प्रति दिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥'

ईर्ष्यायाः प्रतिकारणं सपत्नी नायिका ।

यथा रुक्मिण्या सत्यभामा, वासवदत्तायाः सागरिका, गौर्या गङ्गा च । योपिद्गुणान च लीलादीनां ग्रन्थगौरवभयान्नात्र विस्तरः ॥

अथ दश कामावस्था आह—

अभिलाषचिन्तास्मृतिगुणकीर्तनोद्वेगप्रलापोन्मादव्याधिजडतामरणाख्य दशावस्थाः । स्त्रीपुंसयोः परस्परमालोकनालापादिना अनुक्रमेण भवन्ति

अथ कालाद्यौचित्यमाह—

तत्रानाद्यन्तः सुषमदुःषमादिद्वादशारचक्रपरिवर्तनेन कालो मन्तव्यः स च काष्ठादिभेदभिन्नः । तद्यथा—पञ्चदश निमेषाः काष्ठा । त्रिंश त्काष्ठाः कला । पञ्चदश कलाः घटिका । द्विघटिको मुहूर्तः । त्रिंशन्मु हूर्तोऽहोरात्रः । तत्र चैत्राश्वयुजोर्मेषतुलासंक्रान्तौ समरात्रिंदिवम् । चैत्रा त्परं मौहूर्तिकी दिनवृद्धिर्निशाहानिश्च । मासः परावधिः । ततः प मौहूर्तिकी दिवसहानिर्निशावृद्धिः । अश्वयुजः परतः पुनस्तदेव विपरीतम्

१. तथा चोक्तं हेमाचार्येणाभिधानचिन्तामणौ—'अवसर्पिण्यां षडरा उत्सर्पिण्यां त ए विपरीताः । एवं द्वादशभिररैर्विवर्तते कालचक्रमिदम् ॥' इति. २. बहुवचनान्तमिदम् तेन मासत्रयमित्यर्थः.

पञ्चदशाहोरात्रः पक्षः । कृष्णशुक्लपक्षद्वयरूपो मासः । द्वाभ्यां द्वाभ्यां मासाभ्यामृतुः । षड्भिर्मासैरयनम् । तच्च वर्षादि दक्षिणायनम् । शिशिराद्यं तूत्तरायणम् । द्व्ययनः संवत्सरः । स च चैत्रादिरिति दैवज्ञाः । श्रावणादिरिति लोकयात्राविदः ।

तत्र श्रावणो भाद्रपदश्च वर्षाः । अत्र च शल्लकीशालशिलिन्ध्रयूथीलाङ्गलीकुटजकदम्बसर्जार्जुनकेतकीप्रभृतीनां पुष्पोद्गमः । इन्द्रगोपचकोरचातककुरङ्गदर्दुरोरगशिखण्डिमद्गुकङ्कप्रभृतीनां मदः । तथा बलाकासु गर्भाधानम् । वंशाङ्कुराणामभिवृद्धिः । रजः प्रशमः । नृपयात्रानिवृत्तिः । नीलीदलश्यामला वनभूमिः । वारासारक्षालनतो गिरीणां रम्यत्वम् । नदीनां जलपूरे रोधोभेदः । यतिचारनिवृत्तिः । कामिनीजनावलोकितकान्तमार्गत्वं स्वस्थानं प्रति चलितपान्थसार्थत्वम् । जलदनिकुरम्बान्धकारितनभस्तलत्वम् । विद्युदुद्योताद्योतमानदिङ्मुखत्वम् । घनगर्जिताद्वैडूर्यभूमिषु रत्नकन्दलोद्भेदः । कामिनीभिः सहोद्यानयात्रा हर्म्यशिखराग्रशय्या । मृगनाभिगर्भचतुःसमविलेपनम् । कृषीवलकुटुम्बिनीनिकुरम्बरासकाडम्बरो दूर्वाष्टमी पर्वोत्सवश्च वर्णनीयः । तथा दग्धोर्वरागन्धबन्धुर्घनतुषारकणवाही कदम्बकुसुमामोदमांसलः पाश्चात्यपौरस्त्य उत्तरो वायुः ।

आश्विनश्च कार्तिकश्च शरत् । अत्र च कुररद्विरेफकारण्डवकादम्बकखञ्जरीटचक्रवाकसारसक्रौञ्चवृषभकुम्भिकमठबकोटशफरप्रभृतीनां मदोद्भेदः । पद्मकुमुदोत्पलकह्लारबन्धूकबाणासनकुङ्कुमशेफालिकासप्तच्छदकाशभाण्डीरसौगन्धिकमालतीनां कुसुमोद्भेदः । तथा मयूराणां मदापनोदः । हंसयूथागमनम् । अगस्त्योदयात्ययः । प्रसादः । मुक्ताशुक्तिगर्भाधानम् । तरुश्टङ्गत्यागो नभःप्रसत्तिः । सुरवीथीदर्शनम् । शुभ्राभ्रखण्डमण्डितमस्त्व(नभश्च)रमण्डलं धवलतमचन्द्रिकावभासमाननिशामुखत्वम् । महानवम्यां निखिलास्त्रपूजोत्सवः । वाजिभटद्विपानां नीराजनविधिः । नृपाणां यात्रोद्यमः । मार्गेषु पङ्कशोषः । भास्करकराणां दुःसहत्वम् । माधवप्रबोधः । केदारेषु शालिपाको गोपीगीतयश्च । परिपाकापन्नैर्वारुकगन्धोद्गमः । जरत्त्रपुसीफलसौन्दर्यं कृषीवलगेहाजिरेषु चलद्दलयावलीवाचालभुजलतोल्लासितमुशलोच्छलितकलमशालिणि(नि)ण(?)कगन्धवन्धुरत्वं नदीपूरप्राचुर्यापगमश्च वर्णनीयः । वायुश्चात्रानियतदिक्कः ।

मार्गशीर्षः पौषश्च हेमन्तः । अत्र च कुन्दमचकुन्दलवलीफलिनीरोध्रपुंनागानां पुष्पोद्गमः । भ्रमरसर्पमयूरादिजीवानां मदापनोदः । कामिनीनां कुङ्कुमसिक्थकगन्धतैलाद्युपचारः । सर्षपकन्दलवराहवन्ध्रप्रभृतिशाकप्राचुर्यम् । दध्नां संनद्धरसता । कामिनीकुचानां कवोष्णता । कोष्णाम्भसा स्नानविधिः । दुर्भगाणामपि गाढतराङ्गपरिष्वङ्गः । व्याघ्रीणां प्रसूतिः । नदीपुलिनेषु गोधूमयवादिधान्योद्गमः । सरः कूपपयसां कवोष्णता । धान्यपरिपाकपेशला बहिर्भूमयः । लवणानां पाकः । पत्रिप्रभृतिजन्तुयात्रोद्यमहानिर्वैश्वानरप्रियत्वम् । कर्कन्धूनागरङ्गफलानां पाकोद्रेकः । पुण्ड्रेक्षुखण्डानां रसपरिपूर्ति(?)र्मन्दिरगर्भ-

शय्या। उत्तुङ्गतरपीवरपयोधरबन्धुरमधुरसुन्दरीभुजपञ्जरान्तरसेवनं च वर्णनीयम्। वायुश्चात्रोदीच्यः पाश्चात्यो वा वर्णनीयः।

माघः फाल्गुनश्च शिशिरः। अत्र सर्वं हेमन्तवद्वर्णनीयम्। विशेषतश्च मातङ्गहरिण वराहमहिषाणामुत्कर्षः। कुङ्कुमगन्धतैलादिसाध्यः प्रचण्डो मरुत्। विचित्रसुरतोपभोगरम्याश्च यामिन्यः। दन्दह्यमानकालागरुधूपधूमस्तोमेषु स्पृहा। सुरतसंमर्दनिपीतशीताः पादप्रान्तपुञ्जीकृततल्पपटानां यूनां शयनावस्थानम्। चन्दनेष्वरुचिः पयसामतिशायि शैत्यम्। तुहिनानलयोर्दाहात्मकत्वेनाभेदः। दुर्भगासुभगयोरालिङ्गनेन विशेषः। शशिभास्करयोः शैत्येन समता। मरुबककुन्देष्वेव पुष्पस्थितिः। सिद्धार्थयष्टिसूचीनां परिपाकपेशलत्वम्। औदीच्यपवमानस्त्यानीभूतपानीयपटलान्तरनिलीनदीनमीनासु नालावशेषनलिनीवनो दीनमधुकरझङ्कारसंकारमुखरितदिङ्मण्डलासु वापीष्वनादरः। करीषाग्निसमीपशयितदयितकुटम्बकत्वं च वर्णनीयम्।

चैत्रवैशाखौ वसन्तः। अत्र च शुकसारिकाहारीतमधुव्रतदात्यूहपुंस्कोकिलादीनां मदः सहकारकर्णिकारकाञ्चनारकोविदारसिन्दुवाररोहीतककेतककिरातमधूकमोचामाधवीदमनकाञ्चनकुरबकतिलकाशोकबकुलगूवाकविचकिलनालिकेरहिन्तालपाटलीकिंशुकखर्जूरताडताडीप्रभृतिद्रुमाणामुद्भेदः। तत्र प्रत्युद्यानमान्दोलकक्रीडा पुष्पावचयो मधुपानं स्मरपूजाप्रक्रमो गौरीचरितगानं चम्पकपुष्पाभरणानि प्रत्यमरमन्दिरं यात्रोत्सवो (व्यात्यु)चारुचन्दनाङ्गरागो धौतधवलवसनसेवनं जगज्जनजिगीषुमकरध्वजमहाराजविजययात्राडिण्डिमायमानकोकिलकुलकलकलकलोद्यानरामणीयकं वर्णनीयम्। वायुश्चात्र करिकलभदशनोद्भिद्यमानचन्दनद्रुमामोदमेदुरस्तरलितकेरलीधम्मिल्लबन्धो नागवल्लीवेल्लनपटुर्मानिनीमानतुङ्गमतङ्गजः पञ्चमप्रपञ्चविपञ्चनाचतुरो दाक्षिणात्यः।

ज्येष्ठाषाढौ ग्रीष्मः। अत्र हि नवमालिकाकाशिकाशिरीषकाञ्चनकेतकीधातकीखर्जूरजम्बुपनसप्रियालपूगीफलनारिकेलप्रभृतीनां पुष्पफलोद्भेदः। करभसरभरासभप्रभृतीनां मदोद्भेदः। नदीसरःकूपादिषु निरम्भस्त्वम्। सक्तुधानैर्वारुषु पानकेषु रतिः। पान्थपूर्णाः प्रपाः। प्रातः सायं च वहमानमार्गत्वम्। कायमानेषु माध्याह्निकी निद्रा। दिवसावसाने स्नानविधिः। रात्रिशेषे सुरतक्रीडा। चन्दनादिशीतलद्रव्यसेवा। निशासु चन्द्रकरनिषेवणम्। उत्तुङ्गसौधशृङ्गाग्रविनिर्मिते विशालवातायनविवरविहरमाणजगत्प्राणनिर्वाप्यमाणघर्मत्वम्। सहकारभङ्गास्वादः। तालवृन्दजनितोदबिन्दुवृष्टिसरःस्थलस्थायिस्थूलमुक्ताफलहारप्रायाभरणत्वम्। जलार्द्रोपवनजलक्रीडापाटलापरिमलवहलितशीतलजलोपभोगो विविधविचकिलस्रज एकदेशोपविष्टवैणिकविपञ्च्यमानवसन्तध्वनिश्रवणं सशर्कराघृतदुग्धपानं मलयजरसदिग्धोद्धुरपयोधरमधुरवधूविविधविधीयमाननिधुवनविधिविधीयमानधृतघनधर्मत्वं वर्णनीयम्। तथा पच्यन्त इव भूतानि, कम्पन्त इव तोयानि, तप्यन्त इव पांसवः, आध्मायन्त इव पर्वताः, सेवन्तो मृगदृष्टिकाकीर्णा वनभूमिः, सर्वतोवहदरघट्टघटीयन्त्रचीत्कारमुखरीक्रियमाणमध्यान्युद्यानानि, करवीरकपुष्पिणी स्थलभूमिः। चीरी-

नादवन्तो वनान्ताः । दाधिकाभ्यवहारः । पङ्कान्तर्लुठनाव्यग्रं कोलकुलम् । रोमन्थमन्थरमुखमहिषीमण्डलमथ्यमानपानीयस्थानम् । लोलज्जिह्वाः समग्रश्वापदसंदोहाः । पक्षिणामंशदेशप्रकर्षो वर्णनीयः । वायुश्चात्र तरुणतरतरणिकिरणसंपर्ककर्कशः शर्कराकणवाही अङ्गारप्रकरं किरन्निव कुतूहलकणान् वर्षन्ति वातिसारितजगज्जन्तुजातदाहडम्बरो नैर्ऋतोऽनियतादिक्षिपो वा(?) वर्णनीयः । वमुरवस्थश्च ॥

ऋतोः संधिः । शैशवं प्रौढिरनुवृत्तिश्च ।

तत्र शिशिरवसन्तयोः संधिर्यथा—'विंबुद्दे मयणं नदिंति वहलो नो गन्धतिल्लायरा वेणीयो विरयं तिलिंति न तहा अंगंमि कुप्पासयं । जंबाला मुहु कुंकुमं मिवयणे विद्दंति डिल्लायरा संमत्ते शिशिरं विणिज्जिय बला पत्तो वसंतस्य उ ॥' वसन्तस्य शैशवं तथा—'गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवाश्छायामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः । किं च त्रीणि जगन्ति जिष्णुदिवसैर्द्वित्रैर्मनोजन्मनो देवस्यापि चिरेप्सितं यदि भवेदभ्यासवश्यं धनुः ॥' प्रौढिर्यथा—'संपिण्डीकृतजीर्णजीरककणाश्रेणिश्रियः केशरान्संनद्धं परितो निरन्तरदलद्रोणीनिवेशैस्त्रिभिः । प्रीतभ्रान्तमधुव्रती चलपितंस्तं च स्तिभीसंकटे गन्धग्राह्यमबाह्यवृत्ति वलति क्रीडावने केतकम् ॥' वर्षासु ग्रीष्मलिङ्गानुवृत्तिर्यथा—'खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् । गन्धं मुञ्चति सिक्तलाजसदृशं वर्षेण दग्धा स्थली दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥' इदमन्यच्च यद्यथोक्तं कविसमयप्रसिद्धं तत्तथैव निबध्नीयात् । अन्यथा तु प्रकृतिव्यत्ययो नाम दोषः ॥

विभावानुभावयोः क्लेशेन यत्र व्यक्तिर्भवति सा विभावानुभावक्लेशव्यक्तिः ।

यथा—'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः । इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥' अत्र रतिपरिहारादीनामनुभावादीनां करुणादावपि संभवात्कामिनीरूपो विभावो यत्नप्रतिपाद्यः । यथा च—'कर्पूरधूलिधवलद्युतिदूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः । लीलाशिरोंशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥' अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्याभिभवा अनुभावा पर्यवसायिनः स्थिता इति कष्टकल्पना ॥

अतिप्रसङ्गेन व्यावर्णनं पुनः पुनर्दीप्तिः ।

यथा बालरामायणे उन्मत्तदशाननेऽङ्के(?) पुनः पुनश्चर्व्यमाणो विप्रलम्भो रस उपभुक्तमाल्यवच्च वैरस्यमाकलयति ॥

अकाण्डे विस्तरोऽकाण्डप्रथनम् ।

यथा कर्पूरमञ्जर्यां द्रुमदोहददानादिव्यावर्णनम् ॥

असमयत्यागोऽकाण्डच्छेदः ।

यथा वीरचरिते द्वितीयाङ्के राघवभार्गवयोः परमकाष्ठाधिरूढे वीररसे कङ्कणमोचनाय गच्छामीति रसान्तरेण रसच्छेदः ॥

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनमङ्गातिविस्तरः।

यथा कादम्बर्यां रूपविलासेत्यादिना महाविप्रलम्भबीजेऽप्युपक्षिते तदनुपयोगिनीषु अटवीशबरेशाश्रममुनिनगरीनृपादिवर्णनास्वेतिम(?)प्रसङ्गाभिनिवेशाः। यथा च शिशुपालवधे उत्क्षिप्तप्रतिद्वन्द्विविजयबीजेन वीररसानुबन्धेऽपि प्रवर्तमाने, तदन्यश्शृङ्गाराङ्गभूतर्तुवनविहारपुष्पावचयजलकेलिमधुपानसुरतचन्द्रोदयादिप्रभातादिवर्णनायासत्यासक्तिः ॥

प्रधानस्याङ्गिनोऽनुबन्धेऽङ्गयननुसंधानम्।

यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमनेन सागरिकाया विस्मृतिः ॥

अनङ्गस्य रसानुपकारकस्य वर्णनमनङ्गाभिधानम्।

यथा कर्पूरमञ्जर्यां नायिकया स्वामिना च वसन्तवर्णनमादृत्य वन्दिवर्णने तस्य राज्ञः प्रशंसनम् ॥

इति महाकविश्रीवाग्भटविरचितायामलंकारतिलकाभिधानो(?)लंकारः ॥

नव्यानेकमहाप्रबन्धरचनाचातुर्यविस्फूर्जित-
स्फारोदारयशःप्रचारसततव्याकीर्णविश्वत्रयः।
श्रीमन्नेमिकुमारसूनुरखिलप्रज्ञालुचूडामणिः
काव्यानामनुशासनं वरमिदं चक्रे कविर्वाग्भटः ॥

KÂVYAMÂLÂ. 50.

# THE ALANKÂRAS'EKHARA

OF

## KES'AVAMIS'RA.

EDITED BY

PAṆDIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department, Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGAR" PRESS.

BOMBAY.

1895.

Price 9 Annas.

काव्यमाला. ५०.

श्रीमाणिक्यचन्द्रकारितः

श्रीकेशवमिश्रकृतः

# अलंकारशेखरः ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।



स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।



१८९५







मूल्यं ९ आणकाः ।

# काव्यमाला।

## श्रीमाणिक्यचन्द्रकारितः श्रीमत्केशवमिश्रकृतः

## अलंकारशेखरः।

प्रथमो मरीचिः।

प्राणान्कृशोदरीणां राधानयनान्तसर्वस्वम्।
तेजस्तमालनीलं शरणागतवज्रपञ्जरं वन्दे॥
स्वप्रकाशचिदानन्दमयाय परमात्मने।
अविद्यानिबिडध्वान्तभास्कराय नमो[1]ऽन्वहम्॥
ग्रन्थाः काव्यकृतां हिताय विहिता ये सप्त पूर्वं मया
ते तर्कार्णवसंप्लवव्यसनिभिः शक्याः परं वेदितुम्।
इत्यालोच्य हृदा मदालसवधूपादारविन्दक्वण-
न्मञ्जीरध्वनिमञ्जुलोऽयमधुना प्रस्तूयते प्रक्रमः॥
आसीत्प्रत्यर्थिपृथ्वीरमणकमलिनीवृन्दहेमन्तमासः
कीर्तिभ्राजत्सुशर्मान्वयकुमुदवनीयामिनीजीवनाथः।
राजद्राजन्यराजीमुकुटमणिगणप्रोल्लसत्पादपीठः
प्रोद्यत्साम्राज्यलक्ष्मीशिथिलितनहुषो **रामचन्द्रो**ऽवनीन्द्रः॥
मित्राणि प्रतिपालयंस्त्रिजगतीं कीर्तीन्दुना ह्लादय-
ञ्शात्रूणां हृदयं प्रतापदहनै रात्रिंदिवं ज्वालयन्।
सर्वस्वेन कृतार्थयन्द्विजगणान्देवान्मखैस्तोषय-
न्नेष प्रौढमनाश्चिराय बुभुजे सप्तार्णवां मेदिनीम्॥
सूत्रामोद्दाम[2]ढिल्लीपरिवृढविलसत्काबिलक्षोणिभर्त्रोः
प्रक्रान्ते प्रौढयुद्धे समदलयदसौ कोटिशो वैरिवीरान्।

---

१. 'नमाम्य' क. २. 'दिल्ली' ख.

पश्चान्मांसास्थिमेदःकलुषितवसुधां प्रोज्झ्य तांश्चाकलय्य
द्यां यातान्वैरिवर्गान्दिवमपि सहसा जेतुकामो जगाम ॥
क्षीराम्भोधेः शशीव श्रुतिरिव वदनाद्वेधसो रामचन्द्रा-
दस्मादुद्यत्प्रतापः समजनि सुमना धर्मचन्द्रो नरेन्द्रः ।
यस्याद्यापि प्रसन्नस्मितसुभगमुखाः स्विद्यदञ्चत्कपोला
रोमाञ्चस्तम्भभव्यास्त्रिदशयुवतयो हन्त गायन्ति कीर्तीः ॥
निष्क्रान्तं सदनादुदैक्षि भगवानम्भोजिनीवल्लभ-
स्ते वाताः परिशीलिताः कमलिनीसौरभ्यमेदस्विनः ।
विश्रान्तं गिरिकाननेषु निबिडच्छायेषु भाग्योदया-
दित्थं स्मेरमुखाः स्तुवन्ति विपदं यद्वैरिवामभ्रुवः ॥
प्रत्यर्थिभूपतिपरिग्रहराज्यलक्ष्मी-
धम्मिल्लमाल्यसुरभीकृतपाणिपद्मः ।
तस्मादजायत समस्तगुणाभिरामो
माणिक्यचन्द्र इति राजकचक्रशक्रः ॥
काव्यालंकारपारंगममतिरखिलक्ष्माभृतां चक्रवर्ती
सर्वेषामस्तु काव्ये मतिरतिनिपुणेत्याशये संनिवेश्य ।
वेदान्तन्यायविद्यापरिचयचतुरं केशवं संनियुज्य
श्रीमन्माणिक्यचन्द्रः क्षितिपतितिलको ग्रन्थमेनं विधत्ते ॥
बहुदोषोऽपि विदोषः क्रियते सुजनेन बाण इव हरिणा ।
गुणवदपि निर्गुणीयति दुर्जनतो मूषिकात इव पुस्तम् ॥
परोद्वेगे परानन्दे खलसज्जनयोर्द्वयोः ।
स्वभाव एव शरणं विषपीयूषयोरिव ॥

अलंकारविद्यासूत्रकारो भगवाञ्शौद्धोदनिः परमकारुणिकः स्वशास्त्रे प्रवर्तयिष्यन्प्रथमं काव्यस्वरूपमाह—

**काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत् ।**

आदिपदेनालंकारपरिग्रहः । तथा च तदुभयान्यतरवत्वं लक्षणम् ।

१. 'त्त्वं वा' ख.

अन्यतरत्त्वं च तदन्यान्यत्वम्। सुखविशेषसाधनत्वं वा लक्षणम्। समुदायार्थशून्येऽपि तदुभयमस्त्येवेति वृद्धाः। अदृष्टद्वारा तद्धेतुशब्देऽतिव्याप्तिराह—श्रुतमिति। सदिति शेषः। सुखे वैजात्यं सर्वानुभवसिद्धमेव॥

केचित्तु—

'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि।'

इत्याहुः॥ 'रसप्रतिपत्तिद्वारा सुखविशेषसाधनं वाक्यं **काव्यम्**' इत्यपरे॥ केचित्तु—'पदावली **काव्यम्**'। न तु निर्दोषगुणवदादि, काव्यदोषाणामपरिगणनापत्तेः। न च—दोषाभावघटितकाव्यत्वज्ञानार्थमेव प्रतियोगिपरिगणनम्—इति वाच्यम्, 'न चैतत्काव्यं दुष्टम्' इत्यनुद्भावनापत्तेः 'इदं काव्यमेव न' इत्यभिधानस्यैवोचितत्वात्—इत्याहुः। तन्न। तवायं हेतुराभास इतिवदुपपत्तेः। व्याप्तिविशिष्टपक्षधर्मस्यैव हेतुत्वात्। न च हेतुत्वेनाभिमत इति वाच्यम्॥ तुल्यत्वादिति॥ वस्तुतस्तत्काव्यं पृथगेव यत्र दोषगुणादिचिन्ता। नहि। दुष्टं शरीरं शरीरमेव न भवति, इत्यन्ये॥ कीर्त्यादिरूपफलसाधनता तु विशिष्टस्य। यदाह—

'साधुशब्दार्थसंदर्भं गुणालंकारभूषितम्।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये॥'

आहुश्च—

'निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम्।
रसान्वितं कविः कुर्वन्प्रीतिं कीर्तिं च विन्दति॥' इति॥

प्रवृत्त्यौपयिकं फलमाह—

**हिताय सुकविः कुर्यात्**

सुकवेरेव हितम्, अन्यस्य तु प्रतिकूलं तत्॥

उक्तं च—

'गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ताः पुनर्गोत्वं प्रयोक्तुः सैव शंसति॥

---

१. 'साधनं' ख. २. 'शून्यत्वे' ख. ३. 'प्रतिपत्तिगुणद्वारा' ख. ४. 'वस्तुतस्तु का' क-ख. ५. 'गुणदोषादि' क. ६. 'कूलमिदमिति भावः' क; 'प्रातिकूलमिति तन्न' ख. ७. 'तदुक्तम्' क.

श्लाघ्यः पामरपरिषदि कवयति दोलीककर्तापि।
यस्मै स्पृहयति विद्वाँस्तत्काव्यं काव्यमित्याहुः॥
अर्थैः कृतार्थयन्त्येके घटनापटवः परे।
उभयत्र प्रवीणा ये त एव कवयो मताः॥'

हितमाह श्रीपादः—

'लाभः पूजाख्यातिर्धर्मः कामश्च मोक्षश्च।
इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य॥'

इष्टेति गोवृषन्यायात्॥

आहुश्च—

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥'

वृद्धास्तु—

'श्रोतॄणां द्राग्महानन्दः स स्वस्मिन्नाभिमानिकः।
तत्कालफलमेतावत्क्रमात्कीर्तिधनादिकम्॥'

नन्वेवं सर्वः सुकविरेव स्यात्। अत आह—

तद्धेतुः प्रतिभादिकम्॥ १॥

तदाह—

'प्रतिभा कारणं तस्य[1] व्युत्पत्तिस्तु विभूषणम्।
भृशोत्पत्तिकृदभ्यासः[2] काव्यस्यैषा व्यवस्थितिः॥'

व्युत्पत्तिर्नानातन्त्रज्ञानम्॥

आहुश्च—

'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे॥'

शक्तिः पुण्यविशेषः। स एव प्रतिभेत्युच्यते।

'व्युत्पत्तिः शक्तिरभ्यासस्त्रितयं काव्यसाधनम्।'

इत्यपि॥

---

१. 'यस्य' क. २. 'कृतोऽभ्यासः' क.

श्रीपादस्तु—

'परिशीलितकाव्यवर्त्मनां कविसंसर्गविशुद्धचेतसाम्।
परिभावयतामनुक्षणं कविता पाणितले निषीदति॥'

वृद्धास्तु[1]—

'नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसंपदः॥
मनःप्रसत्तिः प्रतिभा प्रातःकालेऽभियोगिता।
अनेकशास्त्रदर्शित्वमित्यर्थालोकहेतवः॥
द्वित्रि[2]कोषपरिज्ञानं द्वित्र[3]व्याकरणज्ञता।
छन्दोविद्याप्रवीणत्वं काव्येऽवश्यमपेक्ष्यते[4]॥'

आदिपदात्प्रकारज्ञानम्। तथा हि—सा खल्वेषा भारती सुरसरिदिव सहस्रमुख्यपि संक्षेपेण चतुर्धा प्रवर्तते। तदाहुः—

'संस्कृतं प्राकृतं चैव पैशाची मागधी तथा।
विद्याश्चतस्र एवैताः संक्षेपात्काव्यवर्त्मनः॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः।
पैशाचीं तु[5] पिशाचाद्या मागधीं हीनजातयः॥
चतसृष्वपि मूर्धन्यं संस्कृतं मुनयो विदुः।
गद्यं पद्यं च मिश्रं च तत्रिवैव व्यवस्थितम्।
गद्यमुत्कलिकाप्रायं पद्यगन्धीति च द्विधा॥
तत्रापि पद्यं तदपि वृत्तकं वर्णमात्रयोः।
समवैषम्यभेदेन तदानन्त्याय कल्पते॥'

दण्डिनस्तु—

'तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा।
अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम्॥

१. ख-पुस्तके नास्ति. २.-३. 'द्वित्रि' ख. ४. 'क्षते' ख. ५. 'च' ख.

प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा ।
अपभ्रंशश्च यच्छुद्धं तत्तद्देशेषु भाषितम् ॥
संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादिकम् ।
आसारादि त्वपभ्रंशो नाटकादि तु मिश्रकम् ॥
यथामति यथाशक्ति यथौचित्यं यथारति ।
कवेः पात्रस्य चैतासां प्रयोग उपपद्यते ॥'

इत्यलंकारशेखर उपक्रमरत्ने काव्यस्वरूपफलकारणमरीचिः ॥ १ ॥

द्वितीयो मरीचिः ।

शरीर[1]कल्पस्य काव्यस्य रूपान्तरमाह—

**रीतिरुक्तिस्तथा मुद्रा वृत्तिः काव्यस्य जीवितम् ।**
**त्रिविधस्यापि दोषास्तु त्याज्याः श्लाघ्या द्वये गुणाः ॥ १ ॥**
**अलंकारस्तु शोभायै रस आत्मा परे मनः ।**

द्वय इति शब्दार्थभेदात्त्रितयान्वयि । परे रसदोषभावानुकूलवर्णादयः ।

तत्र रीतिमाह—

**तत्तद्रसोपकारिण्यस्तत्तद्देशसमुद्भवाः ॥ २ ॥**
**पद्येषु रीतयो गौडी वैदर्भी मागधी तथा ।**

तदेतत्पल्लवयन्ति श्रीपादाः—

'गौडी समासभूयस्त्वाद्वैदर्भी च तदल्पतः ।
अनयोः संकरो यस्तु मागधी सातिविस्तरा ॥
गौडीयैः प्रथमामध्यावैदर्भैर्मैथिलैस्तथा ।
अन्यैस्तु चरमा रीतिः स्वभावादेव सेव्यते ॥'

तत्र गौडी यथा—

'उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥'

---

१. 'शरीरि' ख.

वैदर्भी यथा—

'मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥'

मागधी यथा—

'पाणौ पद्मधिया मधूककुसुमभ्रान्त्या पुनर्गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥'

इयं बहुधा विस्तृतमन्यत्र ॥

**भोजराजस्तु—**

'शस्ता विदग्धगोष्ठीषु वैदर्भी रीतिरुत्तमा ।
मागधी मध्यमा गौडी गौडस्त्रीकलहायते ॥'

यदाह—

'ब्रह्मन्विज्ञापयामि त्वां स्वाधिकारजिहासया ।
गौडस्त्यजतु वा गाथामन्या वास्तु सरस्वती ॥'

उक्तिं विभजते—

**लोकच्छेकार्भकोन्मत्तभेदादुक्तिश्चतुर्विधा ॥ ३ ॥**

तत्र लोकोक्तिर्यथा—

'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान्गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥'

छेको विदग्धस्तस्योक्तिर्यथा—

'योऽतिदीर्घासिताक्षस्य विलासवलितभ्रुवः ।
कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥'

अत्र 'नृपशवे नमः' इति ॥

---

१. 'मनीषितामर्चगृहेषु देवतां' क. २. 'संरक्षसि' क. ३. 'चलित' ख. ४. 'नास्ति' ख.

अर्भकोक्तिर्यथा—

'स किं स्वर्गतरुः कोऽपि यस्य पुष्पं निशाकरः।
मातस्ते कीदृशा वृक्षा येषां मुक्ताफलं फलम् ॥'

अत्र पुष्पं निशाकरः, फलं मुक्ताफलमिति ॥

उन्मत्तोक्तिर्यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ॥'

अत्र विरहोन्मत्तस्यैवमभिधानम् ॥

विन्यासविशेषवशाद्यत्राभिप्रायविशेषलाभेन मुदो हर्षस्योत्पत्तिः सा मुद्रा॥

तामिदानीं विभजते—

'मुद्रा पदस्य वाक्यस्य विभक्तेर्वचनस्य च ॥'

तत्र[1] पदमुद्रा यथा—

'निर्माल्यं नयनश्रियः कुवलयं, वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्नासितस्याञ्चलम्।
संगीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः
सर्वाकारमहो विधेः परिणतं विज्ञानशिल्पं चिरात् ॥'

अत्र निर्माल्यादि पदानां गौणवृत्त्याभिप्रायविशेषान्मुत्प्रदायिता ॥

वाक्यमुद्रा यथा—

'रामे तटान्तवसतौ कुशतल्पशायि-
न्यद्यापि नाम भवतो भगवन्ननास्था।
स्मृत्वा तदेहि सगरं च भगीरथं च
दृष्ट्वाथ वा मम धनुश्च शिलीमुखाँश्च ॥'

अत्र सगरं च भगीरथं चेत्यादिवाक्यस्य प्रागुपकाराभिप्रायेण दृष्ट्वा यावदपकारसामर्थ्याभिप्रायेण निवेशनान्मुत्प्रदायिता ॥

---

१. 'तासु' क.

विभक्तिमुद्रा यथा—

'श्रियं प्रदुग्धे विपदो रुणद्धि यशांसि सूतेऽविनयं प्रमार्ष्टि।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः॥'

अत्र प्रदुग्ध इत्यादि तिङ्विभक्तीनां द्वयोर्द्विकर्मकयोर्निवेशनान्मङ्गल्यामङ्गल्यार्थकानामपि मङ्गल्य एवाभिप्रायवशाद्विभक्तिमुद्रा॥

वचनमुद्रा यथा—

'विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां गृहेषु सविता च गुरुर्वयं च॥'

अत्र वयमिति वचनेन सवितुरहं महानित्यभिप्रायाद्वचनमुद्रा॥

'प्रयोजनं यथैतासां रसमैत्री च विस्तरः।
**तथालंकारसर्वस्वे** सप्रपञ्चमदर्शयम्॥'

इत्यलंकारशेखर उपक्रमरत्ने रीत्यादिबहिरङ्गत्रयमरीचिः॥ २॥

## तृतीयो मरीचिः।

अथ वृत्तिं विभजते—

**पदानां वृत्तयस्तिस्रः**

तिस्रो वृत्तयः पदानां भवन्ति, शक्तिर्लक्षणा व्यञ्जना चेति। तत्र—शक्तिरीश्वरेच्छा या संकेत इत्युच्यते। सा पदेषु प्रसिद्धैव॥ सा च—

'कोशव्याकरणाप्तोक्तिवाक्यशेषोपमादितः।
प्रसिद्धपदसंबन्धाद्व्यवहाराच्च बुध्यते॥'

लक्षणा शक्यसंबन्धः। सा च तात्पर्यानुपपत्त्या मुख्यार्थानुपपत्त्या वा प्रवर्तते॥ यथा 'निर्माल्यं नयनश्रियः' इत्यादौ निर्माल्यदासादिपदे॥

तृतीया वृत्तिर्व्यञ्जना यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।

मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

अत्राधमपदेन रन्तुं गतासीति व्यज्यते ॥

ननु 'रविरस्तं गतः' इत्यादौ तान्येव पदानि कथं श्रोतॄणां विचित्रबुद्धीरुत्पादयन्तीत्यत आह—

विचित्रसहकारिणाम् ।

तदेव हि पदं स्वरससमभिव्याहारप्रकरणतात्पर्यज्ञानादिरूपसहकारिभेदात्तत्तद्धियमुत्पादयति दण्ड इव गवाभ्याजनघटौ ॥

ननु शैक्त्यादिकमानुपूर्वीविशेषविशिष्टवर्णसमुदाये, तत्कथमेकदेशस्य बोधकतात आह—

स्वभाववैचित्र्यजुषाम्

विचित्रस्वभावानि खलु पदानि भवन्ति । क्वचिदेकदेशस्याद्यस्य बोधकता । यथा भीमसेनबलदेवादिपदादौ ॥ क्वचिच्चरमस्य । यथा—मतंगजवसुंधरा धराधरपदादौ । सा च तत्तत्पदस्मरणेन प्रकारान्तरेण चेत्यन्यदेतत् ॥ किं च कर्णावतंसपदवत् शक्यतावच्छेदकस्य पृथगुपादानेनापि न पौनरुक्त्यं भवति । यथा—करिबृंहितमयूरकेकादौ । क्वचित्—शक्यस्यापि । यथा—'उदयाचलकारागृहादौ । उदयपदस्य पूर्वाचले, कारापदस्य वन्दिगृहे शक्यत्वात् । किं च परस्परविरुद्धतया तिरस्कृततृतीयकोटिकमिवान्यतरप्रतिक्षेपे परस्यैव लाभं जनयति । यथा—'शीतेतरानुष्णकरा हिमांशोः' इत्यादौ 'अपांसुलानां धुरि कीर्तनीया' 'स नन्दिनीस्तन्यमनिन्दितात्मा' इत्यादौ प्रकर्षलाभवदित्यवधेयम् । किंचित्पदमनपेक्ष्यरूढिकम्, यथा—'सिंहादवाप द्विपदं नृसिंहः' इत्यादौ । किंचिच्चानपेक्ष्ययौगिकम्, यथा—क्षीराम्भोधेरित्यादौ, अन्यथानन्वयापत्तिः । किं च वामनयना वामोरुरिति भवति न तु वामवदना वामपाणिरिति । सर्वं चेदं क्वचिदेव पदे । अत उक्तं स्वभावेति ॥

१. 'शक्त्यादि' ख. २. 'पुनरुक्तत्वेऽपि' क.

तत्किं यद् व्यञ्जनापि पदमात्रवृत्तिरेव नेत्यत आह—

**व्यञ्जनार्थत्रयेऽपि च ॥ १ ॥**

शक्यलक्ष्यव्यङ्ग्यात्मक इत्यर्थः ॥ शक्यार्थस्य व्यञ्जकता यथा—

'अवलोकय निष्पन्दो बिशिनीपत्रे वको भाति।
निर्मलमरकतभाजनपरिस्थितो विमलशङ्ख इव ॥'

अत्र निष्पन्दशब्दस्यार्थेन क्रियाविरहेण वकगतमाश्वस्तत्वं व्यज्यते ॥

लक्ष्यार्थस्य यथा—

'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥'

अत्र विकासः पुष्पधर्मो मुखेऽनुपपन्न इति लक्षितेन प्रसृतत्वेन लोकोत्तर-रमणीयतात्मकातिशयो व्यज्यते ॥ एवमग्रेऽपि। व्यङ्ग्यार्थस्य यथा 'अव-लोकय—' इत्यादावेव व्यङ्ग्येनाश्वस्तत्वेन देशस्य संकेतयोग्यत्वं व्यज्यते ॥

**त्रिविधस्यापीति** ॥ उत्तममध्यमाधमात्मकस्य। तत्र—

वाच्यनिरूपितव्यङ्ग्यप्रकर्षाधारत्व**मुत्तमत्वम्**।' यथा—'निःशेषच्यु-तचन्दनम्' इत्यादौ वाच्यार्थापेक्षया व्यङ्ग्यार्थ एव झटिति चमत्कार-विशेषमारोहति ॥

वाच्यनिरूपितव्यङ्ग्यप्रकर्षानाधारत्वं **मध्यमत्वम्**।' यथा—

'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥'

अत्र वञ्जुलकुञ्जे दत्तसंकेता तरुणी न गतेति व्यज्यते। तच्च गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारकारित्वात् ॥

चमत्कृतिहेतुव्यङ्ग्यरहितत्व**मधमत्वम्**। यथा—

'वन्दामहे महेशानचण्डकोदण्डखण्डनम्।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥'

१. 'शङ्खशुक्तिरिव' ख. २. 'वशित' ख. ३. मंश' क. ४. 'वाच्या' ख. ५. 'त्कारि' ख.

अत्र व्यङ्ग्यः कोऽप्यर्थस्तादृशो नास्ति। अत्र सर्वत्र व्यञ्जनासु वक्तुरेव तात्पर्यं नियामकम्। तज्ज्ञानमेव बोधोपयोगि। तदभावादधममित्युच्यते। प्रपञ्चितं चेदं मयैव वाक्यरत्ने॥ ननु व्यञ्जना वृत्त्यन्तरमित्यत्र किं मानमिति। उच्यते—

'भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्मतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत्॥'

अत्र प्रकरणेन भद्रात्मन इत्यादि पदानां राज्ञि तदन्वययोग्ये चार्थेऽभिधानियन्त्रणेऽपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः॥ वस्तुतस्तु—

'अद्यारभ्य चिरं साधो निःशङ्कमिह संचर।
रेवाकुञ्जे मृगेन्द्रेण स दुष्टश्चाद्य घातितः॥'

अत्र भिक्षुकं प्रत्येवं वदन्त्याः प्रतिवेशिनं प्रति निःशङ्करत्यभिधानं स्फुटमिति॥ किं च रेवाकुञ्जस्य रतस्थानत्वं लभ्यते, सिंहबुद्ध्या परेण न गन्तव्यम्, सिंहस्तु वस्तुगत्या नात्येव तदेतद्व्यञ्जनां विना प्रकारान्तरेण लब्धव्यमित्याशङ्कैव नास्तीति[२]॥

इत्यलंकारशेखर उपक्रमरत्ने वृत्तिमरिचिः॥ ३॥

इति श्रीमहाराजाधिराजश्रीमाणिक्यचन्द्रकारिते श्रीकेशवमिश्रविरचितेऽलंकारशेखर उपक्रमरत्नम्॥ १॥

---

चतुर्थो मरीचिः।

'दोषास्त्याज्याः' इत्युक्तम्। युक्तं चैतत्॥ यदाह—

'दोषः सर्वात्मना त्याज्यो रसहानिकरो हि सः।
अन्यो गुणोऽस्तु मा वास्तु महान्निर्दोषता गुणः॥'

---

१. 'सर्वत्र वक्तु' ख. २. 'श्रीपादः' क.

दण्डी च—

'तदल्पमपि नोपेक्ष्यं काव्ये[1] दुष्टं कथंचन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन[2] दुर्भगम् ॥'

**दोषत्वं** च रसोत्पत्तिप्रतिबन्धकत्वम् । रसकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् इति यावत् ॥

अत्र प्रथमं पददोषानाह—

**कष्टाप्रयुक्तसंदिग्धव्यर्थाश्लीलाप्रतीतकाः ।**
**असाध्ववाचकौ दोषाः पदेऽष्टावेव भाषिताः ॥ १ ॥**

**कष्टं** श्रुतिकटु यथा—

'बर्हिनिर्ह्रादनार्हेऽस्मिन्काले जीमूतमालिनि ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभतां चिरात् ॥'

अत्र बर्हिनिर्ह्रादनकार्तार्थ्यादि शब्दाः ॥

**अप्रयुक्तं** तथाम्नातमपि कविभिर्नादृतम् । यथा—

'यतोऽयं दारुणाचारो न हन्ति सुरनिम्नगाम् ।
अतो मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा ॥'

अत्र हन्तीति गमने, दैवतशब्दः पुंसि कविर्न प्रयुक्तः ॥

**संदिग्धं** संदेहजनकम् । यथा—

'अपिधानेन हे वत्स किमर्थमिह वर्तसे ।
आरादेवास्ति स प्रायो यतस्ते भयमुत्थितम् ॥

अत्रापिधानाराच्छब्दौ ॥

**व्यर्थं** प्रकृतार्थानुपयुक्तम् । यथा—

'बिभर्ति यश्च देहार्धे प्रियामिन्दुं हि मूर्धनि ।
स वै देवः खलु त्वां तु पुनातु मदनान्तकः ॥'

अत्र च-हि-वै-खलु-तु-शब्दाः ॥

**अश्लील**मौज्ज्वल्याभाववत् । तदपि त्रिविधम्, अमङ्गलव्रीडाजुगुप्साभेदात् ॥ क्रमेणोदाहरणम्—

---

१. 'काव्यं' क. २. 'श्वित्रेणै' ख.

'विनाशान्मारुतेस्तस्य सुमहत्साधनोऽपि सन् ।
नासाग्रेण स सुग्रीवो वायुं त्यजति केवलम् ॥'

अत्र विनाशसाधनवायुशब्दाः ॥

**अप्रतीतं** स्वशास्त्रमात्रविरुद्धम् । यथा—

'त्रुटौ विश्रान्तिरित्येके पीलावस्तीति चापरे ।
त्वन्मध्यमाणिमा तन्वि न केनापि विभाव्यते ॥'

अत्र त्रुटिपीलुशब्दौ ॥

**असाधु** अनुशासनविरुद्धम् । यथा—

'शातोदरि कथंकारं मानमेतच्चिकीर्षति ।
मानिनीमानदलनो विजयत्येष चन्द्रमाः ॥'

अत्र मानमेतद्विजयतीति ।

**अवाचकं** प्रकृतार्थाशक्तम् । यथा—

'भूयोमत्तद्विरदगमनां हारकेयूरयुक्तां
पीनोत्तुङ्गस्तनभरनमन्मध्यभागाभिरामाम् ।
स्मेरोदञ्चन्नवकिसलयस्पर्धिताम्राधरोष्ठीं
लक्ष्मीमक्षिस्फुरितवदनामन्वहं संस्मरामि ॥'

अत्र लक्ष्मीपदमङ्गनायाः ।

**ग्राम्यं** त्ववाचकाश्लीलान्यतरान्तर्भावान्न पृथगिति ॥

इत्यलंकारशेखरे दोषरत्ने परदोषमरीचिः ॥ ४ ॥

---

पञ्चमो मरीचिः ।

अथेदानीमसाधारणान्वाक्यदोषानाह—

**न्यूनं विसंधि व्याकीर्णं समाप्तपुनरात्तकम् ।**
**भग्नः क्रमयतिच्छन्दो वाक्यगर्भमरीतिमत् ॥ १ ॥**
**अभिमृष्टविधेयांशं समुदायार्थवर्जितम् ।**
**विरुद्धमतिकृद्वाक्ये दोषा द्वादश कीर्तिताः ॥ २ ॥**

---

१. 'मरुत्' ख. २. 'पीलुर' क.

तत्र **न्यूनमन्वयबोधप्रयोजकपदशून्यम्** । यथा—

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने भजति मयि नाद्यापि कुरुषु ॥'

अत्र स्थितमित्यन्तरमस्माभिरिति, खिन्न इत्यस्मात्पूर्वमित्थमिति च दातुमर्हति ॥

**विसंधिः** संधिविरहो विरुद्धसंधिश्च । आद्योऽपि द्विविधः । ऐच्छिकः प्रगृह्यादिनिबन्धनश्च । ऐच्छिकः सकृदपि दोषः । उभयोरुदाहरणम्—

'मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।
पादपा उत्तमा उच्चा इदानीमेव पातिताः ॥'

चरमश्चतुर्विधः । अश्लीलः कष्ट उत्वप्राप्तविसर्गो[1] लुप्तविसर्गश्च । क्रमेणोदाहरणानि—

'ववुरिन्दीवरश्रेणिबान्धवा यत्र वायवः ।
मञ्जर्युद्गमगर्भासौ तवोल्युर्वी विधूयते ॥'
'धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥'

**व्याकीर्णं** व्यवहितान्वयम् । यथा—

'मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥'

अत्र 'तद्गम्यताम्, तद्विरचय' इत्यन्वये तदिति व्यवहितम् ॥

**समाप्तपुनरात्तकं** समाप्तौ प्रधानवाक्यार्थबोधे जाते पुनरुपात्तम् । यथा 'निर्माल्यं नयनश्रियः' इत्यादौ चिरादिति । यथा च—

१. 'उपहतविसर्गो' क.

'क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरध्वनिः।
तन्व्या कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः॥'

अत्र वेणुस्वन इति॥

**भग्नक्रमं** यत्रार्थः शाब्दो[1] वा क्रमेनास्ति। उभयं यथा—

'तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम्।
कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ॥'

**भग्नयतिर्**यथा—'रामे तटान्तवसतौ कुशतल्पशायिन्यद्यापि' इत्यादौ। अत्रावश्यकी पदशेषयतिर्नास्ति॥

**भग्नछन्दो** यथा—

'ततः परमोमित्युक्त्वा प्रतस्थे मुनिमण्डलम्।
भगवानपि संप्राप्तः प्रथमोद्दिष्टमाश्रमम्॥'

अत्र पञ्चमं लघु कर्तुमर्हति॥

यत्रापर्यवसितवाक्यमध्ये तदनपेक्षवाक्यान्तरमनुप्रविशति **तद्वाक्यगर्भम्**। यथा—

'योग्यो यस्ते पुत्रः सोऽयं दशवदन लक्ष्मणेन मया।
रक्षैनं यदि शक्तिर्मृत्युवशं नीयते विवशः॥'

अत्र तृतीयपादगर्भता॥

**अरीतिमत्** यां रीतिमुपक्रम्य प्रवृत्तं तद्भङ्गवत्[2]। यथा—

'गाहन्तां महिषा निपानसलिलं शृङ्गैर्[3]मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहततिभिर्[4]मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमसद्धनुः[5]॥'

१. 'शब्दो वा क्रमेण' ख. २. 'पद' क. ३. 'शृङ्गे' ख. ४. 'पतिभिः' ख. ५. 'बद्ध' ख.

अत्र तृतीयपादेऽनभिहितकर्त्रादिरातद्भङ्गः।

**अभिमृष्टविधेयांशं** प्राधान्यानिर्दिष्टविधेयकम्। यथा—

'वपुर्विरूपाक्षमलक्ष्यजन्मता[1] दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥'

अत्र जन्मोद्दिश्यालक्ष्यत्वं[2] विधेयम्। तच्च समासप्रविष्टतया न प्राधान्येन निर्दिष्टम्॥

**समुदायार्थवर्जितं** यथा—

'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन्नुमायां लशुनस्य कोऽर्थः॥'

अथ **विरुद्धमतिकृत्**—

'कुबेरस्येव भगवान्भवानीरमणो हरः।
अकार्यमित्रमेकोऽसौ वासुदेवः किरीटिनः॥'

अत्र भवानीरमणाकार्यमित्रशब्दौ विरुद्धां मतिं कुरुतः॥

'**असमर्थसमासो**[3] दोषान्तरम्'[4] इति गोवर्धनः। यथा[5]—

'प्राक्प्रत्यक्पृथिवीभृतोः परिषदि प्रख्यातसंख्यावता-
महायाद्भुततर्ककर्कशतया विच्छिद्य विद्यामदम्।
ये केऽप्युत्कलभूपते तव सभासंभाविताः पण्डिताः
पत्रं श्रीजयदेवपण्डितकविस्तन्मूर्ध्नि विन्यस्यति॥'

इत्यलंकारशेखरे वाक्यदोषमरीचिः[6]॥ ५॥

---

षष्ठो मरीचिः।

अथार्थदोषानाह—

**अष्टार्थदोषा विरसग्राम्यव्याहतखिन्नताः।**
**हीनाधिकासदृक्साम्यं देशादीनां विरोधि च॥ १॥**

---

१. 'मलक्ष' क. २. 'लक्षकं' ख. ३. 'अत्रासम' ख. ४. 'न्तरं गो' ख. ५. उदाहरणं क-पुस्तके नास्ति. ६. 'वाग्दोष' ख.

अत्र **विरसं** प्रस्तुतरसविरुद्धम् । यथा—

'किं रोदिषि हा रावैः सुतमरणशुचं जहीहि किं म्रियसे ।
सफलय यौवनमधुना सममनुरक्तेन सुतनु मया ॥'

अत्र करुणशृङ्गारयोर्महान्विरोधः ॥

**ग्राम्यम**विदग्धोक्तिनिष्पन्नम् । यथा—

'स्वपिम्यद्यानवद्याङ्गि संप्रत्यासस्तवान्तिके[1] ।
मनागूरुद्वयं बाले कुञ्चितं समुदञ्चय ॥'

**व्याहतम्** उपात्तविरुद्धम् । यथा—

'विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥'

अत्र शैलदुहितृत्वभावप्रकाशनत्वे विरुद्धे । एकेन प्रस्तरप्रकृतित्वस्यापरेण विदग्धत्वस्य लाभात् ॥

**खिन्नमपुष्टम्** । यथा—

'त्वत्प्रयाणसमद्भूतधूली लुम्पति भास्करम् ।
कृपाणं पाणिना धत्से शूरो न त्वत्समो भुवि ॥'

अत्र धूल्युत्थापनकृपाणधारणयोरशूरसाधारण्याच्छौर्यस्यापुष्टिः ॥

**हीनोपमं**[2] यथा—

'क्वचिदग्रे प्रसरता क्वचिदापद्यनिघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥'

**अधिकोपमं**[3] यथा—

'वसिष्ठवदयं दासो हनूमानिव मूषिका ।
सरस्वानिव कूपोऽयं शुनीयं श्रीरिव स्वयम् ॥'

अत्र यद्यप्युपमेयानां प्रकर्ष एव, तथाप्यात्यन्तिकरसहानेः सोऽपि न प्रतीयते[4] ॥

---

१. 'सप्रत्याशस्तवाङ्कके' क. २–३. 'पमा' क. ४. 'इति' क.

**असदृशोपमं** यथा—

'निर्ययौ रुद्रनयनात्सस्फुलिङ्गो महानलः।
वर्षन्ती शीकरासारं गङ्गा हिमगिरेरिव ॥'

अत्र स्फुटमसादृश्यम् ॥

**देशादिविरोधि** यत्र तत्तद्देशकालवयोवस्थादिविरोधः प्रतीयते। यथा—

'प्रवेशे चैत्रस्य स्फुटकुटजराजिस्मितदिशि
प्रचण्डे मार्तण्डे हिमकणसमानोष्ममहसि।
जलक्रीडायातं मरुसरसि बालद्विपकुलं
मदेनान्धं विध्यन्त्यसमशरपातैः प्रशमिनः ॥'

अत्र प्रवेशे चैत्रस्य, स्फुटकुटजेति कालस्य, मरुसरसीति देशस्य, (बालद्विपकुलं) मदेनान्धमिति वयसः, प्रशमिन इत्यवस्थाया विरोधः। इदं च तत्तच्छास्त्रतत्तत्प्रमाणतत्तल्लोकादिभेदादनन्तम् ॥ यत्र तु लोकस्य कवेश्च प्रसिद्ध्योर्विरोधस्तत्र कविप्रसिद्धिरेव बलीयसी इति। यथा—

'सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥'

अत्र कीर्तेर्ज्योत्स्नावत्प्रकाशता लोकविरुद्धापि कविसमयसिद्धेत्यदोषः ॥ ननु कथममीषां दोषता आकाङ्क्षादिर्ज्ञानासत्त्वे शाब्दज्ञानविलम्बादिति चेत् न वाक्यान्तरापेक्षया काव्ये सामग्रीवैलक्षण्यात्। अन्यथा प्रतीतिवैलक्षण्यानुपपत्तेः। तथा चान्वयबोधाकाङ्क्षा सत्त्वेऽपि रसोत्पत्त्यनुकूलाकाङ्क्षादिविरहो दोष इति ध्येयम् ॥

संप्रदायानुरोधेन व्याख्यैवं मम वस्तुतः।
तादृक्काव्यं प्रकुर्वीत यत्रोद्वेगो न धीमताम् ॥

इत्यलंकारशेखरेऽर्थदोषमरीचिः ॥ ६ ॥

---

१. 'यथा तत्र' ख. २. 'कर'ख. ३. 'त्यक्ताशङ्का'क. ४-५. 'ज्ञाना'ख.

सप्तमो मरीचिः।

'श्लाघ्या गुणाः' इत्युक्तम्। युक्तं चैतत्। यदाह—

'अलंकृतमपि श्रव्यं न काव्यं गुणवर्जितम्।
गुणयोगस्ततो मुख्यो गुणालंकारयोगयोः॥'

तदुक्तम्—

'अलंकारसहस्रैः किं गुणो यदि न विद्यते।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः॥'

उक्तं च भगवता—'शब्दार्थौ काव्यस्य शरीरम्, आत्मा रसः, गुणाः शौर्यादिवत्। दोषा काणत्वादिवत्। अलंकाराः कुण्डलादिवत्' इति।

तान्विभजते—

**गुणः सामान्यतो द्वेधा शब्देष्वर्थेषु च स्थितः।
दोषाणामप्यदोषत्वं प्राहुर्वैशेषिकान्गुणान्॥ १॥**

तत्र

**संक्षिप्तत्वमुदात्तत्वं प्रसादोक्तिसमाधयः।
अत्रैवान्यसमावेशात्पञ्च शब्दगुणाः स्मृताः॥ २॥**

तत्र स्वल्पाक्षरेण भूयोर्थकथनं **संक्षेपः**। यथा—

'ते हिमाचलमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमाययुः॥'

श्लाघ्यविशेषणत्वम**मुदात्तत्वम्**। यथा—

'श्रुत्वा यं सहसा गतं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जलभरप्रस्यन्दलिम्पत्पुटाः।
शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ नवशाद्वले विचलितग्रीवैर्वियुक्ता दृशः॥'

अत्र शुभ्रे पल्लविनीत्यादिविशेषणानां श्लाघ्यता॥

झटित्यर्थप्रत्यायकत्वं प्रसादम्[1] । यथा—

'स विश्वजितमारेभे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥'

कौशलादर्थविशेषलाभ उक्तिः । यथा—

'कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां न कथयामि या श्वसिति ॥'

अत्र कुशलमकुशलं वेत्युत्तरे कर्तव्ये जीवतीत्युक्तिविशेषाज्जीवितमात्रं लभ्यते ॥

अन्यधर्माणामन्यत्रारोपणं समाधिः । यथा—

'नीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः
कुम्भाविभौ कुचपरिकरः पूर्वपक्षी चकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादी-
द्वक्त्रज्योत्स्ना सितकररुचं[2] दूषयामास तस्याः ॥'

अत्र पत्रदानादिपदानां चेतनधर्माणामारोपणमिति ॥

इत्यलंकारशेखरे शब्दगुणमरीचिः ॥ ७ ॥

अष्टमो मरीचिः ।

इदानीमर्थगुणानाह—

**भाविकत्वं सुशब्दत्वं पर्यायोक्तिः सुधर्मिता ।**
**चत्वारोऽर्थगुणाः प्रोक्ताः परे त्वत्रैव संगताः ॥ १ ॥**

संगता अन्तर्भूताः । तदाहुः—

अलंकाराश्रिताः केचिद्दोषान्तर्गताः परे ।
चतुर्ष्वन्तर्गताः केचिदतश्चत्वार एव ते ॥

तत्र **भाविकत्व**मभिप्रायपूर्वकाभिधानम् । स्वयं दौत्यमिति यावत् । यथा—

'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यसि ।

१. 'प्रसादत्वम्' ख. २. 'रुचिं' क.

एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥'

अत्रोपपतिं प्रति संकेताभिप्रायेणैवमभिधानम् ॥

दारुणेऽर्थेऽदारुणपदता **सुशब्दता** । यथा—

'देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोवशेषे ।
लक्ष्मीसहायस्य तवाद्य वत्स वात्सल्यवान्द्रोणिरयं सहायः ॥'

अत्र मुमूर्षति मृते चेत्यर्थे ईदृक्पदता ॥

येन क्रमेण यद्वस्तु, तत्क्रमाभिधानं **पर्यायोक्तिः** । यथा—

'प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥'

यत्र विशेषणद्वारा विशेष्यलाभः, सा **सुधर्मिता** । यथा—

'अयमुदयति मुद्राभञ्जनः पद्मनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरचक्रद्वन्द्वबन्धुर्विभिन्द-
न्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥'

अत्र पद्मनीप्रकाशादीनां सूर्यनियतत्वात्तल्लाभः ॥

इत्यलंकारशेखरेऽर्थगुणमरीचिः ॥ ८ ॥

---

नवमो मरीचिः ।

इदानीं वैशेषिकान्गुणानाह—

**पदवाक्यतदर्थेषु ये दोषाः पूर्वमीरिताः ।**
**तेषां क्वचिददोषत्वं यत्तद्वैशेषिको गुणः ॥ १ ॥**

उक्तानामेव दोषाणां विषयावस्थादिभेदाद्यददोषत्वं तदेव वैशेषिको गुण इत्यर्थः ॥

केचित्तु—

'एतेषामेव दोषाणां स्थानेष्वेतेष्वदोषता ।
परं न त्वस्ति गुणता पार्थक्यमनयोर्यतः ॥'

अन्ये तु—'क्वचिददोषतामात्रं क्वचिद्गुणतापि[2] । तत्र सहृदयानामेव प्रतीतिः साक्षिणी' ॥

तदाहुः[3]—

'अलंकारे गुणे दोषे रसे वा काव्यसंपदाम् ।
प्रतीतिरेव विदुषां प्रमाणमवसीयते ॥'

श्रीपादस्तु—'रसोत्पत्तिप्रतिबन्धकर्तयैवैतेषां[4] दोषता । यत्र केनापि निमित्तेन न रसप्रतिबन्धः, तत्रादोषत्वमुचितमेव' इत्याह ॥

तत्र पदेषु यथासंभवमाह—

**अनुप्रासेषु नो कष्टं**

यथा—'महाराष्ट्रेषु नोष्ट्रिणः' इत्यादौ ॥

**श्लेषादौ नाप्रयुक्तता ।**

यथा—

'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
योगङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः ॥'

अत्र क्षयशब्दो गृहे ॥

**मिथः स्तुतौ न संदिग्धं**

यथा—

'पृथुकार्तस्वरयुक्तं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

---

१. 'कगुणत्वमित्यर्थः' ख. २. 'द्रुण' ख. ३. 'तदाह' क. ४. 'तयैषां' क.

**न व्यर्थं यमकादिषु ॥ २ ॥**

यथा—

'दधत्युरोजद्वयमुर्वशीतलं भुवो गतेव स्वयमुर्वशीतलम् ।
बभौ मुखेनाप्रतिमेन काचन श्रियाधिकायां प्रतिमेन काचन ॥'

अत्र चमत्कारः ॥

**नाश्लीलं भगवत्पादौ**

तदाहुः—

'भगिनीभगवत्पादौ शिवलिङ्गगुहादिषु ।
अभिप्रेतकुमार्यादावश्लीलं नैव दुष्यति ॥'

अश्लीलत्रयमत्रोक्तमिति ध्येयम् ॥

दण्डी तु—

'निष्ठ्यूतोद्गीर्णवान्त्यादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥'

**तद्विदेनाप्रतीतकम् ।**

यथा—

'सर्वकार्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥'

'सहायाः साधनोपाया देशकालौ बलाबलौ ।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र उच्यते ॥'

'रूपं संज्ञाथ संस्कारो वेदनानुभवस्तथा ।
इति बौद्धाः शरीरेषु मन्यन्ते स्कन्धपञ्चकम् ॥'

इति भार्गवसर्वस्वे ॥

**मासाध्वनुकृतौ**

यथा—

'हुं हुं हुं न न म मेति युवत्या जल्पितं जयति मानधनायाः' इत्यादौ ॥

**नापि लक्षणादाववाचकम् ॥ ३ ॥**

लक्षणादेरशक्य एव वृत्तित्वादिति हृदयम् ॥

इदानीं वाक्येषु यथासंभवमाह—

**प्रतीत्यबाधान्न न्यूनं**

यथा—

'तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥'

यत्रान्यत्क्रियापदं नास्ति तत्र 'अस्तिर्भवतीपरः प्रथमपुरुषो प्रयुज्यमानोऽप्यस्ति' इति न्यायेन यत्र तद्द्वयेन नोपपत्तिस्तत्र तद्दूषणमित्यर्थः। एवं प्रकरणादिना पदान्तरस्य लाभे द्रष्टव्यम्। अत उक्तम्—'प्रतीत्यबाधान्न न्यूनम्' इति।

**पादभेदे विसंधि न।**

यथा—

'यद्यपि नदति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः ।
तदपि न कुप्यति सिंहो असदृशपुरुषेषु कः कोपः ॥'

इह यद्यपि यदुल्लिखितम् 'संधिविरहो न दोषः' इति, तथाप्यनुशासनविरुद्धत्वात् 'विसदृशपुरुषेषु' इति पठनीयम्।

**न व्याकीर्णं तु सापेक्षे**

यथा—

'अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥'

इत्यादौ।

**नान्यवाक्ये समाप्तता ॥ ४ ॥**

समाप्तपुनरात्तकं वाक्यभेदेन दोषः। यथा—

'तं शरैः प्रतिजग्राह कालिङ्गो गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥'

---

१. 'अस्तिर्भवतिर्वा प्रथमपुरुषे प्रयुज्यते' क. २. 'नापत्ति' ख.

यथा वा—

'न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥'

**समस्ते यतिभङ्गो न**

यथा—

'कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमलमपि भृशं धेहि देव प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय ॥'

**मत्तादौ नार्थवर्जितम् ।**

आदिपदेन विरहिबालादिपरिग्रहः । यथा—'काकार्यं शशलक्ष्मणः' इत्यादौ ।

**विरुद्धं न तथावाक्ये**

विरुद्धां धियमुत्पादयत्वित्यभिप्रायेण प्रयोगे तन्न दोष इत्यर्थः ।

वाक्यार्थेषु यथासंभवमाह—

**विरसं नाप्रधानके ।**

यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

**न द्व्यर्थं नर्मणि ग्राम्यं**

'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति भरतोक्तेः ।

सर्वत्र हेतुमाह—

**रसहानेरयोगतः ॥ ९ ॥**

---

१–२. 'वातादौ' 'विरहवात्य' क; 'बालादौ' 'वीरवातुला' ख.

इदानीं सर्वसाधारणमदोषत्वमाह—

**तत्र तत्राभिधातव्ये तथानुकरणादिषु ।**
**उन्मत्ताद्यभिधानेषु कोऽपि दोषो न विद्यते ॥ ६ ॥**

श्रीपादास्तु—

'तदर्थातिशये शैध्र्ये दैन्ये कोपेऽवधारणे ।
विषादे विस्मये हर्षे पुनरुक्तं न दुष्यति ॥'

इत्यलंकारशेखरे वैशेषिकगुणमरीचिः ॥ ९ ॥

इति महाराजाधिराजश्रीमन्माणिक्यचन्द्रकारितेऽलंकारशेखरे गुणरत्नम् ॥

---

दशमो मरीचिः ।

'अलंकारास्तु शोभायै' इत्युक्तम् । तच्च साधु । यतः—

'गुणवत्यपि निर्दोषेऽलंकारैः काव्यराजनि ।
जायतेऽन्यैव सुषमा रत्नालंकरणैरिव ॥'

आहुश्च—'निर्दोषं गुणवत्काव्यम्' इत्यादि । तत्र चमत्कारविशेषकारित्वमलंकारसामान्यलक्षणम् । शब्दार्थनिष्ठत्वेन विशेषितं विशेषणद्वयम् । परम्परया रसोपकारित्वं तदित्यन्ये ।

तत्र प्रथमं शब्दालंकारान्विभजते—

**चित्रवक्रोक्त्यनुप्रासगूढश्लेषप्रहेलिकाः ।**
**प्रश्नोत्तरं च यमकमष्टालंकृतयो ध्वनौ ॥ १ ॥**

तत्र कौतुकविशेषकारि **चित्रम्** । तच्च खड्गचक्रपद्मादिभेदादनन्तम् । यदाह—

'सर्वतोभद्रधेन्वादिगोमूत्रीमुरजादि च ।
गतप्रत्यागताद्याहुश्चित्रकाव्यं मुनीश्वराः ॥'

तच्च माघादौ [1]सुव्यक्तत्वान्नेहोदाह्रियते ।

अन्याभिप्रायेणोक्तं वाक्यमन्येनान्यार्थकतया यद्योज्यते सा **वक्रोक्तिः**। एतदेव वाकोवाक्यमुच्यते । यथा—

'कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णः कथं वानरः ।

---

१. 'प्राचुर्येण व्यक्त' क.

मुग्धेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विता-
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥'

वर्णसाम्य**मनुप्रासः** । स च द्विविधः—लाटानुप्रासश्छेकानुप्रासश्च तत्रासकृदावृत्तवर्णत्वं **लाटानुप्रासः** । यथा—

'अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कृतार्थयतु मानसम् ॥'

अनेकस्य व्यञ्जनस्य सकृत्साम्यं **छेकानुप्रासः** । यथा—

'नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविमोक्षमग्नौ ॥'

'पदमेकं हृदा कृत्वा तदनुप्रासकाम्यया ।
आदिक्षान्तलिपौ कादिक्षान्तशब्दं विचिन्तयेत् ॥'

इति रहस्यम् ॥

**गूढं** क्रियागुप्तादिः ।

यथा—

'पुंस्कोकिलकुलस्यैतैर्नितान्तमधुरारवैः ।
सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥'

इदं च नाना । यदाहुः—

'क्रियाकारकसंबन्धगुप्तान्यामन्त्रितस्य च ।
गुप्तं तथा समासस्य लिङ्गस्य वचनस्य च ॥'

एकोच्चारणापह्नुतभेदत्वं **श्लेषः** ।

यथा—'येन ध्वस्तमनोभवेन' इत्यादौ । अयं चाष्टधा । यदाह—

'विभक्तिपदवर्णानां लिङ्गस्य वचनस्य च ।
भाषाप्रकृत्योर्भेदेन श्लेषाः स्युः प्रत्ययस्य च ॥'

**प्रहेलिका** सकृत्प्रश्नः । सा च च्युताक्षरादत्ताक्षरादिः ।

यथा—

'विदग्धः सरलो रागी नितम्बोपरि संस्थितः ।
तन्वङ्ग्यालिङ्गितः कण्ठे कलं कूजति को विटः ॥'

---

१. 'वृत्तो' ख. २. 'अधुः' इति क्रिया. ३. 'श्लेषत्वम्' ख.

अत्र विट इत्यत्र विकारस्थाने घकारदानाद्द्वितीयोऽर्थो भवति । सा च षोढा । तदाहुः—

'प्रहेलिका सकृत्प्रश्नः सा च षोढा च्युताक्षरा ।
दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि ॥'

**प्रश्नोत्तर**मपि द्विविधम्—बहिरन्तश्च[1] । तत्र बहिःप्रश्नोत्तरं यथा—

'प्रायः कार्ये नियुज्यन्ते नराः सर्वत्र कीदृशाः ।
धानेत्ययं[2] भवेच्छब्दो नौवाची वद कीदृशः ॥'

सावधानाः[3] ।

अन्तःप्रश्नोत्तरं यथा—

'काहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् ।
कथमुक्तं न जानासि कदर्थयसि यत्सखे ॥'

अतुल्यार्थत्वे सत्यानुपूर्वीविशेषविशिष्टनियतव्यञ्जनसमुदायाभ्यासो **यमकम्** । यथा—

'नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत्ससुरभिं सुरभिं सुमनोभरैः ॥'

तच्चेदं संक्षेपेण सप्ताशीतिप्रकारमिति चान्यत्र विस्तरः । एतच्चित्र एवान्तर्भूतमिति गोवर्धनः ॥

इत्यलंकारशेखरेऽलंकाररत्ने शब्दालंकारमरीचिः ॥ १० ॥

एकादशो मरीचिः ।

अथार्थालंकारान्विभजते—

**उपमारूपकोत्प्रेक्षाः समासोक्तिरपह्नुतिः ।
समाहितं स्वभावश्च विरोधः सारदीपकौ ॥ १ ॥
सहोक्तिरन्यदेशत्वं विशेषोक्तिर्विभावना ।
एवं स्युरर्थालंकाराश्चतुर्दश न[4] चापरे ॥ २ ॥**

तत्र—भेदे सति साधर्म्य**मुपमा** । अधिकगुणवत्तया संभाव्यमान**मुपमानम्** । निकृष्टगुणवत्तया संभाव्यमान**मुपमेयम्** ।

१. 'रन्तरश्च' ख. २. 'नाधे' ख; 'नावे' क. ३. सौ औकारसहितः । अधा धाकाररहितश्च नाः. ४. 'नवा' क.

तां विभजते—

**वाक्यार्थातिशयश्लेषनिन्दाभूतविपर्यया:।**
**संशयो नियमः स्वं च विक्रियेत्युपमा दश ॥ ३ ॥**

तत्र—वाक्यार्थेनैव वाक्यार्थो यदुपमीयते सा **वाक्यार्थोपमा**। सा च द्वयी—प्रत्येकं सादृश्यानपेक्षा तत्सापेक्षा च। आद्या यथा—

'कामिनीनयनकज्जलपङ्कादुत्थितो मदनमत्तवराहः।
कामिमानसवनान्तरचारी कन्दमुत्खनति मानलतायाः॥'

अन्त्या यथा—

'त्वदाननमधीराक्षमाविर्दशनदीधिति।
भ्रमद्भृङ्गमिवालक्ष्यकेशरं भाति पङ्कजम्॥'

यत्रातिशयधर्मोपन्यासः **सातिशयोपमा**।

यथा—

'कल्पद्रुमो न जानाति न ददाति बृहस्पतिः।
अयं च जगतीजानिर्जानाति च ददाति च॥'

पदश्लेषनिबन्धनसाम्यं **श्लेषोपमा**।

यथा—

'तमालपत्राभरणा राजते विलसद्वया[1]:।
बालेवोद्यानमालेयं सालकाननशोभिनी[2]॥'

यत्रोपमानस्य निन्दया प्रतिक्षेपः सा **निन्दोपमा**।

यथा—

'नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदुर्वोरुपमानबाह्याः॥'

यत्रासंसृष्टज्ञानेन संसर्गमारोप्य साम्यप्रसञ्जनं सा **भूतोपमा**।

यथा—

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः॥'

---

१, अवस्थापक्षिवाची वयःशब्दः. २. सालानां काननेन, अलकसहिताननेन च.

यत्रोपमानस्यैवोपमेयता सा **विपर्ययोपमा**।

यथा—

'अथ सुललितयोषिद्भ्रूलताचारुशार्ङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा॥'

इत्यादौ।

यत्रोपमानोपमेययोः संशयकोटिता सा **संशयोपमा**।

यथा—

'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं
किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ।
खगौ[1] वा गुच्छौ वा कनककलशौ वा किमु कुचौ
तडिद्वा तारा वा कनकलतिका वा किमबला॥'

यत्रेतरव्यावृत्त्या साम्यलाभः सा **नियमोपमा**।

यथा—

'कस्ते पुरंदरादन्यः प्रतिमल्लो भविष्यति।
ऋते सहस्रकिरणात्त्वत्प्रतापसमो हि कः॥'

यत्रोपमानान्तरविरहतात्पर्येण स्वसाम्यं[2] सा **स्वोपमा**।

यथा—

'आघूर्णितं पक्ष्मलमक्षियुग्मं प्रान्तद्युतिश्वैत्यजितामृतांशु।
अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम्॥'

अभेदानुमानवदिह भेदो द्रष्टव्यः॥

यत्रोपमेयमुपमानविकारतयोच्यते सा **विक्रियोपमा**।

यथा—

'हरिणादथ तन्नयनादथ पद्मात्पद्मपत्राच्च।
आहृत्य कान्तिसारं विधिरसृजत्सुभ्रुवो दृष्टिम्॥'

---

१. 'स्वगौ' ख. २. 'सामान्यं' क.

श्रीपादस्तु—'समभिव्याहारोपमाप्यस्ति' इति।

यथा—

'प्रकृत्यैव मनोहारि वदनं हरिणीदृशः।
चन्द्रे ह्लादकता कस्मात्पद्मः केन परिष्कृतः॥'

अत्र सर्वत्र—

न्यूनाधिकत्वशङ्का चेद्विभागेषु तदिष्यताम्।
किंचिद्विशेषमादाय भेदो भेदश्च कश्चन॥
काचित्समस्तान्वयिनी क्रियामात्रान्वया परा।
विशेषणान्वया काचिदुपमा कापि तत्परा॥

अत्र च—

न्यूनता साम्यमाधिक्यं यद्यदेवाभिधीयते।
अहो काव्यस्य माहात्म्यं समतैव प्रतीयते॥

तदाह राजशेखरः—

'समानमधिकं न्यूनं सजातीयं विरोधि च।
सकुल्यं सोदरं कल्पमित्याद्याः साम्यवाचकाः॥
अलंकारशिरोरत्नं सर्वस्वं काव्यसंपदाम्।
उपमा कविवंशस्य मातैवेति मतिर्मम॥'

इत्यलंकारशेखरेऽर्थालंकारे उपमामरीचिः॥ ११॥

---

द्वादशो मरीचिः।

अतिसाम्यादपह्नुतभेदयोरुपमानोपमेययोरभेदप्रत्ययो **रूपकम्**।

यदाह—

'तद्रूपकमभेदो यदुपमानोपमेययोः।' इति।

दण्डिनोऽप्याहुः—

'उपमैव तिरोभूतभेदा रूपकमुच्यते।' इति।

तद्विभजते—

**विरुद्धं च समस्तं च व्यस्तं रूपकरूपकम्।
श्लिष्टं च रूपकं तस्मात्संक्षेपात्पञ्चधा स्मृतम्॥ १॥**

तत्र—**यत्रोपमानविरुद्धोऽर्थस्तद्विरुद्धम्।**

यथा—

'दिवा न परिभूयते न च मनागपि क्षीयते
न वा चरमवारिधेः पयसि लुप्तिमाविन्दति ।
न च त्रिदशसुभ्रुवां वदनकान्तिभिर्जीयते
यशस्तुहिनदीधितिर्जयति कोऽपि भूमीपतेः ॥'

**समस्तं** यथा—

'तस्या बाहुलता पाणिपद्मं चरणपल्लवम् ।
मुखेन्दुरक्षिभ्रमरौ सर्वस्वं पुष्पधन्वनः ॥'

**व्यस्तं** यथा—

'भुजौ मृणाले वदनं सुधांशुः कुन्दानि दन्ताश्चरणौ सरोजे ।
स्मितं प्रसूनानि करौ प्रवाले पयोधरौ भूमिधरौ मृगाक्ष्याः ॥'

**रूपकरूपकं** यथा—

'मुखपङ्कजरङ्गेऽस्मिन्भ्रूलतानर्तकी तव ।
नरीनर्ति लसत्स्वर्णकेतकीदललोचने ॥'

**श्लिष्टरूपकं** यथा—

'राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
पुष्णाति सुषमां कांचिन्मुखपङ्केरुहं तव ॥'

इदं च समस्तासमस्तादिभेदादनन्तम् । लक्षणाप्यत्रैवान्तर्भवति, उपमानोपमेययोरभेदप्रतिपत्तेरत्रापि सत्त्वात् ।

तदुक्तम्—

'रूपकं लक्षणादिकम्' इति । सा च द्विधा—समस्तासमस्तभेदात् ।

तत्राद्या यथा—

'उदयति कनकाचलयोरुपरि चलत्पङ्कजश्चन्द्रः ।
तदुपरि घनान्धकारः कस्य कृते धातुरीदृशी सृष्टिः ॥'

१. 'भृतः' ग. २. 'त्पङ्कज' क.

अन्त्या यथा—

'तामरसे सालसता जलमुचि कश्चिद्विपर्यासः।
निस्यन्दता लतायां कथयति कस्यापि पुण्यानि॥'

इत्यलंकारशेखरे रूपकमरीचिः॥ १२॥

त्रयोदशो मरीचिः।

अन्यनिमित्तके वस्तुन्यन्यनिमित्तकत्वारोपे उत्प्रेक्षा।

यथा—

'गमनमलसयातैः कुम्भलक्ष्मीं कुचाभ्या-
मविकलकरशोभामूरुकाण्डद्वयेन।
यदि यमहरदेषां हेतुनानेन नूनं
निजवपुषि करीन्द्राः पांशुपूरं क्षिपन्ति॥'

इयं च

सर्वालंकारसर्वस्वं कविकीर्तिविवर्धिनी।
उत्प्रेक्षा हरति स्वान्तमचिरोढास्मितादिव॥
शङ्के मन्ये ध्रुवं प्रायो नूनं जानामि तर्कये।
इवेत्यादिभिरुत्प्रेक्षा व्यज्यते काव्यवर्त्मनि॥

अन्यदेवाभिप्रेत्यान्याभिधानं समासोक्तिः। सैव चान्यापदेश इत्युच्यते।

यथा—

'त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को
माधुर्यं तव विश्वतोऽपि विदिता माध्वीक साध्वी कथा।
एतत्किंतु तवाप्यरुंतुदमिव ब्रूमो न चेत्कुप्यसे
यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः॥'

किंचिदपहुत्य यदन्यार्थप्रदर्शनं सापह्नुतिः।

यथा—

'सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्।
नागरिकः किमु मिलितो नहि नहि सखि हैमनः पवनः॥'

---

१. 'सारसता' ख. २. 'रोपणमु' क. ३. 'प्रकाशनं' ग.

'कलमधुरं किल कूजन्यमुनाकूलेषु नीलघनदेहः ।
दृष्टः सखि गोपालो नहि नहि सखि कोकिलो दृष्टः ॥'

आरब्धानुकूलाकस्मिकसहकारिलाभः **समाहितम्** ।

यथा—

'मानापनोदनविधौ मदिरेक्षणाया
यावन्नमामि चरणावथ तावदेव ।
नीपस्खलन्नवसमीरपुरःसराणि
प्रादुर्बभूवुरचिराद्धनगर्जितानि ॥'

यस्य वस्तुनो यत्स्वभावता तदाख्यानं **स्वभावः** । तदेव **जातिरित्युच्यते** ।

यथा—

'चलति कथंचित्पृष्टा यच्छति वाचं कथंचिदालीनाम् ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥'

**विरोधो** द्विविधः—पारमार्थिकाविरोधेऽपि औचित्येन विरुद्धतया प्रतीयते यत्र ।

यथा—'मनीषिताः सन्ति गृहेषु देवताः' इत्यादौ ।

द्वितीयस्तु यथाश्रुते विरोधसंधानेऽपि यत्राभिप्रेतार्थमादाय विरोधः । अयमेव **विरोधाभास** इत्युच्यते । यथा—

'भक्तानां कामदस्तुष्टो रुषा कामं दहन्नपि ।
अपि ज्ञानमयस्थाणुर्यस्तमीशं स्तुवीमहि ॥'

उत्तरोत्तरं यत्र सारोत्कर्षः स **सारः** ।

यथा—

'विषयेषु तावदबलास्तास्वपि गोप्यः स्वभावमृदुवाचः ।
मध्ये तासामपि सा तस्या अपि साचि वीक्षितं किमपि ॥'

समस्तवाक्योपकरणत्वं **दीपकत्वम्** । तच्च भिन्नमभिन्नं च ।

---

१. 'घोपि' क-ग. २. 'यत्र' नास्ति क. ३. 'तामर्चे' क. ४. 'कारणत्वं' क. ५. 'तच्चाभिन्नतत्तत्कारक' क.

अभिन्नं यथा—'पाणौ पद्मधिया मधूककुसुमभ्रान्त्या च गण्डस्थली' इत्यादौ । तत्तत्कारकक्रियादिभेदादनन्तम् ।

भिन्नं यथा—

'नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।
बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥'

अत्र विस्तरभिया सर्वं नोदाह्रियते । एतच्च मालादीपकादिभेदादनन्तम् ।

अत्र पूर्वापरवाक्यार्थयोरुपकार्योपकारकशृङ्खला **मालादीपकम्** ।

तत्रोत्तरस्य पूर्वोपकारकत्वं यथा—

'चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदस्तमपि वल्लभसङ्गः ॥'

पूर्वस्योत्तरोपकारकत्वं यथा—

'संग्रामाङ्गणमागतेन भवता चापे समासादिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥'

समानकालोक्तिः **सहोक्तिः** । सा द्वयी—उदासीनयोस्त्वराप्रतिपत्तये, कार्यकारणयोरपि ।

आद्या यथा—

'सहदीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
समं मम शरीरेण क्षीयन्ते दिवसा अमी ॥'

अन्त्या यथा—

'वर्धते सह पान्थानां मूर्च्छया चूतमञ्जरी ।
पतन्ति च समं तेषामश्रुभिर्मलयानिलाः ॥'

प्रयोज्यप्रयोजकयोर्वैयधिकरण्यम**न्यदेशत्वम्** ।

यथा—

'सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।

१. 'भयात्' क-ग. २. 'पकारकं माला' ख.

साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥'

कारणे सत्यपि कार्याभावो **विशेषोक्तिः**।

यथा—

'आवाति वारिधरशीकरवारिवर्षी
स्वैरं कदम्बवनदुर्ललितः समीरः।
अङ्गेऽर्पितानि नलिनीनवपल्लवानि
तापस्तथापि सुदृशः शिथिलो न जातः ॥'

कारणं विना कार्योदयो **विभावना**।

यथा—

'नाङ्गेषु रत्नाभरणानि सन्ति निश्वासहार्याण्यपि नांशुकानि।
तथापि सा संप्रति सारसाक्षी दिने दिने कामपि कान्तिमेति ॥'

केचित्तु—

अन्यदेशत्वमेव विशेषोक्तिविभावने अधिकरणद्वयमादाय।

अन्ये तु—

'अनयोरेवैकेनापरस्यान्यथासिद्धिर्व्यतिरेकमादाय' इति।

गोवर्धनस्त्वाभ्यामेवान्यथासिद्ध्यान्यदेशत्वमेव निराचकार। **व्यतिरेकालंकार**स्त्वतिरिच्यत इत्येके। स च यथा—

'कादाचित्कीं द्युतिं धत्ते कलङ्की क्षीयतेऽन्वहम्।
दोषाकरः कथंकारं त्वदाननसमः प्रिये ॥'

एकेनाप्रस्तुतस्यासिद्धि**राक्षेपः**। सोऽपि पृथगित्यपरे।

यथा—

'इन्द्रेण किं स यदि कर्णनरेन्द्रसूनु-
रैरावतेन किमसौ यदि तद्द्विपेन्द्रः।
दम्भोलिनाप्यलमयं यदि तत्प्रतापः
स्वर्गोऽप्ययं ननु मुधा यदि तत्पुरी सा ॥'

१. 'स्त्वन्यामेव' क; 'स्त्वाद्यामेव' ग. २. 'किमहो' ग.

सुखबोधाय बालानामतिकोमलवर्त्मना ।
मया संक्षेपणादित्थमलंकाराः प्रदर्शिताः ॥
यथैतेषां मिथो भेदः परेषां नातिरेकिता ।
तथालंकारसर्वस्वे स प्रपञ्चमदर्शयम् ॥

इति[1] केशवमिश्रकृतेऽलंकारशेखरेऽलंकाररत्नम्[2] ।

'उपमा काव्यसंपदाम् । सर्वस्वं सा च साधर्म्यम्' इतीदानीं तस्य प्रतियोग्यनुयोगिनावाह—

**चन्द्रकलाम्बुजदामशिरीषं विद्युत्ताराकनकलता च ।**
**दमनककाञ्चनयष्टी दीपः सर्वैरेभिर्योषिद्वर्ण्या ॥ १ ॥**

यथा—

'शिखेव[3] दीपस्य लतेव हैमी कलेव चान्द्री स्रगिवाम्बुजानाम् ।
शिरीषपुष्पं सरहेमयष्टी सा मे कदा लोचनगोचरा स्यात् ॥'

'दमनकतरुशाखालम्बिरोलम्बयुग्मं[4]
तुहिनकिरणबिम्बे खञ्जरीटप्रचारः ।
विकचकमलकोशे दाडिमीबीजपङ्क्ति-
स्त्रितयमिदमपूर्वं दृष्टमेकत्र चित्रम् ॥'

'तडिद्वा तारा वा' इत्यादि । 'उद्भिन्नया रत्नशलाकया वा' इत्यादि-दर्शनात्तथात्वं वर्ण्यते इत्याहुः ।

**अत्यन्तानन्दसंदोहदायिनी परिवर्ण्यते ।**

योषिदित्यनुवर्तते । यथा—

'सा कौमुदी नयनयोरमृतैकवर्ति-
रानन्दपङ्कजवतीविलसत्तडागः ।
प्राणाः स्मरस्य जनपुण्यतरोः फलानि
साफल्यमक्षिजनुषां क्व गता न जाने ॥'

'शक्तिर्मूर्तिमयी स्मरस्य जगतां नारीमयं मण्डलं
कान्तानामुपमानकल्पनकलाकान्तेः समुत्तेजनम् ।

१. 'इत्यलंकार' ग. २. 'रत्नं चतुर्थम्' क. ३. 'शिखीव' ग. ४. 'जम्बीरयुग्मं' ग.

लक्ष्मीः संसृतिसागरस्य सरसी लावण्यपुण्याम्भसां
सा राजव्रजचक्षुषां क्षणमभूदानन्दपुण्यस्थली ॥'

**रोचना स्वर्णविद्युद्भिर्हरिद्राभिर्वराटकैः।**
**चम्पकैर्हैमकैतक्या वर्ण्यते तत्तनोर्द्युतिः ॥ २ ॥**

यथा—

'प्रत्यग्रपद्मबीजद्युति काञ्चनकेतकच्छायम्।
गोरोचनातिगौरं वपुरथ साक्षात्कृतं तस्याः ॥
चम्पकदामहरिद्राकाञ्चनसौदामनीनां च।
ह्रेपयति कान्तिमेषा निजवपुषा पद्मपत्राक्षी ॥'

इदमुपलक्षणम्—'तामग्रतस्तामरसान्तराभाम्' इत्यादेः।

'वेत्रत्वचा तुल्यरुचा वधूनां कर्णान्ततो गण्डतलागतानि।
भृङ्गाः सखेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवपङ्कजानि ॥'

इत्यादेः। 'मोचात्वचः[1] पञ्चषपाटनानाम्' इत्यादेश्च।

'काश्मीरगौरवपुषामभिसारिकाणा-
माबद्धरेखमभितो मणिमञ्जरीभिः।
एतत्तमालदलनीलतमं तमिस्रं
तत्प्रेमहेमनिकषोपलतां प्रयाति ॥'

इत्यादेश्च तत्तत्साम्यमपि बोध्यम्।

**तमःशैवालपाथोदबर्हभ्रमरचामरैः।**
**यमुनावीचिनीलाश्मनीलाब्जाभ्रैः समः कचः ॥ ३ ॥**

यथा—

'न जीमूतच्छेदः स हि गगनचारी न च तमो
न चास्येन्दोर्मैत्री न च मधुकरास्ते हि मुखराः।
न पिच्छं तत्केकिन्युचितमसितोऽयं न च मणि-
र्मृदुत्वादा ज्ञातं घनचिकुरपाशो मृगदृशः ॥'

---

१. 'मोचत्वचः' क-ग.

'जानामि जानकि कलिन्दसुताजलेऽस्मि-
न्स्नातासि हन्त यदिमास्तव कुन्तलानाम्।
वीचीषु नीलकमलस्रजि शैवलेषु
दृश्यन्त एव रुचयः कणशो विकीर्णाः॥'

'तारा रदानां वदनस्य चन्द्रं रुचा कचानां च नभो जयन्तीम्।
आकण्ठमक्ष्णोर्द्वितयं मधूनि मही[1]भुजः कस्य न भोजयन्तीम्॥'

'[2]कूर्पासेन स्थगितहृदया संपुटे [3]हाटकीयं
[4]मस्तन्यस्ताञ्चलनिवसना चामरं वारिदाभम्।
यत्रासीना रतिरिव वणिक्प्रेयसी वीथिकायां
विक्रीणीते मुकुलितमुखी संज्ञया मौक्तिकानि॥'

[5]इदमुपलक्षणम्।

'पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसंग्रहम्।
सखीस्मितैस्तर्कितत‍न्निजभ्रमा बबन्ध तन्मूर्धनि चामरं चिरात्॥'

इति धूमसाम्यमपि बोध्यम्।

'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे।'

इति रहस्यम्।

**ललाटमर्धचन्द्रेण हेमपट्टिकया तथा।**

'केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम्।
एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधुः॥'

'अधस्तादन्धकाराणामुपरिष्टात्कुरङ्गयोः।
सिन्दूरबिन्दुसुभगा दृष्टा काचन पट्टिका॥'

**वल्लीस्मरधनुर्वीचिभृङ्गालीपल्लवैर्भ्रुवौ॥ ४॥**

---

१. 'भृतः' क. २. 'कुर्पासेन' ख-ग. ३. 'हाटकेयम्' ख-ग. ४. 'हस्तन्यस्ता ज्वलति वसना' ग. ५. 'अङ्गुल्या यदि निर्दिशेदरुणिमा लाक्षागुटी विभ्रमं वाचा यद्यथ शुद्धपारदवटीबुद्धिं रदस्य द्युतिः। दृग्भङ्ग्या यदि नीलिमा वितनुते काचस्रजः प्रत्ययं विक्रेतुं बत मौक्तिकानि भवति व्यग्रा वणिक्प्रेयसी॥' इत्यपीतः प्राक्क्वचित्.

यथा—

'अथ सुललितयोषिद्[1]भ्रूलता चारुभृङ्गम्' इत्यादि।

'श्यामास्वङ्गं चकितहरिणी[2]प्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
[3]उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा-
न्हन्तैकस्य क्वचिदपि न ते [4]चण्डि सादृश्यमस्ति॥'

'भ्रूपल्लवं मधुपराजिरुचां निधिस्ते
गण्डस्थली कनकदर्पणदर्पहन्त्री।
हे कम्बुकण्ठि शुककिन्नरहंसवाणि
प्राणा ममासि मदनस्य च जैत्रमस्त्रम्॥'

**चन्द्रादर्शौ कपोलस्य**

सुव्यक्तमव्यवहितश्लोकद्वये।

इदमुपलक्षणम्—

'मधूककुसुमभ्रान्त्या पुनर्गण्डयोः' [5]इत्यादेस्तथात्वमपि।

**मुखस्येन्द्वब्जदर्पणाः।**

यथा—

'किमिन्दुः किं पद्मम्' इत्यादौ।

**तिलप्रसूनं नासायाः**

यथा—

'बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छवि-
र्गण्डश्चण्डि चकास्ति [6]नीलनलिनश्रीमोचनं लोचनम्।
नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति प्रिये
प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः॥'

कामतूणीकृत्य नासा वर्ण्यत इति **श्रीहर्षः**। 'नासावंशो मृगीदृशाम्' इत्यप्यस्ति। 'नासानाली तिलोपमा' इत्यपि पठन्ति।

---

१. 'शार्ङ्ग' ग. २. 'प्रेक्षिते' ग. ३. 'तत्पश्यामि' ख. ४. 'भीरु' ख. ५ 'इत्यादिदर्शनात्' ग. ६. 'नाल' क.

**कण्ठः कम्बोः समः स्मृतः ॥ ५ ॥**

यथा—

'हे कम्बुकण्ठि' इत्यादौ 'कम्बुग्रीवे तद्वदेवाष्टमान्त्ये' इत्यादौ।

**मृग तन्नेत्रपाथोऽज तत्पत्रझषखञ्जनैः।**
**नेत्रं चकोर तन्नेत्रकेतकालिस्मराशुगैः ॥ ६ ॥**

यथा—

'चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष दृष्टः[1]।
सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः ॥'[2]

'हरिणादथ तन्नयनादथ पद्मात्पद्मपत्राच्च'[3]।

'किमब्जे किं मीनौ' इत्यादि।

'नयने खञ्जनकमले बाहू विलसन्मृणालबिसखण्डे।
वपुरपि शिरीषकुसुमं[4] मुखमिन्दुस्त्वं शरल्लक्ष्मीः ॥'

'चकार सा मत्तचकोरनेत्रा विलोलनेत्रा भ्रमरैर्गवाक्षान्[5]।
पूर्णान्दलैः काञ्चनकेतकीनामहो वधूनां पृथगेव सृष्टिः[6] ॥'

केचित्तु—

'कोशातकी पुष्पगुलुच्छकान्तिभिर्मुखैर्विनिद्रोल्वणबाणचक्षुषः।
ग्रामीणवध्वस्तमलक्षिता जनैश्चिरं धृतीनामुपरि[7] व्यलोकयन् ॥'

इति माघदर्शनात्कोशातकीत्वेन मुखम्, बाणत्वेन वर्णनीयमिति वदन्ति।

अन्ये तु—

'तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्याः।
प्रसन्नचेतः सलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥'

इति दर्शनात् 'नेत्रं कुमुदोपमेयम्' इत्याहुः ॥

**प्रवालबिम्बबन्धूकपल्लवैरधरोष्ठकौ।**
**वर्ण्यौ माधुर्यमाश्रित्य यावन्मधुरवस्तुभिः ॥ ७ ॥**

---

१. 'कृष्टः' क. २. 'प्रयासैः' ख; 'प्रयत्नात्' ग. ३. 'इत्यादि' ग. ४. 'पुष्पं' ग. ५. 'गवाक्षाः। पूर्णा' ग. ६. 'दृष्टिः' ग. ७. 'व्रतीना' क; 'वृत्तीना' ख.

यथा—

'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततो न कुर्याद्विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य॥'

'तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणप्रेक्षणा[1] निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः॥'

'बन्धूकद्युतिबान्धवोऽयमधरः' इत्यादि। जवाप्यत्र गणनीयेति गोवर्धनः॥

माधुर्यमाश्रित्येति।

यथा—

'त्वं पीयूष दिवो विभूषणम्' इत्यादौ॥

**मुक्तामाणिक्यनारङ्गदाडिमीकुन्दकोरकैः।**
**ताराभिश्च रदाः**

यथा—

'कूर्पासेन स्थगितहृदयः' इत्यादि। 'तन्वी श्यामा शिखरदशना' इत्यादि।

'तद्दन्ता नागरङ्गानि च्छोलङ्गानि पयोधरौ।
ओष्ठाधरौ च बिम्बानि सा मे फलमयी प्रिया॥'

दमनकेत्यादि। बन्धूकद्युतीत्यादि।

तत्कोरकैर्यथा—

'अधरः किसलयमङ्गी पद्मौ कुन्दस्य कोरका दन्ताः।
कः कौ के कं कौ कान्प्रहसति हसतो हसन्ति हरिणाक्ष्याः॥'

'तारा रदानाम्' इत्यादि॥

**वाणी हंसालिशुककिन्नरैः।**
**वेणुकोकिलवीणाभिर्माधुर्यं मधुरैः सह॥ ८॥**

---

१. 'प्रेक्षणी' ख. २. 'पि' ख. ३. 'मासि' ग. ४. 'स्थगितहृदय' इति न. ख; 'हृदय' इति न. ग.

यथा—

'हे कम्बुकण्ठि शुककिन्नरहंसवाणि' इत्यादि।

'तस्य गोमुर्द्धिरेफाणां कर्णोत्पलनिपातिनाम्।
स्वरसंवादिभिः कण्ठैः शालिगोप्यो जगुर्गुणान्॥'

'कण्ठः किमस्याः पिकवेणुवीणास्तिस्रो जिताः सूचयति त्रिरेखः।
इत्यन्तरस्तूयत यत्र कापि नलेन बाला कलमालपन्ती॥'

माधुर्यमिति।

'मधुद्रोणीव मन्दारमरन्दामन्दवृष्टिवत्।
सुधासारद्रवद्राक्षागोणी वाणी तव प्रिये॥'

**बाहुर्बिसेन विद्युद्वल्लिमृणालैः**

बिसमृणालयोरवान्तरविवक्षयेदम्।

यथा—

'अस्या भुजाभ्यां विजिताद्बिसात्किं पृथक्करोऽगृह्यत तत्प्रसूनम्।
इहेक्षते तन्न गृहाः श्रियः कैर्न गीयते वा कर एव लोकैः॥'

'विद्युन्मृणालसुभगा बाहुवल्ली मृगीदृशः।
यूनां तु कण्ठकाण्डेषु जाता कनकशृङ्खला॥'

**करस्तु पद्मेन।**

**पल्लवविद्रुमकाभ्यां**

'करकिसलयेन सुदृशां रागसरित्पङ्कजेनेव।
शिथिलितविद्रुममहसा स्पृष्टोऽहं चेतनां न लभे॥'

**चन्द्रकलाकुन्दकोरकैश्च नखाः॥ ९॥**

यथा—

'निर्भर्त्सिताशोकदलप्रसूति पाणिद्वयं चारुनखं तदीयम्।
नवोदितेन्दुप्रतिमस्य लेखां व्योम्नः प्रदोषे विफलीचकार॥'

'निर्दोषरत्नसुभगैः कुन्दकोरककान्तिभिः।
नखैः कमलपत्राणि चक्रे बाला पृथक्पृथक्[1]'॥

---

१. 'यशः' ख.

**पूगाब्जतत्कोरकबिल्वतालगुच्छेभकुम्भाद्रिघटेशचक्रैः।**
**सौवीरजम्बीरकबीजपूरसमुद्गछोलङ्गफलैरुरोजः ॥ १० ॥**

यथा—

'कनकक्रमुकायितं पुरस्तादथ पङ्केरुहकोरकायमाणम्।
क्रमशः कलशायमानमास्ते सुदृशो वक्षसि कस्य भागधेये ॥'

'कलशीयति कुचकमलं कमलीयति लोचनभ्रमरः।
द्व्यणुकीयति पुनरस्या हरिणदृशः प्रत्यहं मध्यः ॥'

'स्तनबिल्वद्वयी तस्याः प्रययौ चक्रवाकताम्।
उड्डीय पुनरद्रीणां जहार विपुलां श्रियम् ॥'

'चिरप्रवासिंस्तव वाटिकायां बिभर्ति चत्वारि फलानि वीरुत्।
सौवीरजम्बीरकबीजपूरतालान्यसौ धास्यति किं न जाने ॥'

'घटौ वा गुच्छौ वा' इति।

'स्वयंभूः शंभुरम्भोजलोचने त्वत्पयोधरः।
नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥'

'संपुटं हाटकीयम्' इत्यादि। 'दमनकतरुशाखालम्बि छोलङ्गयुग्मम्' इत्यादि।

'महतोऽपि महीयांसमणीयांसमणोरपि।
त्वत्प्रतीकं विदुर्नूनमणुमध्ये नगस्तनि ॥'

'रेखाकारातिसुश्यामा रोमालिस्तेन तादृशैः।
शैवालधूमभृङ्गालिलताद्यैरुपमीयते ॥'

सुगममिदम्।

**नाभीरसातलावर्तह्रदकूपनदादिभिः।**

यथा—

'मदनसरितमेतां गाहमानो जनोऽयं
जघनपुलिननाभीमण्डलावर्तरम्यम्।

१. 'अणुकीयति' ग. २. 'कान्ता' ग.

मुखकमलसनाथामुल्लसद्भूलतोर्मिं
चिरविरहहुताशा या समुज्झांचकार ॥'
'त्वन्नाभिकूपः पातालं नितम्बस्तव मेदिनी।
पयोधरस्ते हेमाद्रिस्त्वं ममासि जगत्रयम् ॥'
'ह्रदनदसरांसि नाभिस्त्रिवली तटिनी रसात्मकं च वपुः।
तदपि तलोदरि सुन्दरि कथमिव संतापं तनुषे ॥'

**वली तटिन्या तद्रूपैः**

तत्समैः पाशादिभिः। स्तदाह—'त्रिवलीपाशैस्तथा तथा नद्धः'। 'कामेन सोपानमिव प्रयुक्तम्' इति च।

**पृष्ठं काञ्चनपट्टकैः ॥ ११ ॥**

यथा—

'मुक्तावलिस्ते रदनाः पृष्ठं काञ्चनपट्टकम्।
नखांशवस्ते रत्नानि मध्ये क्षीणासि किं प्रिये ॥'

**शूच्यग्रतलशून्याणु वेदी सिंहादिभिः समः।**
**मुष्टिग्राह्यो भवेन्मध्यः**

अत्र मध्यस्यातिसूक्ष्मत्वात्तत्प्राधान्येनोपमानता। अत एव मुष्टिग्राह्यता तलपरिमाणता च। सूक्ष्मत्वादेव मध्ये शून्यतापि। अत एव 'सदसत्संशयगोचरोदरि' इत्यपि वर्णयन्ति।

**जघनं पुलिनोपमम् ॥ १२ ॥**

यथा—

'मदनसरितमेताम्' इत्यादि।

**पीठप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते।**

यथा—

'नितम्बः स्वर्णपीठं ते तवाङ्गुल्यश्च पल्लवाः।
ज्योत्स्नेन्दुपुष्पपीयूषफेनकान्ति स्मितं तव ॥'

'तपनीयशिला शोभा' इत्यादि। 'नितम्बस्तव मेदिनी' इत्यादि।

'चक्रेण विश्वं युधि पुष्पकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन।
जगज्जिगीषत्यमुना नितम्बमयेन किं दुर्लभदर्शनेन॥'

'बिभ्रम्य तच्चारुनितम्बचक्रे' इति नैषधात् 'रथचरणविशालश्रोणि लोलेक्षणेन' इति माघाच्च। चक्रान्तरद्वयसाम्यमत्र।

**ऊरुस्तु करिहस्तेन कदल्या करभेण च॥ १३॥**

यथा—

'कदली कदली करभः करभः करिराजकरः करिराजकरः।
भुवनत्रितयेन बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः॥'

**चरणः पल्लवाम्भोजस्थलपद्मप्रवालकैः।**

यथा—

'विजितप्रवालपल्लवकवलीकृतप्रोल्लसत्सुषमे।
पदकमले कमलाया लुठदलकः पातु देवकीसूनुः॥'

'अभ्युन्नताङ्गुष्ठनखप्रभाभिर्विक्षेपणाद्रागमिवोद्गिरन्तौ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम्॥'

**पूर्णेन्दुनाङ्गुष्ठनखौ**

यथा—

'यशः पदाङ्गुष्ठनखौ मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या।
कलाश्चतुःषष्टिरुपैतु वासं तस्यां कथं सुभ्रुवि नाम नास्याम्॥'

**गमनं हंसहस्तिवत्॥ १४॥**

यथा—

'गमनमलसयातैः' इत्यादि।

'सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविभ्रमेषु।
व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि॥'

**कटाक्षो यमुनावीचिभृङ्गावालिविषामृतैः।**

यथा—

'हालाहलं वा विलसत्सुधा वा भृङ्गावली वा यमुनोर्मयो वा।
निशाणघृष्टा मदनेषवो वा यद्वा कटाक्षो मदिरेक्षणायाः॥'

---

१. 'नास्यां' ख. २. 'तस्याम्' ख.

**ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरववद्धसः ॥ १५ ॥**

हसो हास्यम् ॥

यथा—'ज्योत्स्नेन्दुपुष्प–'इत्यादि ॥

'नूनं ते चोरिता तन्वि स्मितेक्षणमुखद्युतिः ।
स्नातुमम्भःप्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥'

मुक्ताप्यत्र गणनीया ।

'मुक्ताफलं वा स्फुटविद्रुमस्थम्' इत्यादेः ॥

**दर्शनं वमदब्जादिः**

यथा—

'धवलयदिव जगदखिलं प्लावयदिव विश्वमेव विशिखौघैः[1] ।
वमदिव कमलसहस्रं लोचनमेणीदृशो जयति ॥'

**श्वासस्तु सुरभिः शनैः ।**

यथा—

'वहन्ति प्रातरम्भोजसौरभोद्गारवासिताः ।
मन्दमन्दममी वाता निश्वासास्तावका इव ॥

**हंससारसशब्दाभ्यां वर्ण्यते नूपुरध्वनिः ॥ १६ ॥**

यथा—'सा राजहंसैः' इवेत्यादि ।

'लीलाचलस्त्रीचरणारुणोत्पलस्फुरत्तुलाकोटिनिनादकोमलः ।
सौरेरुपानूपमुपाहरन्मनःस्वरान्तरादुन्मदसारसारवः ॥'

अत्र श्रीपादानुसारिकविकल्पलताकार एतावदधिकमाह—

'वेण्याः सर्पासिभृङ्गाल्योर्धम्मिल्लस्य विधुंतुदः ।
सीमन्तस्याध्वदण्डौ च भ्रुवोः सर्पीकृपाणकौ ॥
दन्तस्य जीरका ज्ञेया मदिरा कुमुदं दृशोः ।
जिह्वायास्त्वञ्चलो दोला नासायाः पाटली तथा ।
वल्लरी लहरी पाशः शाखा बाहुद्वयस्य च ॥

१. 'विधैः' क; 'विषैः' ग.

प्रवालशाखा वाङ्गुल्याः पल्लवश्च नखस्य तु।
रक्तपुष्पाणि नाभ्यास्तु विवराम्भोरुहे समे।
वीचिसोपाननिश्रेण्यस्त्रिवल्ल्या इति च स्त्रियाम्॥
पुंसां तु वृषरक्ताक्षस्कन्धौ स्कन्धस्य संनिभौ।
भुजौ वज्रस्य गमनमुक्ष्णामित्यभिकीर्तितम्॥

**गोवर्धनस्तु** शरीरतदवयवयोर्वर्णनीयान्गुणानाह—

सौन्दर्यं मृदुताकार्श्यमतिकोमलता तथा।
कान्तिरौज्ज्वल्यमाबल्यमित्यमी वपुषो गुणाः॥
केशस्य दीर्घकौटिल्यमृदुनैबिड्यनीलता।
कपोले स्वच्छता कण्ठे द्राघीयस्त्वं त्रिरेखता॥
नेत्रे स्निग्ध्यं विशालत्वं लोलतापाङ्गदीर्घता।
नीलता प्रान्तलौहित्यं श्वैत्यं निबिडपक्ष्मता॥
अधरेऽत्यन्तमाधुर्यमुच्छूनत्वं सुरक्तता।
दन्तस्य श्वैत्यलौहित्यद्वात्रिंशत्तातिदीप्तता॥
माधुर्यं स्पष्टता वाचां मृदुता समता भुजे।
करेऽतिमृदुता शैत्यं सर्वभागे च शोणता॥
स्तने श्यामाग्रतौन्नत्यविस्तारदृढपाण्डुता।
रोमाल्या मार्दवं सौक्ष्म्यं श्यामता नाभिगामिता॥
कान्तिर्वृत्तानुपूर्वत्वं जङ्घयोर्नातिदीर्घता।
अत्यन्तमन्दता शैत्यं निश्वासेऽतिसुगन्धिता॥

इत्यादि।

मया संक्षेपशीलेन गच्छता मृदु वर्त्मनि।
सर्वशिष्टानुरोधेन दिङ्मात्रमिह दर्शितम्॥

इत्यलंकारशेखरे वर्णकरत्ने योषिद्वर्णनमरीचिः॥ १३॥

---

चतुर्दशो मरीचिः।

इदानीं पुरुषवर्णनमाह—

**राज्ञामत्यन्तपीनत्वमुच्चता दीर्घबाहुता।**

अत्र पुंसामिति वक्तव्ये प्रायशः कवीनां राजान एव वर्णनीया भवन्तीतिताननुगृह्णता महर्षिणा राज्ञामित्युक्तम्।

यथा—

'व्यूढोरस्को वृषस्कन्धः शालप्रांशुः' इत्यादौ।

**युगार्गलभुजङ्गेन्द्रदण्डस्तम्भेभहस्तकैः॥ १॥**

**बाहुः**

यथा—

'युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः।'

'भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज।'

'अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता।

उरःश्रिया तत्र च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता॥'

'नागेन्द्रगमनः पीनमैरावतकरायतम्।

दोर्दण्डभुवनागारस्तम्भं राजा ममर्श सः॥'

**वक्षः कपाटेन शिलापट्टेन वर्ण्यते।**

यथा—

'तस्याभवत्सूनुरुदारशीलः शलः शिलापट्टविशालवक्षाः।

जितारिपक्षोऽपि शिलीमुखैर्यः शालीनतामाव्रजदीड्यमानः॥'[1]

**अंसे विपुलता**

यथा—

'युवा युगव्यायतबाहुरंसलः' इत्यादौ।

**मध्ये कार्श्यम्**

यथा—

'अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः।

आरोप्य चक्रभ्रममुष्णरश्मिस्त्वष्ट्रेव यन्त्रोल्लिखितो विभाति॥'

इत्यादौ।

**उन्नतता पदे॥ २॥**

---

१. 'शालीनतापव्रजमस्तमानः' ख.

यथा—

'कूर्माकारं चरणयुगलं धूतदिग्दन्तिशुण्डा-
दण्डावूरू भुजयुगमपि व्यक्तनागेन्द्रशोभम्।
प्रायः पृथ्वीधरणविषये तत्समर्थान्पदार्था-
नेकीकृत्य त्रिभुवनसृजा निर्मिता यस्य मूर्तिः॥'

**स्तनयोरिव नारीणामत्यन्तस्वच्छता हृदि।**

यथा—

'सा निर्मले तस्य मधूकमाला हृदि स्थिता च प्रतिबिम्बिता च।
कियत्यमग्ना कियती च मग्ना पञ्चेषुबाणालिरिव व्यलोकि॥'

नारीस्तनस्वच्छता यथा—

'प्रतिफलितं गलगरलं कज्जलबुद्ध्या पयोधरे देव्याः।
प्रातः प्रोञ्छितुमिच्छुर्गिरिजाहसितो हरो जयति॥'

**कान्तिप्रयोजकं यावत्तावत्तद्वत्प्रवर्ण्यते॥ ३॥**

तद्वद्योषिद्वत्। यथा—

'कृतावरोहस्य हयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती।
तयोः[1] प्रवालैर्वनयोस्तथाम्बुजैर्नियोद्धुकामे किमु बद्धवर्मणी॥'

'धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिव॥'

'चन्द्राननचन्द्रदिनं मृगलोचनमृगशिरश्च नक्षत्रम्।
तिथिरतिथिप्रियं[2] नवमीशुभयोगः स्वर्भग भाति भवान्॥'

'कामं कमलपत्राणां नेत्रे तस्यानुकारिणी।'

इत्यादि। विस्तृतमन्यत्र। इदमुपलक्षणम्। आह्लादकत्वपुरस्कारेण[3] चन्द्रादिसाम्यमुभयोरपि।

---

१. इदमुत्तरार्धं क-ग-पुस्तकयोर्नास्ति. २. इदमर्धं क-ग-पुस्तकयोर्नास्ति.
३. 'साम्येन' ग.

यथा—

'इत्थं द्विजेन द्विजराजकान्तिः', 'इन्दुप्रभामिन्दुमतीमवेत्य', 'स्फुरत्कमलप्रभे' इति श्रुतबोधे ।

प्रतापोऽर्काग्निवज्राद्यैः कीर्तिश्चन्द्रादिशुभ्रकैः ।
करे पद्मोर्ध्वरेखादि पदे छत्रध्वजादिकम् ।
गमनं हस्तिसिंहाभ्यां कार्कश्यं च भुजादिषु ॥ ४ ॥

स्फुटमिहोदाहरणम् । गमनमिति ।

यथा—

'पूर्वं यथा देवपतेर्नियोगं मूर्ध्ना वहन्कार्मुकबाणहस्तः ।
प्राप्तस्तथैवाशु गजेन्द्रगामी प्रोद्भिद्यमानो नवयौवनेन ॥'

'ततो मृगेन्द्रस्य मृगेन्द्रगामी' इत्यादौ ।

स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥ ५ ॥

अत्रादिपदादृषभोऽपि ।

कर्तव्या रत्नसिंहाद्या नरराजादितः पदात् ।
विशेष्यभावो द्युसदां वरभूमिविशेषणात् ॥
यद्यत्सामुद्रिकाद्युक्तं तद्वर्ण्यमुभयोरपि ।
किंतु शिष्टप्रयोगोऽत्र नियामकतयेष्यते ॥

इत्यलंकारशेखरे वर्णकरत्ने पुरुषवर्णनमरीचिः ॥ १४ ॥

पञ्चदशो मरीचिः ।

इदानीं सादृश्यप्रापकप्रकारमाह—

इवाद्यैः प्रतिमानाद्यैः समानाद्यैर्निभादिभिः ।
बन्धुचौरारिवंशाद्यैः सादृश्यप्रतिपत्तयः ॥ १ ॥

---

१. 'इति' क-ग. २. 'तीं बभाषे ग.' ३. 'भ्यादि' ग. ४. 'पतिर्नि' ख. ५. 'पुंसः' ग; 'हंस' क.

इवाद्यैरिति। तदाहुः—

**इववद्वायथाशब्दाः समाननिभसंनिभाः।**
**तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः।**
**सदृक्सदृशसंवादिशब्दाः सादृश्यवाचकाः॥ २॥**

प्रतिमानाद्यैरिति।

प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया।
प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्॥

समानाद्यैर्निभादिभिरिति।

वाच्यलिङ्गाः समानश्च सदृक्षः सदृशः सदृक्।
साधारणः समस्तुल्यः स्युरुत्तरपदे त्वमी।
निभसंकाशनीकाशप्रतीकाशोपमादयः॥

बन्ध्विति।

बन्धुर्मित्रं वयस्यश्च प्रेयान्प्रीतः सुहृत्सखा।

उपमानोपमेययोरेवम्। चौरेति।

चौरैकागारिकस्तेनदस्युतस्करमोषकाः।
प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः॥

मुखकान्तिचौरश्चन्द्र इत्यादि कर्तव्यम्। अरीति।

रिपुवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः।
द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः॥

चन्द्रस्य वैरि मुखमित्यादि कर्तव्यम्। वंशाद्यैरिति।

संततिर्गोत्रजननकुलान्यभिजनान्वयौ।
वंशोऽन्ववायः संतानः सपिण्डास्तु सनाभयः॥
समानोदर्यसोदर्यसगर्भ्यसहजाः समाः।
सगोत्रबान्धवज्ञातिबन्धुश्च स्वजनः समाः॥

चन्द्रसगोत्रं चन्द्रसोदरं मुखमित्यादि कर्तव्यम्।

प्रकारान्तरमाह—

भृतकाद्यैर्भृत्याद्यैर्न्यक्कारार्थक्रियापदैः ।
संदेहतत्तद्वाक्याद्यैः सादृश्यं प्रतिपद्यते ॥ ३ ॥

भृतकाद्यैरिति ।

भृतको भृतिभुक्कर्मकरो वैतनिकश्च सः ।

'मुखस्य भृतकश्चन्द्रः' इत्यादि कर्तव्यम् । भृत्याद्यैरिति ।

भृत्यदासेयदासेरदासगोप्यकचेटकाः ।
नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाः ॥

मुखस्य दासः शशीत्यादि कर्तव्यम् । न्यक्कारार्थेति ।

न्यक्करोति तिरस्कुर्वन्प्रतिक्षिपति भर्त्सति ।
आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ॥

त्वन्मुखबिम्बश्चन्द्रं न्यक्करोति, इत्यादि विधेयम् ।

तृणीकृतमधिक्षिप्तं निरस्तं च लघूकृतम् ।
अनादृतमवज्ञातमम्भोजं त्वन्मुखेन्दुना ॥

संदेहेति—'किमिन्दुः किं पद्मम्' इत्यादि । तत्तद्वाक्येति ।

यथा—

तस्य पुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
तमर्थमनुबध्नाति तच्छीलं तन्निषेधति ॥
तस्य चानुकरोतीति तमर्थमनुधावति ।
आकारयत्याह्वयते जिगीषति सरोरुहम् ॥
विधिरम्भोजसाम्राज्ये मुखेन्दुमभिषिञ्चति ।
तस्या मुखेन सदृशं कः कर्तुं चन्द्रमीश्वरः ।
भवतीन्दुर्न दासोऽपि त्वदास्यं चेत्किमिन्दुना ॥

चन्द्रमूर्ध्नि पदं धत्ते वृथा चन्द्र तपस्यति ।
लीयते चन्द्रमाः क्वापि बिभेति च पलायते ॥

दण्डी तु—

प्रतिच्छन्दसरूपादिसजातीयानुवादिनः ।
सलक्षणसपक्षाभसवर्णतुलितादिकम् ॥
कल्पदेशीयदेश्यादि ये चान्यूनार्थवादिनः ।
समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
भवन्तीवादिशब्दाश्च सादृश्यप्रतिपत्तये ॥

इत्याहुः ।

कवीनां घटनान्यैव चराचरविलक्षणा ।
अकर्तुमन्यथा कर्तुं कर्तुं या क्षमते जगत् ॥

इति केशवमिश्रकृतेऽलंकारशेखरे वर्णकरत्नम् ।

इदानीं कविसंप्रदायस्य सर्वापेक्षयाभ्यर्हितत्वं दर्शयन्नाह—

**असतोऽपि निबन्धेन सतामप्यनिबन्धनात् ।**
**नियमस्य पुरस्कारात्संप्रदायस्त्रिधा कवेः ॥ १ ॥**

असतोऽपीति । वस्तुगत्या यन्न भवति तदपि कविभिर्निबध्यते ।

यथा—

रत्नानि यत्र तत्राद्रौ हंसाद्यल्पजलाशये ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि[1] ॥
तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता ।
शुक्लत्वं कीर्तिपुण्यादौ कार्ष्ण्यं चाकीर्त्यघादिषु ॥
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः ।
ज्योत्स्नायानं चकोराणां सेवालं सर्ववारिषु ॥
केसराशोकयोः सत्स्त्रीगण्डूषात्पादघाततः ।
मासान्तरेऽपि पुष्पाणि रोमालिस्त्रिवलिस्त्रियाम् ॥

सतामपीति । पारमार्थिकमपि न निबध्यते ।

१. 'नदेष्वपि' ग.

यथा—

वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने।
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता।
नारीणां श्यामता पातः स्तनयोर्यच्च वा ह्रिये॥[1]

नियमस्येति।

हिमवत्येव भूर्जत्वक् चन्दनं मलये परम्।
हेमन्तशिशिरौ त्यक्त्वा सर्वदा कमलस्थितिः॥
सामान्यग्रहणे शौक्ल्यं पुष्पाम्भश्छत्रवाससाम्।
ध्वजचामरहंसानां हारस्य बकभस्मनोः॥
कृष्णत्वं शैलवृक्षादि मेघवारिधिवीरुधाम्।[2]
भिल्लका चासुराणां च धूपपङ्कशिरोरुहाम्॥
लौहित्यं धातुमाणिक्यजपारत्नविवस्वताम्।
पद्मपल्लवबन्धूकदाडिमीकरजादिषु॥
पीतत्वं शालिमण्डूकवल्कलेषु परागके।
वर्षास्वेव शिखिप्रौढिर्मधावेव पिकध्वनिः॥

अन्यच्च—

कमला संपदोः कृष्णहरितोर्नागसर्पयोः।
पीतलोहितयोः स्वर्णपरागाग्निशिखादिपु॥
चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः।
दानवासुरदैत्यानामैक्यमेवाभिसंहितम्॥

अपि च।

चिरंतनस्यापि तथा शिवचन्द्रस्य बालता।
मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः॥
भुवनानि निबध्नीयात्रीणि सप्त चतुर्दश।
चतस्रोऽष्टौ दश दिशश्चतुरः सप्त चाम्बुधीन्॥

---

१. 'नम्रता तथा' ग. २. 'नीरधि' ख.

अष्टादश स्मृता विद्याश्चतस्रश्च चतुर्दश ।
ये स्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः ॥
महत्त्वमादौ सर्गान्ते सूक्ष्मता जगतामपि ।
शैलादिर्भिद्यते शब्दान्नभः[1] शतधनूपरि ॥
नाम तत्तदुपाधौ स्याच्छंकरो वृषवाहनः ।
चिह्नत्वे[2] च वृषाङ्कोऽयं ध्वजे सत्त्वाद्वृषध्वजः ॥
शूली, न सर्पी गिरिशः; शशी, न हरिणी विधुः; ।
इन्दुमौलिर्महादेवो गङ्गामौलिर्न तु क्वचित् ॥
रलयोर्डलयोश्चैव बवयोः शसयोर्न भित् ।
नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ ॥
इववद्वाहिहीहस्मबतवैतुकिलैव च ।
पदान्येतानि देयानि पादस्याद्ये न जातुचित् ॥
भूतेन्द्रभारतेशात्प्राञ्महच्छब्दो निरर्थकः ।
दुरर्थो ब्राह्मणे वृष्टिभोज्यौषधपथादिषु ॥

इत्यलंकारशेखरे कविसंप्रदायरत्ने नियममरीचिः ॥ १५ ॥

षोडशो मरीचिः ।

इदानीं संक्षेपेण वर्णनीयान्याह—

वर्ण्यश्च[3] राजा देवी च देशो ग्रामः पुरी सरित् ।
सरोऽब्ध्यरण्योद्यानाद्रिप्रयाणरणवाजिनः ॥
हस्त्यर्कचन्द्रावृतवो विवाहोऽथ स्वयंवरः ।
सुरा पुष्पाम्बुसंभोगः विश्लेषमृगयाश्रमाः ।
कला[4] ऋतुवयःसंधी धातुवृक्षाभिसारिकाः ॥

एतेषां[5] विशिष्य वर्णप्रकाराः प्रदृश्यन्ते[6]—

नृपे कीर्तिप्रतापाज्ञादुष्टशान्तिविवेकिताः ।
धर्मप्रयाणसंग्रामशस्त्राभ्यासनयक्षमाः ॥

---

१. 'नभःपूर्तिरथोद्गमम्' ग. २. 'चिह्नत्वेन' ख-ग. ३. 'वर्ण्याश्च' क-ख. ४. 'कालान्तरं' ग. ५. 'एषां विशेषवर्णनमाह' ग. ६. 'प्रदर्श्यन्ते' ख.

प्रजापा[1]लोऽरिशैलादिवासोरिपुरशून्यता ।
औदार्यधैर्यगाम्भीर्यशौर्यैश्वर्योद्यमादयः ॥
**देव्यां** सौभाग्यलावण्यशीलशृङ्गारमन्मथाः ।
त्रपाचातुर्यदाक्षिण्यप्रेममानव्रतादयः ॥
**देशे** बहुखनिद्रव्यपशुधा[2]न्यकरोद्भवाः ।
दुर्गग्रामजनाधिक्यनदीमातृकतादयः ॥
**ग्रामे** धान्यलतावृक्षसरसीपशुपुष्टयः ।
क्षेत्रादिह[3]ट्टकेदारग्रा[4]मेयीमुग्धविभ्रमाः ॥
**पुरे**ऽट्टपरिखावप्रप्रतोलीतोरणध्वजाः ।
प्रासादाध्वप्रपारामा वापी वेश्या सती नदी ॥
**सरित्य**म्बुधियायित्वं वीच्यो वनगजादयः ।
पद्मानि षट्पदा हंसनक्राद्याः कूलशाखिनः ॥
**सरस्य**म्भोलहर्यम्भो गजाद्यम्बुजषट्पदाः ।
हंसनक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः ॥
**अब्धौ** द्वीपाद्रिरत्नोर्मिपोतयादोजलप्लवाः ।
विष्णुकुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्दपूरणम् ॥
**अरण्ये** हि वराहेभयूथसिंहादयो द्रुमाः ।
काकोलूककपोताद्या भिल्लभल्लूदवादयः ॥
**उद्याने** स[6]रणिः सर्वफलपुष्पलतादयः ।
पिकालिकेलिहंसाद्याः क्रीडा चाप्यध्वगस्थितिः ॥
**शैले** म[5]हौषधीधातुवंशकिंनरनिर्झराः ।
शृ[7]ङ्गपादगुहारत्नवनजीवाद्युपत्यकाः ॥
**प्रयाणे** भेरिनिःस्वानभूकम्पबलधूलयः ।
क[8]रभोक्षगजच्छत्रवणिक्शकटवेसराः ॥

---

१. 'पालारि' ग. २. 'धान्याकरो' ख-ग. ३. 'रुद्र' ख. ४. 'ग्रामस्त्री' ग; 'ग्रामीणा' ख. ५. 'मही' ख. ६. 'सारणिः' ख. ७. 'भृगुपात्' ख. ८. 'परक्षोभ' ख.

युद्धे तु वर्म[1]बलचौररजांसि तूर्य-
निर्घातनादशरमण्डपरक्तनद्यः।
छिन्नातपत्ररथचामरकेतुकुम्भि-
योधाः सुरीवृतभटाः सुरपुष्पवृष्टिः॥
अश्वे वेगित्वमौन्नत्यं तेजः सल्लक्षणं स्थितिः।
खुरोत्खातरजःप्रौढिर्ज्ञातिर्गतिविचित्रता॥
गजे सहस्रयोधित्वमुच्चता कर्णचापलम्।
अरिव्यूहविभेदित्वं कुम्भयुक्तामदालयः॥
सूर्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः।
तारेन्दुदीपकौषधिवूकतमश्चौरकुलटार्तिः॥
चन्द्रे कुलटाचक्राम्बुजचौरैर्विरहितमोर्तिरौज्ज्वल्यम्।
जलधिजलनेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः॥
सुरभौ दोलाकोकिलदक्षिणवातद्रुपल्लवोद्भेदाः।
जातीतरपुष्पचयाभ्रमञ्जरीभ्रमरझाङ्काराः॥
ग्रीष्मे पाटलमल्लीतापसरःपथिकशोषवातोल्काः।
सक्तुप्रपाप्रपास्त्रीमृगतृष्णाम्रादिफलपाकाः॥
वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ।
जातीकदम्बकेतकझञ्झानिलनिम्नगाहलिप्रीतिः॥
शरदीन्दुरविपटुत्वं जलाच्छतागस्त्यहंसवृषदर्पाः।
सप्तच्छ[3]दासिताभ्राब्जरुचिः शिखिपक्षमदपाताः॥
हेमन्ते दिनलघुता मरुबकयववृद्धिशीतसंपत्तिः।
शिशिरे कुन्दसमृद्धिः कमलहतिर्वा गुडामोदः॥
विवाहे स्नानशुद्धाङ्गभूषातूर्यत्रयीरवाः।
वेदीसंगीतहोमादिलाजमङ्गलवर्तनम्॥
स्वयंबरे शचीरक्षा मञ्चमण्डपसज्जनाः।
राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम्॥

---

१. 'चर्म' ख. २. 'मीन' क; 'वन' ग. ३. 'छदस्मितार्को' ख.

**सुरापाने** विकलता स्खलनं वचने गतौ।
लज्जा मानच्युतिः प्रेमाधिक्यं रक्ताक्षता भ्रमः॥
**पुष्पावचये** पुष्पावचयः पुष्पार्पणार्थने दयिते।
मालागोत्रस्खलने क्रोधो वक्रोक्तिसंभ्रमाश्लेषाः॥
**जलकेलौ** सरःक्षोभश्चक्रहंसापसर्पणम्।
पद्मज्यानिः पयःक्षेपो दृग्रागो भूषणच्युतिः॥
**सुरते** सात्त्विका भावाः शीत्कारः कुड्मलाक्षता।
काञ्चीकङ्कणमञ्जीररवोऽधरनखक्षते॥
**विरहे** तापनिःश्वासचिन्तामौनकृशाङ्गताः।
अब्दसंख्या निशादैर्ध्यं जागरः शिशिरोष्णता॥
**मृगयायां** च संचारो वागुरानीलवेषता।
मृगाधिक्यं मृगत्रासो हिंस्रद्रोहो गतित्वरा॥
**आश्रमे**ऽतिथिपूजैणविश्वासो हिंस्रशान्तता।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलं द्रुमाः॥
पद्मकेकोत्सवः **प्रातर्मध्याह्ने** तापसंप्लवः।
**सायं** सूर्यातिलौहित्यं चक्रपद्मादिविप्लवः॥
पूर्वत्वग्रेतनत्वोश्च संधिं व्याप्योपवर्णनम्।
एवं शैशवतारुण्यमाध्यस्थ्यं विषमं च तत्॥
**अन्धकारे**ऽतिकाठिन्यं विश्वलोपसमर्थता।
आकस्मिकसमारम्भो निःशङ्कमभिसारिकाः॥
**वृक्षे** प्रचुरशाखात्वं दलादर्शितसूर्यता।
उच्चता प्रसवोत्कर्षो वयःपथिकसेव्यता॥
**अभिसारे** भयभ्रंशो मञ्जीरादितिरस्क्रिया।
साहसं रागितोत्कर्षः कालानुगुणवस्त्रता॥

इत्यलंकारशेखरे कविसंप्रदायरत्ने वर्णनीयमरीचिः॥ १६॥

---

१. 'मद' ख.

सप्तदशो मरीचिः।

इदानीं नियमान्तरमाह—

श्वेताश्चन्द्रादयो ज्ञेया नीलाः श्रीकेशवादयः।
शोणास्तु क्षात्रधर्माद्याः पीता दीपशिखादयः।
धूसरा [१]रथधूल्याद्या ज्ञातव्याः काव्यवर्त्मनि॥

अत्रैवं ज्ञातव्यम्—

श्वेतानि(?)चन्द्रशक्राश्वशंभुनारदभार्गवाः।
हली शेषाहिशक्रेभौ सिंहसौधशरद्धनाः॥
सूर्येन्दुकान्तनिर्मोकमन्दारद्रुहिमाद्रयः।
हिमहासमृणालानि [२]स्वर्गङ्गेभरदाभ्रकम्।
शिकतामृतलोध्राणि गुणकैरवशर्कराः॥
'नीलानि कृष्णचन्द्राङ्कव्यासरामधनंजयाः।
शनिद्रुपदजा काली राजपट्टविदूरजम्॥
विषाकाशकुहू[३]शस्त्रागुरुपापतमोनिशाः।
रसावद्भुनश्शृङ्गारौ मद[४]तापिच्छराहवः॥
सीरिचीरं यमो रक्षः कण्ठः खञ्जनकेकिनोः।
कृत्या छाया गजाङ्गारखलान्तःकरणादयः॥'
'शोणानि क्षात्रधर्मश्च त्रेता रौद्ररसस्तथा।
चकोरकोकिलापारावतनेत्रं कपेर्मुखम्॥
तेजः सारसमस्तं च भौमकुङ्कुमतक्षकाः।
जिह्वेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः॥'
पीतानि [५]दीपजीवेन्द्रगरुडेश्वरदृग्जटाः।
ब्रह्मावीररसस्वर्णकपिद्रापररोचनाः।
किञ्जल्कचक्रवाक्याद्या हरितालमनःशिला॥
धूसराणि रजो लूता करभो गृहगोधिका।
कपोतमूषकौ दुर्गाकाककण्ठखरादयः॥

---

१. 'अथ' ग; 'लिकपोताद्याः' क. २. 'स्वर्दण्डेभर' क-ग. ३. 'शस्त्री' क; 'शस्त्या' ख. ४. 'तापिञ्छ' ख. ५. 'नीप' ख.

इदमुपलक्षणम् ।

हरिताः सूर्यतुरगा बुधो मरकतादयः ।

इत्यपि बोध्यम् ।

द्वैरूप्ये चाप्रसिद्धौ च नियमोऽयमुदाहृतः ।

अन्यद्वस्तु यथा यत्स्यात्तत्तथैवोपवर्ण्यते ॥

इत्यलंकारशेखरे कविसंप्रदायरत्ने शुक्लादिनियममरीचिः ॥ १७ ॥

---

अष्टादशो मरीचिः ।

इदानीं नियमान्तरमाह—

**एकस्मादासहस्रं च यद्यद्वस्तु यथा भवेत् ।**
**तत्तत्कविप्रयोगेण ज्ञातव्यं काव्यमिच्छता ॥ १ ॥**

अत्रैवं ज्ञातव्यम्—

**एक** ऐन्द्रः करी चाश्वो गजास्यरदशुक्रदृक् ।
**द्वयं** पक्षनदीकूलनरश्रुतिभुजादिकम् ॥
**त्रयं** कालाग्निभुवनगङ्गामार्गेशदृग्गुणाः ।
ग्रीवारेखा महीकोणस्तथा शूलशिखावली ॥
संध्या पुरः पुष्कराणि रामविष्णुज्वराङ्घ्रयः ।
**चत्वारि** वेदब्रह्मास्यवर्णाब्धिहरिबाहवः ॥
स्वर्दन्तिदन्तसेनाङ्गोपाययामयुगाश्रमाः ।
**पञ्च** पाण्डवरुद्रास्येन्द्रियस्वर्द्रुव्रताग्नयः ॥
महाभूतमहापापमहाकाव्यमहामखाः ।
पुराणलक्षणप्राणानिलवर्गेन्द्रियार्थकाः ॥
**षड्** वज्रकोणत्रिशिरोनेत्रतर्काङ्गदर्शनम् ।
चक्रवर्तिमहासेनवदनानि गुणा रसाः ॥
**सप्त** पातालभुवनमुनिद्वीपार्कवाजिनः ।
वाराश्च स्वरराज्याङ्गव्रीहिवह्निशिखादयः ॥
**अष्टौ** योगाङ्गवस्वीशमूर्तिदिग्गजसिद्धयः ।
ब्रह्मश्रुतिव्याकरणदिक्पाला हि कुलाद्रयः ॥

**नवा**ङ्गद्वारभूखण्डकृत्तरावणमस्तकाः।
व्याघ्रीस्तनसुधाखण्डशेवध्यङ्करसग्रहाः॥
**दश** हस्ताङ्गुलीशंभुबाहुरावणमौलयः।
कृष्णावतारदिग्विश्वेदेवावस्थेन्दुवाजिनः॥
**एकादश** महारुद्राः सेनाश्च कुरुभूपतेः।
**द्वादशार्का** राशिमाससंक्रान्तिगुहबाहवः॥
सारिकोष्ठकसेनानीनेत्रक्ष्मापतिमण्डलाः।
**त्रयोदश** स्युस्ताम्बूलगुणा अथ **चतुर्दश**॥
विद्यान्वयमनुस्वाराट्भुवनध्रुवतारकाः।
तिथयः स्युः **पञ्चदश षोडशे**न्दुकलाम्बिकाः॥
**अष्टादश** द्वीपविद्यापुराणस्मृतिधान्यकम्।
**विंशती** रावणभुजाङ्गुल्योऽथ **शतं** यथा॥
धार्तराष्ट्राः शतभिषक् तारकाः पुरुषायुषम्।
रावणाङ्गुल्यब्जदलशक्रयज्ञाब्धियोजनम्॥
**सहस्रं** जाह्नवीवक्त्रशेषशीर्षाम्बुजच्छदाः।
रविबाणार्जुनकरवेदशाखेन्द्रदृष्टयः॥
उदाहरणमेतेषां प्रसिद्धत्वान्न लिख्यते।
प्रहते केवलं पान्था मादृशाः काव्यवर्त्मनि॥

इति संख्यानियममरीचिः।

इति केशवमिश्रविरचितेऽलंकारशेखरे कविसंप्रदायरत्नम्॥

इदानीं प्रकारमुद्दिशन्नेव[1] कवीनां प्रकर्षबीजमाह—

**गतागतसमत्वं च संस्कृतप्राकृतैक्यताम्।**
**तथा वचनयोः साम्यं धर्मिधर्माभिधायि च॥ १॥**
**कुर्वन्ति कवयः शक्ताः समस्यापूरणादिकम्।**
**आद्यं चतुष्टयं तत्र चित्रकाव्योपकारकम्॥ २॥**

---

१. 'मुपदिशन्नेव' ख·ग.

तत्र गतागतेत्यादि। यथा[1]—

'मम रुरु मध्यम सहास कारिका-
वरव वनदानव सरसीरस गजभुजग।
तरुणीरुत रदसोदर नदभेदन
वरभैरव कलपुलक पतदातप॥'

इत्यादि॥

चकारादसाम्येऽपि स्फुटार्थता यथा—

'जरा नदी मालिका राजते दीनरक्षी पिनाकिना नन्दनवन सहसात्वत' इत्यादि।

'रेजिरे बभूव तिष्ठति' इत्याख्याते।

**संस्कृतेत्यादि**। यथा—

तत्र पुल्लिङ्गे—

'हाराहारविहारसारसमराः संभोगरोगाम्बराः
संहारामरवारवारणरणाट्टं[2]कारतीराकराः।
लोलोल्लासविलासवायसहराहंकारहीराङ्कुरा
नीहारोरगताररागतरला गोविन्दकन्दोदराः॥'

स्त्रीलिङ्गे—

'धरणी धारणी गोणी रोहिणी रमणी मणी।
कन्दरी लहरी रामा नारी भेरी वसुंधरा॥'

नपुंसके—

'जलपलफलमूलं वारिकीलालतूलं
वनपललदुकूलं तुङ्ग[3]गम्भीरकूलम्।
सलिलकमलचीरं खण्डराजीवनीरं
हलरजतकुटीरं दारुनालं पटीरम्॥'

---

1. 'तद्यथा—' ग. २. 'ट्टंकार' क-ख. ३. 'तुण्ड' ख.

(आख्याते—)

'भण गच्छ देहि संहर कुरु रोचय मारयावगच्छैहि।
अवलोकयावचिन्तय[1] खादेति च धातुजं विद्धि॥'

एकस्मिन्नेवार्थे बहुवचनैकवचनयोः साम्यं यथा—

क्रव्यादो देवरो वारि फलिनो बर्हिणो नरः।
तादृशाद्या भूरुहाद्या मासफेरवसोमपाः।
एवं रथिनमन्थानशब्दाः खुरणसादयः॥

धर्मिधर्माभिधायि पदं यथा—

सुषिरार्द्रप्रतीहारचुल्लपिल्लादिशात्रवाः।
स्मेरालसौ मत्सरश्च धर्मिधर्माभिधायकाः[2]॥

चकाराद्विशेषसामान्यवाचकभावाभाववाचकपरिग्रहः।

शकुन्तधातुमरुतो गरुत्मत्कामदर्शनम्।
अक्षं वधूश्च गमनचेटकाद्या द्विवाचकाः।
अपिधानाद्यपूपादिभावाभावप्रदर्शकम्॥

आदिपदात् आनादयुतसिद्धावलग्नावतंसादिपरिग्रहः[3]।

इत्यलंकारशेखरे कविसामर्थ्यरत्ने चित्राद्युपकारमरीचिः॥ १८॥

---

ऊनविंशो मरीचिः।

समस्या पूरणादिकमिति। इदं तु कठिनसमस्याभिप्रायेण। तदुक्तम्—'कवयः शक्ताः' इति। तत्रैवं प्रकारः—

यदीदं स्यात्तदेदं स्यात्[4]कावा स्याद्विषमेति च।
अयोग्यः खलु कः शब्दः कुत्र संसर्गधीर्न हि॥ १॥

प्रश्नोत्तरात्पदे भङ्गात्पूर्वस्मिन्नाद्ययोजनात्।
मिथ्याभिधाय्यसावेवमेष सार्वत्रिकः क्रमः॥ २॥

---

१. 'चिन्त खादेत धा०' क; 'चिन्तय धारय खादयेति धा०' ग. २. 'धर्मधर्म्यभि' क. ३. 'आरात्–अयुत–भिन्न–प्र' क·ग. ४. 'कर्ता विषयमेति' ग.

प्रश्नेति । 'हारामहादेवरतातमातः' इत्यत्र—

'के मण्डयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः ।
किमाह सीता दशवक्त्रनीता हारामहादेवरतातमातः ॥'

इतिवत् । पद इति । मृगात्सिंहः पलायत इत्यादौ । मृगमत्ति मृगात् ते पलाय मांसाय इत्यर्थकरणादित्यर्थः । पूर्वस्मिन्निति । 'प्रत्यर्थिकीर्तिनिर्जितकज्जलधवलं [1]जपाकुसुमम्' इतिव[2]त् ॥ यथायथमे[3]वान्तरप्रकारस्तु—

'एतत्स्वप्ने मया दृष्टं चि[4]त्रन्यस्तं विलोक्यताम् ।
अरिष्टमेतत्संजातमिन्द्रजालं विभावय ॥'

**प्रबोधयति बालांश्च यथायोग्यं प्रपूरयेत् ।**

सुबोधमिदम् । [5]प्रकारान्तरं तु—

**देवर्षिवरशापाद्यैर्मणिमन्त्रौषधादिभिः ॥ ३ ॥**
**मनोरथेन तपसा पापात्पुण्यचयेन च ।**
**मायया शम्बरादीनां सर्वं संभावयेत्कविः ॥ ४ ॥**

[6]अत्रादौ द्वन्द्वद्वयम् । तपस्तात्कालिकं पुण्यम् । श्रीपादस्तु—

'रागवात्सल्यशोकाद्यैर्वियोगेन मदेन च ।
मतिभ्रमेण शौर्येण विपरीतकरः पुमान् ॥'

इत्याह ॥ असाधारण्ये[7]न तत्प्रकारस्तु—

**कल्पाद्यब्ध्यणुसंसर्गप्रतिचक्षुष्यणुर्महान् ।**
**युगान्[8]तातिमिदूरोच्चनिकटे महदप्यणु ॥ ५ ॥**
**हरेरधोमुखत्वेन बिम्बाच्च विपरीतता ।**
**दृक्पीडनात्तनुव्यूहाद्भावनाबिम्बतो बहु ॥ ६ ॥**
**तमोकीर्त्यादिभिः कार्ष्ण्यं शौक्ल्यं ज्योत्स्नादिकीर्तिभिः ।**
**लौहित्यं रक्तपित्तादिसंध्यारत्नाधरादिभिः ॥ ७ ॥**

[9]तिमिर्वृद्धताप्रयुक्तचक्षुर्मान्द्यम् । इयं च 'शैलीयति पिपीलिका' इत्यादौ,

---

१. 'यावककुसुमम्' ग. २. नास्ति, ख; 'यावत्' ग. ३. 'भावा' ग. ४. 'चित्रं' ग. ५. ख-पुस्तके नास्ति. ६. 'तत्र द्वन्द्व' ग. ७. 'ण्येन तत्तत्प्रका' क. ८. 'न्तमति' ख. 'न्तमिति'; घ; 'न्ते चातिदूरो' ख-ग. ९. 'तिमिरं' ख-ग.

'मशकीयति कुञ्जरः' इत्यादौ। 'विपरीतोऽभवज्जनः' इत्यादौ। 'एकोऽपि स शतं नृपः' इत्यादौ। 'मषीयति जगत्त्रयम्' इत्यादौ। 'श्वेतद्वीपायते जगत्' इत्यादौ। 'पद्मरागायते जगत्' इत्यादौ क्रमेण बोध्यम्॥

कासांचित्समस्यानां नानाभुवनीयसंसर्गविषयत्वात्तत्प्रकाराः प्रदर्श्यन्ते—

**जगतः प्रलये भूमिर्द्यौर्गरुत्मत्सुधोद्धृता।**
**वलीष्टौ[1] हाटकेशीययात्रायां[2] द्वौ रसातले॥ ८॥**

हाटकेशः पातालशंभुः। रसातल इति त्रितयान्वयि[3]। तथा—

**द्यौर्बिम्बेन जलेशाद्योरब्धिमन्थे[4] द्वयं भुवि।**

भुवीत्युभयान्वयि॥ तथा—

'पातालं वा नरोत्क्षिप्तचन्दनद्रुमपन्नगैः।
ध्वजप्रासादधूलीभिर्भूमिः स्वर्गमुपाययौ॥'

**अगस्त्याम्भोधिपानादिपौराणिककथाशतैः॥ ९॥**
**शिवादिदेवसंचारैः सादृश्यैः सर्ववर्णनम्।**
**श्रीकृष्णस्योदरे सर्वसंसर्गः सार्वकालिकः॥ १०॥**

पातालं भूमिश्च स्वर्गं ययावित्यर्थः। तथा—

शिवादीति। यत्र शिवो याति तत्र तत्रान्तरीयकतया सर्पचन्द्रानलादीनामपि गमनमावश्यकमित्यर्थः। सादृश्यैरिति। लक्षणया 'सूच्यग्रे पर्वतद्वयम्' इत्यादौ। औचित्येन—

संग्रामकुम्भिमुक्ताभिर्दिवा तारकितं नभः।

इत्यादौ। राजशेखरस्तु—

**उत्पाटितैर्नभोनीतैः शैलैरामूलबन्धनात्।**
**तांस्तानर्थान्समालोक्य समस्यां पूरयेत्कविः॥ ११॥**

वृद्धास्तु—

**कः प्रत्येति प्रतीमो न द्राक्प्रत्येति प्रतीहि च।**
**न हि नो तत्किमित्याद्यैरुक्तिमाश्रित्य पूरयेत्॥ १२॥**

---

१. 'बलेष्टौ' ख; 'वलीन्द्रौ' ग. २. 'हाटकेशाय' क. ३. 'तृतीया' ग. ४. शार्ङ्गी त्वब्धि' ग.

यथा—

पराजितश्चेद्गवाञ्जरासंधेन जन्तुना।
प्रतीतिरद्य मे जाता मृगात्सिंहः पलायते॥
मा संभावय शल्येन फाल्गुनस्य पराभवम्।
कः प्रतीयात्कुरुश्रेष्ठ मृगात्सिंहः पलायते॥
नहि गाण्डीवकोदण्डमृगात्सिंहः पलायते।
तत्किं कमलपत्राक्ष मृगात्सिंहः पलायते॥

सुबोधमखिलम्। तार्किकास्तु—

शब्दादुच्छलिते सिन्धौ शैलाण्डादौ च दारिते।
त्वत्प्रतापाद्द्रवीभूते स्वर्णाद्यण्डादितैजसे॥
विरहे[1] सर्वदहनः संतोषे सर्वमेव शशी।
कामिनि सर्वं काम्यं शान्ते लोष्ठायते विश्वम्॥
वैशेषिकेषु काव्येषु गणेषूत्कृष्टमन्दयोः।
अनपेक्षया च संसर्गे स्यातामुत्कृष्टमन्दते॥

वैशेषिकेषु रूपरसादिषु काव्येषु शौर्यौदार्यसौन्दर्यादिषु—

शिशूनां गतयेऽस्माभिर्दिङ्मात्रमिह दर्शितम्।
काव्यकान्तारपन्थानामीदृश्यर्थे कियान्भ्रमः॥

अपरिकलितकाव्यसरणिमीश्वरं वशीकर्तुमनतिचिरमनुवसन्कविः।

अव्ययैरजहल्लिङ्गैः साधारणविशेषणैः।
छन्दो ज्ञात्वा पृथग्वाक्यैः स्वंबुद्ध्या[2] मानसीं श्रयेत्॥

समस्यं पदवाक्यमिति स्मर्तव्यम्॥

इति समस्यापूरणमरीचिः॥ १९॥

इति महाराजाधिराजश्रीमन्माणिक्यचन्द्रकारितेऽलंकारशेखरे कविसामर्थ्यरत्नम्॥

---

विंशो मरीचिः।

रस आत्मेत्युक्तम्। तस्य यथा—आत्मानं विना शरीरमप्रयोजकं तथा रसं विना काव्यमित्यर्थः॥

---

१. 'निरहे' क. २. 'संबुद्ध्यामनसि' क.

यदाह—

'साधुपाके विना स्वाद्यं भोज्यं निर्लवणं यथा ।
तथैव नीरसं काव्यं स्यान्नो रसिकतुष्टये ॥'

तत्र रसत्वमङ्गाङ्गीभावापन्नसकलविभावादि साक्षात्कारत्वम् । अङ्गाङ्गीत्यादि समूहालम्बनवारणाय । रसत्वमपि जातिरिति वयम् । केचित्तु—

कारणेनाथ कार्येण सहकारिभिरेव च ।
व्यक्तत्वं नीयमानस्तु स्थायीभावो रसः स्मृतः ॥

कारणमङ्गनानवयौवनादि ।—

कार्याणि—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विका मताः ॥

सहकारिण उद्यानादयः । व्यभिचारिणो ग्लान्यादयः । यदाहुः—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आरोप्यमाण उत्कर्षं स्थायीभावो रसः स्मृतः ॥

तमिदानीं विभजते—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतशान्ताख्याः काव्ये नव रसाः स्मृताः ॥ १ ॥**

शृङ्गारत्वहास्यत्वादिकं च जातिविशेष एव । व्यक्तिप्रश्नस्तु सुखज्ञानात्मकरसवादिमतेन भवत्येवेति दिक् ।

तत्र शृङ्गारं विभजते—

**संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ।**

तत्र स्त्रीपुंसलक्षणेष्टप्राप्तौ रतिरेव संभोगः । तदुक्तम्—

अनुरक्तौ निषेवेतां यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि संभोगोऽयमुदाहृतः ॥

तत्र नायिकाश्रयः संभोगो यथा—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।

विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

आलोक्य नम्रमुखीत्यन्वयः ।

नायिका चतुर्विधा—

**अनूढा च स्वकीया च परकीया पणाङ्गना[1] ।**
**त्रिवर्गिणः स्वकीया स्यादन्याः केवलकामिनः ॥ २ ॥**
**अनुरक्तानुरक्तेन स्वयं या स्वीकृता भवेत् ।**
**सानूढेति यथा राज्ञो दुष्यन्तस्य शकुन्तला ॥ ३ ॥**
**देवतागुरुसाक्ष्येण स्वीकृता स्वीयनायिका ।**
**परकीयाप्यनूढेव विशेषस्तु स्फुटस्तयोः ॥ ४ ॥**
**सामान्यवनिता वेश्या भवेत्कपटपण्डिता ।**
**न हि कश्चित्प्रियस्तस्या दातारं पुरुषं विना ॥ ५ ॥**

अस्याः प्रकाशः, अन्यासां प्रच्छन्नो रमण इति विशेषः । ताश्चाष्टधा । तदुक्तम्—

खण्डितोत्कण्ठिता प्रोषितपतिका चाभिसारिका ।
कलहान्तरिता वासकसज्जा विप्रलब्धिका ।
स्वाधीनभर्तृका चान्या चतस्रोऽप्यष्टधा मताः ॥

नायकाश्रयो यथा—

'त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधातरि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥'

**रूपसौभाग्यसंपन्नः कुलीनः कुशलो युवा ।**
**अनुद्धतः सूनृतवाङ्नायकः प्रीतये स्त्रियाम् ॥ ६ ॥**
**अयं बहुप्रकारोऽपि संक्षेपेण चतुर्विधः ।**
**अनुकूलो दक्षिणश्च शठधृष्टौ च ते यथा ॥ ७ ॥**

---

१. 'पण्यङ्गना' क; 'वराङ्गना' ग; 'पराङ्गना' घ.

**नीलीरागोऽनुकूलः स्यादनन्यरमणीरतः।**
**दक्षिणश्चान्यचित्तोऽपि यः स्यादविकृतः स्त्रियाम्॥८॥**
**प्रियं वक्त्यप्रियं तस्याः कुर्वन्यो विकृतः शठः।**
**धृष्टो ज्ञातापराधोऽपि न विलक्षोऽवमानितः॥ ९॥**

विप्रलम्भस्तु—

**भावो यदा रतिर्नाम प्रकर्षमधिगच्छति।**
**नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते॥ १०॥**

इत्यनेन लक्षितः। अत्राभीष्टं स्त्रीपुंसलक्षणमेव। स च

**पूर्वानुरागो मानात्मा प्रवासः करुणात्मकः।**
**विप्रलम्भश्चतुर्धा स्यात्पूर्वपूर्वो ह्ययं गुरुः॥ ११॥**

तत्र

**स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः।**
**ज्ञेयः पूर्वानुरागोऽयमलाभादतिकामयोः॥ १२॥**

यथा—

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसा परिकल्पितास्वपि भवत्यानन्दसान्द्रोदयः॥'

**अथान्यवनितासक्तमवमत्य स्ववल्लभम्।**
**ईर्ष्यावशेन वैमुख्यमेष मान उदाहृतः॥ १३॥**

यथा—

'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनम्।
अच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥'

**प्रवासः परदेशस्थे द्वितीये विरहोद्भवः।**

यथा—

'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः॥'

इत्यादौ।

**स्यादेकतरपञ्चत्वे दम्पत्योरनुरक्तयोः।**
**शृङ्गारः करुणाख्योऽयमजस्येव रतेरिव॥ १४॥**

ननु शृङ्गारस्य रतिप्रकृतित्वात्तस्याश्च सुखसंवेदनरूपत्वात्तस्य च विप्रलम्भेऽसंभवात्स कथं शृङ्गारभेद इति चेन्न। 'धन्योऽहमस्याः कृते दशामिमामनुभवामि' इति तत्रापि तदभिमानात्। क्वचित्संभोगपोषकत्वेन स्पृहणीयत्वाच्चेति विस्तृतं मयैव काव्यरत्ने। श्रीपादस्तु—

**रतिर्भवति देवादौ मुनौ पुत्रे नृपे गुरौ।**
**शृङ्गारस्तु भवेत्सैव या कान्ताविषया रतिः॥ १५॥**

तत्र देवे यथा—

'कण्ठकोणविनिविष्टमीश ते कालकूटमपि ते महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे[1] न रोचते॥'

मुनौ यथा—

'हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥'

पुत्रे यथा—

'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्ध्नि सुचिरं च परिष्वजे त्वाम्।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते॥'

---

१. 'रोचते न मे' ख; 'येन रोचते' ग.

नृपे यथा—

'ते कोपीनधनास्त एव सुचिरं धात्रीफलं भुञ्जते
तेषां द्वारि नदन्ति वाजिनिवहास्तैरेव लब्धा स्थितिः।
तैरेतत्समलंकृतं निजकुलं किं वा बहु ब्रूमहे
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा॥'

गुरौ यथा—

'हा तात विश्वजनवत्सल मामकीन-
जीवौषध द्युमणिवंशवतंसभूत।
स्यां चेद्भवत्कुलजसद्मनि चेटकः स्यां
यद्वा भवच्चरणपङ्कजरेणुरेव॥'

**हासमूलः समाख्यातो हास्यनामा रसो बुधैः।**
**चेष्टाङ्गवेषवैकृत्याद्वाच्यो हासस्य चोद्भवः॥ १६॥**
**कपोलाक्षि कृतोल्लासो भिन्नोऽष्ठः स महात्मनाम्।**
**विदीर्णास्यश्च मध्यानामधमानां स शब्दकः॥ १७॥**

यथा—

'नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः।
तच्च तत्रैव रमते हताः पाणिनिना वयम्॥'

**शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने।**
**वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि वर्णयेत्॥ १८॥**

यथा—

'मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी।
गतिस्तयोरेष जनस्तमर्दयन्नहो विधे त्वां करुणा रुणद्धि न॥'

**क्रोधात्मको भवेद्रौद्रः क्रोधः प्रौढ्या च वैरिणः।**
**भीष्मवृत्तिरसामान्यो भवेदुग्रक्रियाश्रयः॥ १९॥**
**स्वांशघातः स्वशंसास्त्रोत्क्षेपभ्रकुटयस्तथा।**
**अत्रारातिजनाक्षेपो दलनं चोपवर्ण्यते॥ २०॥**

१. 'स्वयं शस्त्रो' ग.

यथा—

'कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां समं स किरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां वलीन् ॥'

**उत्साहात्मा भवेद्वीरो बलशास्त्राश्रयश्च सः।**
**नायकोऽत्र भवेत्सर्वैः श्लाघ्यैरधिगतो गुणैः॥ २१॥**

यथा—

'क्षुद्राः संत्रासमेते विजहित[1] हरयो भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥'

**भयानको भवेद्भीतिप्रकृतिर्घोरवस्तुनः।**
**स च प्रायेण वनितानीचबालेषु दृश्यते॥ २२॥**
**दिगालोकास्य शोषाङ्गकम्पा गद्गदसंभ्रमाः।**
**स्तम्भवैवर्ण्यमोहाश्च वर्ण्यन्ते विबुधैरिह॥ २३॥**

यथा—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'

**बीभत्सः स्याज्जुगुप्सातः सौहृद्यश्रवणेक्षणात्।**
**निष्ठीवनास्यभङ्गादि स्यादत्र महतां न च॥ २४॥**

यथा—

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रगन्धीनि जग्ध्वा।

---

१. 'विजहत' ग.

आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'

**विस्मयात्माद्भुतो ज्ञेयो स चासंभाव्यवस्तुनः।**
**दर्शनाच्छ्रवणाद्वापि प्राणिनामुपजायते ॥ २५ ॥**
**तत्र नेत्रविकारः स्यात्पुलकः स्वेद एव वा।**
**निस्पन्दनेत्रता साधु साधुवादा[1] तथा च गीः ॥ २६ ॥**

यथा—

'चित्रं कनकलतायां शरदिन्दुस्तत्र खञ्जनद्वितयम्।
तत्र च मनोजधनुषी तदुपरि गाढान्धकाराणि ॥'

**सम्यग्ज्ञानसमुत्थानः शान्तो निःस्पृहनायकः।**
**रागद्वेषपरित्यागे सम्यग्ज्ञानस्य चोद्भवः ॥ २७ ॥**
**पश्चात्तापः शरीरादि यावद्वस्तुविडम्बनम्।**
**विवेकाचित्तस्थैर्यादि योगाद्यास्तस्य लक्षणम् ॥ २८ ॥**

यथा—

'अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥'

स्त्रैणं स्त्रीसमूहः। अत्र अहिरिव हारो हेयो, न तु हारवदहिरप्युपादेय इति बोध्यम्। इह सर्वत्र तत्तद्रसत्वमात्र उदाहरणमिति स्मर्तव्यम्।

इदानीं रसानामविरोधविरोधावाह—

**शृङ्गारहास्यौ करुणबीभत्सौ वीररौद्रकौ।**
**भयानकाद्भुतौ मित्रे मिथः शान्तो न कस्यचित् ॥ २९ ॥**
**शान्ते करुणबीभत्सौ न कश्चिद्द्वेष्टि चाद्भुतः।**
**शृङ्गारशान्तकरुणा हासस्य करुणो रिपुः ॥ ३० ॥**

---

१. 'साधुवादस्तथा मतः' ग; 'साधुवादास्तथा मताः' घ.

अत्र करुणबीभत्सयोर्मैत्री विशेषाभिप्रायेणेति स्मर्तव्यम् ॥

स्थायीभावो रस इत्युक्तमतस्तानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयो भावा निर्वेदः स्थायिनो नव ॥ ३१ ॥**

स्थायिनो भावा नवेत्यन्वयः। ननु निर्वेदस्य कथं शान्तरसस्थायिता व्यभिचारित्वादिति चेत्, न। अधिकरणभेदेनोभयाविरोधादित्यन्यत्र विस्तरः। स्थायिलक्षणं तु

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।**
**आत्मभावं नयत्यन्यान्स्थायीभावः स उच्यते ॥ ३२ ॥**

विरुद्धैर्जुगुप्सादिभिरविरुद्धै रत्यादिभिर्यो न विच्छिद्यते। विशेषलक्षणं तु—'मनोऽनुकूलविषयं सुखात्मकसंवेदनं **रतिः**। अङ्गक्रीडादिभिश्चेतोविकारो **हासः**। इष्टनाशादिजनितचित्तवैक्लव्यं **शोकः**। प्रतिकूलतैक्ष्ण्यस्य प्ररोहः **क्रोधः**। कार्यारम्भे संरम्भः स्थिर **उत्साहः**। व्याघ्रादिदर्शनादिजनितचित्तवैक्लव्यं **भयम्**। दोषदर्शनात्पदार्थेषु गर्हणं **जुगुप्सा**। लोकसीमातिक्रान्तपदार्थविषयश्चित्तविकारी **विस्मयः**। तत्त्वज्ञानादीर्ष्यादिभिः स्वावमाननं **निर्वेदः**। एते च सर्वभावेषु मुख्याः। यदाह—

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः।
तथा सर्वेषु भावेषु स्थायीभावः स्मृतो महान् ॥

विभावो द्विविधः—'उद्दीपन आलम्बनश्च। तत्र कोकिलवसन्तादि**रुद्दीपनः**। नायिकादि**रालम्बनः**। योगात्। अस्माकं मते रतित्वादिकमनुभावत्वादिकं च जातिरेव। नहि वैशेषिकादिवदसत्प्रक्रियेति। अनुभावलक्षणं तु—

**अनुभावो विकारस्तु भावसंसूचनात्मकः।**

तत्र—

**हेलाविच्छित्तिविब्बोककिलकिञ्चितविभ्रमाः।**
**लीला विलासो हावश्च विक्षेपो विकृतं मदः ॥ ३३ ॥**

१. 'विषयाभिप्रायेण स्मर्तव्या' ख; 'विशेषाभिप्रायेण स्मर्तव्यम्' ग.

**मोट्टायितं कुट्टिमितं मौग्ध्यं च तपनं तथा।**
**ललितं चेत्यमी हावाश्चेष्टाः शृङ्गारभावजाः॥ ३४॥**

एतच्चास्माभिः प्रपञ्चितमन्यत्र। सात्विकलक्षणं तु—

**रजस्तमोभ्यामस्पृष्टं मनः सत्वमिहोच्यते।**
**निर्वृत्तयेऽस्य तद्योगात्प्रभवन्तीति सात्विकाः॥ ३५॥**

अस्य रसस्य। व्यभिचारिलक्षणं तु—

**विशेषेणाभितः काये स्थायिनं भावयन्ति ये।**
**अनुभावादिहेतूंस्तान्वदन्ति व्यभिचारिणः॥ ३६॥**

आदिपदात्स्वेदादिपरिग्रहः। ते च—

**निर्वेदग्लानिशङ्काख्यास्तथासूयामदभ्रमाः।**
**आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः॥३७॥**
**व्रीडा चपलता हर्ष आवेशो जडता तथा।**
**गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च॥ ३८॥**
**सुप्तं विरोधोऽमर्षश्चाप्यवहित्थमथोग्रता।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च।**
**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः॥ ३९॥**

अमी च प्रत्येकमेव श्लाघ्यन्ते। क्वचिच्छबलतापि। यथा—'क्वाकार्यं शशलक्ष्मणः' इत्यादौ। अत्र 'क्वाकार्यम्' इति वितर्कः। 'भूयोऽपि दृश्येत' इत्यौत्सुक्यम्। 'दोषाणाम्' इति मतिः। 'कोपेऽपि' इति स्मृतिः। 'किं वक्ष्यति' इति शङ्का। 'स्वप्नेऽपि सा दुर्लभा' इति दैन्यम्। 'चेतः स्वास्थ्यमुपैहि' इति धृतिः। 'कः खलु' इत्यादि चिन्ता॥

इत्यलंकारशेखरे विश्रामरत्ने रसमरीचिः॥ २०॥

## एकविंशो मरीचिः।

'परे रसदोषा भावानुकूलवर्णादयः काव्यशरीरे मनः' इत्युक्तम्। अतो रसदोषानिदानीमाह—

**स्वस्वशब्दैरुपादानं भावस्य च रसस्य च।**
**कष्टप्रकल्पनीयत्वमनुभावविभावयोः॥ १॥**

[1]प्रक्रान्तरसवैरित्वं तेषां व्यक्तिविपर्ययः।
अनौचिती च सर्वत्र रसे दोषाः स्युरीदृशाः ॥ २ ॥

सामान्यतो विशेषतो वा स्वस्ववाचकशब्दप्रतिपादितानां निर्वेदादीनां रत्यादीनां वा रसाननुगुणत्वमिति सकलानुभवसिद्धम्। तत्र व्यभिचारिणः स्वशब्दोपादानम् ॥

यथा—

'सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥'

सव्रीडा प्रतिनयननिपातात्। अत्र व्रीडादीनां स्वस्वभावप्रतिपादितानां चमत्कारजनकत्वस्य सहृदयसाक्षिकतया तदभावादेव रसभङ्ग इत्युचितम्।

एतदेव प्रत्युदाहरणेन प्रतिपादयन्ति—

'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥'

स्थायिनो यथा—

'संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
झणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥'

संप्रहारः संग्रामः। अत्रोत्साहस्य। रसस्य रसशब्दप्रतिपादितस्य रसाजनकत्वम् ॥

यथा—

'तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूलशोभिनी।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥'

---

१. 'प्रकृते' ग.

शृङ्गारादिपदप्रतिपादितस्य यथा—

'आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराममूर्तिम्।
पश्यैष बाल्यमतिवर्त्यविवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति॥'

अनुभावस्य कष्टप्रकल्पनीयत्वं यथा—

'कर्पूरपूरधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि यस्य यूनः।
लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा॥'

अत्र चन्द्रादय उद्दीपनालम्बनविभावाः शृङ्गारयोग्या अनुभावाप्रतीत्या आस्वादनापर्यवसायिनः स्थिताः। यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथापि तस्य स्तनव्यक्तिप्रयोजकत्वेनोपादानात्तस्य तदनुभावकत्वपर्यवसानम्। यद्वा पुंसि निष्ठ एवात्र शृङ्गारः प्रतिपिपादयिषितः, 'अभून्नयनावनौ सा' इत्यनेन तस्यैवालम्बनत्वप्रतिपादनात्। न च पुंसि कश्चिदनुभाव उपात्तः, न च विभावैरप्याक्षेपार्ह इति कष्टेन प्रकल्पनीयः॥

विभावस्य यथा—

'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः।
इति बत विषमा दशास्यदेहं परिभवति प्रसभं किमत्र कुर्मः॥'

इत्यनेन प्रकारेणास्य दशा देहं परिभवतीत्यन्वयः। अत्र रतिपरिहारादीनामनुभावानां करुणादावपि संभवेन कामिनीरूपो विभावो यत्नप्रतिपाद्यः प्रकरणादिसव्यपेक्षत्वात्॥

प्रकृतरसविरोधिविषयको विभावादिः।

तत्र विभावव्यभिचारिणोरुदाहरणम्—

'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।

निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥'

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावः। तत्प्रकाशितो निर्वेदश्च व्यभिचार्ययुक्तः, शान्ते निर्वेदस्य स्थायित्वात्। **व्यक्तिविपर्यय इति**। यद्व्यक्तौ यद्वर्णनमनुचितं तत्र तद्वर्णनम्। व्यक्तयो दिव्या अदिव्या दिव्यादिव्याश्च तत्र दिव्यत्वममर्त्यैकरूपता। यथा—शिवादिशेषादेः। अदिव्यत्वम् मर्त्यैकरूपता। यथा—मालतीमाधवादेः। दिव्यादिव्यत्वमुभयरूपत्वम्। यथा—श्रीकृष्णादेः। त्रिविधा अप्येते चतुर्धा भवन्ति। वीररौद्रशृङ्गारशान्तरसप्रधानाः। धीरोदात्तधीरोद्धतधीरललितधीरशान्ताः। यथा—रामभार्गवकृष्णजीमूतवाहनाः। एते चोत्तममध्यमाधमभेदाद्बहवो भवन्ति। तत्र स्वःपातालगमनसमुद्राद्युल्लङ्घनपर्वतस्फोटनाद्युत्साहो दिव्येष्वेव वर्णनीयः। अदिव्येषु तु यावदेव लोकप्रसिद्धमुचितं तावदेव वर्णनीयम् ॥

**अनौचिती** च महात्रसदोषः। स च

भवानीशंकरादीनां पित्रोर्वा केलिवर्णनम्।
अत्युक्तिर्वा नभःसाम्यं स्तनादौ स्यादनौचिती ॥

इत्यनेनोक्तास्ति[1]। यद्यपि कुमारसंभवे कालिदासेन वर्णितमस्ति तथाप्यर्वाचीनेन न कर्तव्यम्। न हि गजानामुदर्यं तेजो वटकाष्ठमशितं पचतीत्यस्मदादीनामुदर्येण तेजसा तथा भवितव्यमिति न्यायात्। तस्यापि[2] दोषत्वाद्वा दोषान्तरवदिति[3] ॥

**दोषं[4] व्यक्तिविवेकेषु[5] कविलोकविलोचने।**
**काव्यमीमांसिषु[6] प्राप्तं महिमा[7] महिमादृतः ॥ ३ ॥**

---

१. 'इत्यनेनास्ति वर्णनम्' ग. २. 'तस्यापि दोषानाह—' ख; 'तस्यापि दोषत्वाद्वा दोषान्वक्तुं वदन्ति' ग. ३. 'दोषवदिति' क. ४. 'तेषां व्यक्ति' ख; 'दोषो' ग. ५. 'के स्वं' क. ६. 'मीमांसकप्राप्तमहिमा' ग. ७. 'महिमाह महाकविः' ख.

यदाह महिमा—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यमूला हि रसस्योपनिषत्परा ॥

ईदृशा इत्यनेनान्येऽप्यनौचित्यहेतवो दोषा भवन्तीति सूचितम् । यथा—नायिकाया मानादिना चरणप्रहारादिना वा नायकस्यात्यन्तिककोपवर्णनम् । व्यक्तिविपर्ययानौचित्ययोरवान्तरभेदविवक्षयेदं भेदकथनम् । अमीषां च क्वचिददोषतापि । यत्र न रसहानिर्भवति तत्र सहृदयैरेव पर्यालोचनीयमिति ग्रन्थगौरवभयान्नेह तन्यत इति ॥

इत्यलंकारशेखरे विश्रामरत्ने रसदोषमरीचिः ॥ २१ ॥

---

द्वाविंशो मरीचिः ।

इदानीमनुकूलान्वर्णानाह—

**उद्दामा वीररौद्रादौ छन्दोरीत्यक्षरादयः ।**
**हृद्याः शृङ्गारहास्यादौ परयोर्मध्यमा गतिः ॥ १ ॥**

रौद्रादावित्यादिपदेन भयानकस्य । हास्यादाविति करुणस्य परिग्रहः । परयोर्बीभत्साद्भुतयोः । शान्तस्य नियमो नास्तीति हृदयम् । उद्दामं छन्दः दण्डकस्रग्धरादि । रीतिर्गौडी । अक्षरेषु श्रीपादः—

उद्दामाः सान्तरालेन सजातीयेनरेण च ।
योगाष्टाद्याश्च चत्वारः शेषौ विकटगुम्फना ॥

हृद्ये उपेन्द्रादिच्छन्दः । रीतिर्वैदर्भी । अक्षरेषु पुनः स एव ।

रणौ च लघ्वन्तरितौ नश्चोपर्यनुनासिकः ।
असमासोऽथ सोऽल्पो वा हृद्यं स्यात्संधिसौष्ठवम् ॥

यथा—

'अनङ्गरङ्गप्रतिमं यदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्या ।
कुर्वन्ति यूनां हृदयं यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥'

---

१.'प्रसिद्धौ' ग. २. 'सजातीयेतरेण' ग; 'सजातीयरणेन च' ख-घ. ३. 'योगाद्याश्चैव' ग. ४. 'चाष्टौ' ख; 'शेषा' ग. ५. 'हसौ' ख; 'नसौ' ग; 'हशौ' घ. ६. 'ण' क; 'नश्च पर्य' ख. ७. 'तदङ्गं' इति काव्यप्र०. 'यदङ्गभङ्गी' ग.

अथ वैपरीत्यं दोषायेति मनसिकृत्य क्वचिददोषतामाह—

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।**
**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ २ ॥**

यथा—

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः[1] कुरुशतनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो[2] दुन्दुभिस्ताडितोऽयम् ॥'

अत्र हि न वाच्यमुद्दामं प्रश्नत्वात् । प्रबन्धश्चाभिनेयत्वान्न तथा । किं तु वक्ता भीमसेन इति तदौचित्यादुद्दामा रचनादयः ॥ क्वचिद्वाच्यौचित्या ।

यथा—

'शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु
ज्याघोषक्षुब्धकण्ठीरववरचकितव्यस्तमातङ्गयूथम् ।
खड्गव्यालूनखड्गं तुमुलकलकलं प्रान्तकूजच्छकुन्तं
भल्लाध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥'

अत्र हि वाच्यस्य सर्वप्राणिविप्लवात्मकमृगयाया एव तथात्वात्तथा । क्वचित्प्रबन्धौचित्यस्य यथा—कादम्बर्यादौ शृङ्गारेऽपि न मसृणवर्णा इति दिक् ।

सर्वसाधारणं दोषमाह—

**गृहीतमुक्तको नेष्टो हरचानां विशेषतः[3] ।**
**मात्राभेदोऽप्यतः श्लाघ्यः पदे त्वेष[4] शुभावहः ॥ ३ ॥**

एकस्य पदस्य शेषे यो वर्णः सोऽपरस्याद्ये न दीयते । यथा—नाककला । हकाररेफचकाराणां तु सुतराम् ।

---

१. 'क्रोधाग्निदूतः' क. २. 'मुखो' ग. ३. 'न शेषता' ग. ४. 'पदोऽप्येष' ग; 'पदे चैष' घ.

यथा—

'प्रवाहहरिता दूर्वा विहाररसितं तथा।
[1]स्फुरत्काचचया भूमिर्भूयः पुण्यैरवाप्यते॥'

मात्राभेदे तु स्वल्पो दोषः। यथा—नाककादम्बिनी। पदे त्वेष न दोषः, किंतु गुणः। यथा—'वन्दामहे महेशानम्' इत्यादौ॥

अन्यदप्याह—

**रणयोश्च चवर्णस्य शैथिल्यायैव भूरिता।**

रेफणकारचकाराणां भूयस्त्वं शैथिल्यहेतुतया रसहानिकरमित्यर्थः।

संधौ वर्णदोषमाह—

**[2]शरहास्तादतिहृद्ये न मशरहाः काट्टकाराच्च।**
**चछतथशरा नकारादधरा दोषाय भूयसां योगः॥ ४॥**

तात्तकारात्। कात्ककारात्। टाट्टकारात्। अधरा अधोवर्तिनः। अतिहृद्ययोः शृङ्गारहास्ययो रसयोर्दोषाय भवन्ति। शब्ददोषकष्टस्यान्वयबोधविरोधिता, अस्य तु तस्मिन्नपि रसहानिरिति विशेषः। अनैकान्तिकबाधयोरिवानुमितौ। एतद्भिन्ने तु तदिति रहस्यम्। भूयसां वर्णानां योगः कात्स्न्यार्दिपदे॥

श्रुतमेवान्यथाकारमक्षराणि कियन्त्यपि।
काव्यालंकारविद्यायां शौद्धोदनिरसूत्रयत्॥
उपक्रमो दोषगुणावलंकारोऽथ वर्णकः।
संप्रदायः कवेस्तस्य सामर्थ्यमथ विश्रमः॥
अष्टौ रत्नानि दीप्तानि सन्त्यलंकारशेखरे।
चत्वारः स्युरलंकारे संप्रदाये मरीचयः।
सामर्थ्ये द्वौ परस्मिंस्तु पञ्चके स्युस्त्रयस्त्रयः॥
मामकीनां कृतिमिमां द्विषन्तो दूषयन्ति ये।
काव्यवार्तां न जानन्ति ते नूनं पांसुलाः सुताः॥

---

1. 'स्फूर्जत्काच' ग. २. 'रसहा' ग.

आस्ते यद्यपि पूर्वपण्डितकृतव्याख्यैव संख्यावता-
मानन्दाय तथापि केशवकवेर्वाचामियं गुम्फना ।
संख्यासौष्ठवशब्दलाघवमिथःसंबन्धपूर्वापर-
प्रत्यर्थिप्रतिबन्धनिर्मलगुणः कुत्रान्यतो लभ्यताम् ॥

तर्कप्रौढमतिः प्रशस्तकवितावल्लीवसन्तोत्सवः
कोषव्याकरणप्रपञ्चचतुरोऽलंकारपारंगमः ।
श्रीमत्केशवमिश्रमद्भुतगुणावासं नियुज्य स्वयं
चक्रे शक्रसम प्रबन्धमनघं माणिक्यचन्द्रो नृपः ॥

इति श्रीमन्महाराजश्रीमाणिक्यचन्द्रकारिते केशवमिश्रकृतेऽलंकारशेखरे विश्रामरत्नमष्टमम् ॥

समाप्तश्चायं ग्रन्थः ।

---

KÂVYAMÂLÂ. 20.



# THE LATAKAMELAKA

OF

# S'ANKHADHARA.



EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1889.

*Price 4 Annas.*

काव्यमाला. २०.

श्रीशङ्खधरविरचितं

# लटकमेलकम् ।



जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।



तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।



१८८९







मूल्यं ४ आणकाः ।

# काव्यमाला।

## महाकविश्रीशङ्खधरविरचितं

## लटकमेलकम्।

### प्रथमोऽङ्कः।

गौरीचुम्बनचञ्चलाञ्चलवलच्चन्द्रप्रभामण्डलं
व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम्।
प्रौढप्रेमपरम्परापरिचयप्रोत्फुल्लनेत्राञ्चलं
शंभोरस्तु विभूतये त्रिजगतामुन्मत्तगङ्गं शिरः॥ १॥

अपि च।

रक्षाक्षावलिमाः परित्यज जटाः कोऽयं मदप्रक्रमः
कौपीनं त्यज मुञ्च मुञ्च नखरव्यापारमास्थानिकम्।

---

१. अयं लटकमेलकप्रणेता शङ्खधरकविः कान्यकुब्जदेशे ख्रिस्ताब्दद्वादशशतक[illegible]मुत्पन्न इति प्रतीयते, यतोऽनेन प्रस्तावनायां महामाण्डलिकाधिराजो गोविन्दचन्द्रमहीपतिर्वर्ण्यते स्म. स च द्वादशशतके कन्नौजनगरे राज्यं कुर्वन्नासीदिति इण्डियन् आण्टिक्वेर्यादिमुद्रिततत्तद्दानपत्रेभ्योऽवसीयते. अथ चात्र ग्रन्थे गृहीतानि कतिपयग्रामनामानि कान्यकुब्जदेशीयग्रामनामसरणिमनुसरन्ति. 'कतिपयानिमेष–', 'एष स्वर्गतरङ्गिणी–', इति पद्यद्वयं शार्ङ्गधरपद्धतौ, 'गुरोर्गिरः पञ्च–' इति पद्यं साहित्यदर्पणे च लटकमेलकादुद्धृतमस्ति. अथ च साहित्यदर्पणषष्ठपरिच्छेदे संकीर्णप्रहसननिरूपणप्रकरणे 'यथा लटकमेलकादि' इत्युक्तमस्ति. अतोऽपि चतुर्दशशतकात्प्राचीनोऽयं कविरिति ज्ञायत एव. एतन्मुद्रणावसरे चास्माभिः पुस्तकत्रयमासादितम्. [illegible] क—केवलदासात्मजेन भगवानदासश्रेष्ठिना सूरतनगरात्प्रहितं प्रथमपत्ररहितं प्रा[illegible] २१. ख[illegible] च. तत्पत्राणि २[illegible] छायासमेतं १६०८ [illegible] विक्रमाब्दे लिखितमस्ति. [illegible] पत्राणि वन्यते [illegible] लिखितस्य प्रायः[illegible] गुरुपर्वणोकरनारा[illegible] हादुपलब्धं [illegible] । शेषं वि[illegible], [illegible] ग—अस्मदीयमेव. तदपि नवीनम्, किं तु १६५[illegible] धिकमस्ति. ४. 'अपि [illegible]द्धस्य कस्यचित्पुस्तकस्य प्रतिरूपकम्. तत्पत्रा[illegible] [illegible]लित' ग. ६. 'गोमुखसूत्रवृत्तावुज्ज्वलदत्तः. लटकानां मेलकः सं[illegible]

इत्युद्भ्रान्त इवोल्लपन्नवतु वो मन्दं निकुञ्जोदरे
रुद्राणीसुरतप्रबन्धविकलः खण्डेन्दुचूडामणिः ॥ २ ॥

अपि च।

प्रातः सहस्रकिरणप्रणिपातभीरुः
कक्षातटप्रणयिनीं मदनप्रशस्तिम्।
आस्तां जगत्त्रयमुदे तिरयन्भुजाभ्यां
गौरीनखक्षतिपदावलिमिन्दुमौलिः ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिविस्तरेण। यतः।

गोविन्ददेवः प्रथितः पृथिव्यां श्रीमान्महामाण्डलिकाधिराजः।
कविप्रियो नाटकदर्शनार्थमादेशयन्मां रणरङ्गमल्लः ॥ ४ ॥

यदद्य वसन्तसमयसमुचितेन कविराजश्रीशङ्खधरविरचितेन लटकमेलकनाम्ना प्रहसनेनास्मान्विनोदयेति। अस्य च सकलराजचक्रवालकुलकमलवनविकासभास्करस्य प्रत्यर्थिपार्थिवमहार्णवमथनाकुलितादिक्कुञ्जरकदम्बस्यार्थिजनतापतस्करस्याज्ञा कस्य न करणीया। तथा हि।

निस्त्रिंशक्षतकुम्भिकुम्भविगलन्मुक्ताकलापाङ्कुराः
कङ्कालामलकर्पराः पतदसृक्पङ्कप्रलिप्तोदराः।
मज्जद्भूधरकोटिमन्थनकलादत्तारिवीरश्रियो
येनैता विहिताः पयोधिविषमा भीमा रणक्षोणयः ॥ ५ ॥

अपि च।

येन गभीरे समरे रिपुगणमुन्मथ्य मार्गणैरगणैः।
मार्गणनिवहविलब्धाश्चित्तचमत्कारकारिणः करिणः ॥ ६ ॥

(नेपथ्ये।)

अये, कोऽयमनेकपण्डि... म... गं कविर... तां नाटयितुमुद्यतः।

---

१. 'सहस्रनयन' ग. २. ... के नास्ति. ४. 'नाटकनर्तनार्थं' क-ग. ५. 'र... ७. 'कमलकलिका... क. ८. 'महार्णवमन्दरस्या...

**सूत्रधारः**—अलमतिप्रलपितेन । यतः ।

चित्रं चरित्रं स्खलितव्रतानां शीलाकरः शङ्खधरस्तनोति ।
विद्वज्जनानां विनयानुवर्ती धात्रीपवित्रीकरणः कवीन्द्रः ॥ ७ ॥

किं च । गोविन्दराजपुरस्कृतायाः सरस्वत्याः कुतो दुर्जनतर्जनावकाशः । उक्तं च तेनैव कविना ।

वक्रा विश्वविरोधिनः कतिपये द्वित्राः पवित्राशयाः
क्रूरोक्तिप्रकरोद्धुरास्त्रिचतुरा दोषोन्मुखाः पञ्चषाः ।
दृष्टः क्वापि लसद्द्विजिह्वदमनव्यापारलीलानिधे-[2]
र्गोविन्दादपरः परः परगुणग्राही न कश्चित्पुनः ॥ ८ ॥[3]

[4]अन्यच्च ।

कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति ।
कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ ९ ॥

(नेपथ्ये ।)

मुखकमलं [5]चुम्बन्नलिभरदरदलितपद्मिनीनिवहः ।
अयमुपसर्पति [6]श्चन्दनवनपावनः पवनः ॥ १० ॥

**सूत्रधारः**—(आकाशे कर्णं दत्त्वा ।)

द्विमुखानां पटुडिण्डिमगोमुखझिल्लीमृदङ्गपटहानाम् ।
अयमपरः श्रुतिहारी विहरति गगनाङ्गणे निनदः ॥ ११ ॥

([7]पुरोऽवलोक्य ।) अये, दन्तुरायाः कुट्टन्याः पुरतो भुजंगसंगीतकं वर्तते । तदुपसर्पामि । (इति निष्क्रान्तः ।)

प्रस्तावना ।

---

१. 'गोविन्ददेव' क, 'गोविन्ददेवेश्वर' ख. २. 'लीलानिधिः' ग. ३. अस्मादनन्तरं क-पुस्तके "देवदेवप्रतिमः केन न वन्द्यते दुर्जनः । 'शूली गुणग्रहविधौ स्वजनेषु चक्री विश्वापकाररचने चतुराननोऽसौ । दोषं निरीक्षयितुमेष सहस्रनेत्रः किं वर्ण्यतेऽमरवरप्रतिमो द्विजिह्वः ॥" इत्यधिकमस्ति. ४. 'अपि च' क, 'किं च' ग. ५. 'रतिरसपरिमालित' क, 'अतिभरदलमालित' ग. ६. 'गोमुखलाञ्छन' ख. ७. 'श्रुत्वा पुरोऽवलोक्य च' ख.

(ततः प्रविशति दन्तशूलग्रामीणा दन्तुरा नाम कुट्टनी।)

दन्तुरा—(परिक्रम्यावलोक्य च।) एसो सो मत्तकलकण्ठकलअलाकुलिअदसदिम्मुहो वसन्तसमअसमारम्भो वट्टादि। ता किं ण गिण्हदि बन्धईकदं भूइभाअणं दरिहडगामीणो तवसिओ अण्णाणराशिः। अण्णं अ हग्गउलीगामीणेण जडासुरदिअम्बरेण ण इच्छिआ पिच्छिआ। सुण्डिवालगामीणेण सहासलिणा महोपज्झाएण वि बन्धअं कदुअ रअणकरण्डिआ छण्डिआ। ही ही ही। ढुण्ढोलीगामीणस्स फुक्कटमिस्सस्स णिरक्खरं सच्छपोत्थिअं पवाहे पडिदम्। हडिवाडिगामीणस्स णिरक्खरसुअस्स जन्तुकेउणो महाविज्जस्स ओसहकरण्डिआ मूसएहिं खण्डिदा। टिक्कडउवाडगाममुहमण्डणेण कुलवाहिणा वटुएण बन्धनं कदुअ ण पत्थिआ धुत्तिआ। णिस्संतानग्गामसरोवरराअहंसेन संगामविसरेण राउत्तराएण बन्धअं कदुअ सुणअस्स पाणिअं दिण्णम्। ही ही ही। वगउलीगामीणस्स झगडगसारस्स ठक्कसाहुणो लेहसंपुडिआ पवाहपडिआ। चमरसेणविहारवासिणा तेण बन्दिएण वसणाअरेण णिद्दारिअं पडसाडिअं। ता एहिं दुव्विदद्देहिं भण्डिदम्हि। भणिदं च केणा वि—

'दुट्ठभुअंगो जो णिअघरलज्जइ दुट्ठसिणेहो जो दाणविवज्जइ।
स कुरूओ जो हिअए ण रुच्चइ पत्थरकठिणो जो निठुरं वच्चइ॥ १२॥'(क)

(क) एष स मत्तकलकण्ठकलकलाकुलितदशदिङ्मुखो वसन्तसमयसमारम्भो वर्तते। तत्किं न गृह्णाति बन्धकीकृतं भूतिभाजनं दरिहडाग्रामीणस्तपस्वी अज्ञानराशिः। अन्यच्च हग्गउलीग्रामीणेन जटासुरदिगम्बरेण नेच्छिता पिच्छिका। सुण्डिवालग्रामीणेन सभासलिना महोपाध्यायेनापि बन्धकं कृत्वा रत्नकरण्डिका त्यक्ता। ही ही ही। ढुण्ढोलीग्रामीणस्य फुक्कटमिश्रस्य निरक्षरं शास्त्रपुस्तकं प्रवाहे पतितम्। हडिवाडिग्रामीणस्य निरक्षरसुतस्य जन्तुकेतोर्महावैद्यस्यौषधकरण्डिका मूषकैः खण्डिता। टिक्कडउवालग्राममुखमण्डनेन कुलव्याधिना बटुकेन बन्धनं कृत्वा न प्रार्थिता धोतिका। निःसंतानग्रामसरोवरराजहंसेन संग्रामविसरेण राउत्तराजेन बन्धकं कृत्वा शुनकस्य

१. 'दन्तशून्य' ग. २. 'परिक्रम्य' क.

(नेपथ्ये ।)

वामागमाचारविदां वरिष्ठः परापकारव्यसनैकनिष्ठः ।
अयं स वेदार्थपथप्रतीपः सभासलिः कौलकुलप्रदीपः ॥ १३ ॥

([1]पुनर्नेपथ्ये सहासम्)

[2]बटुः—[3]अये, आश्चर्यमाश्चर्यम् । इदानीं कुट्टनीभवनम[4]लंक्रियते महामहोपाध्यायेन दाम्भिकचक्रवर्तिना [5]महाहवपालिना निन्दितवनमालिना तिमिराकुलनयनेनापि परदोषदर्शिना सभासलिना ।

(ततः प्रविशति कुलव्याधिवटुकेनानुगम्यमानः सभासलिः ।)

**सभासलिः**—भो भोः कुलव्याधे, क्व सा दन्तुरा कुट्टनी ।

**कुलव्याधिः**—एसा सा वसीकरणमन्तं जवन्ती भुजंगमग्गं मग्गअन्ती वट्टदि । (क)

**सभासलिः**—(तामवलोक्य स्वगतम् ।)

अन्तर्निमग्नं नयनद्वयेन क्वचित्प्रयातं नवयौवनेन ।
भग्नौ कपोलौ पतितं कुचाभ्यां मन्ये भयान्मन्मथसायकानाम् ॥१४॥

किंच ।

भुजंगदंश[6]व्यसनाकुलाया दन्ता [7]बहिर्गा इव दन्तुरायाः ।
बन्धानुसंधानपरा यदीया पाशोपमा वल्गति कर्णपाली ॥ १५ ॥[8]

---

पानीयं दत्तम् । ही ही ही । वगडलीग्रामीणस्य झगडगसारस्य ठक्कश्रेष्ठिनो लेखसंपुटिका प्रवाहपतिता । चमरसेनविहारवासिना तेन बन्दिना व्यसनाकरेण निर्दारितं पट्टशाटकम् । तदेतैर्दुर्विदग्धैर्भाण्डितास्मि । भणितं च केनापि—

'दुष्टभुजंगो यो निजगृहे लज्जितो दुष्टस्नेहो यो दानविवर्जितः ।
स कुरूपो यो हृदये न रोचते प्रस्तरकठिनो यो निष्ठुरं वदति ॥'

(क) एषा सा वशीकरणमन्त्रं जपन्ती भुजंगमार्गं मार्गयमाणा वर्तते ।

---

१. 'बटुः सहासम्' ग. २. 'बटुः' ख-पुस्तके नास्ति. ३. 'अये' क-पुस्तके नास्ति. ४. 'अलंकृतं दाम्भिक' ग. ५. 'अनेन महात्रिटमेलिना' ग. ६. 'व्यसनातुराया' ख-ग. ७. 'बहिःस्था' ग. ८. अस्माच्छ्लोकादनन्तरं ग-पुस्तके 'अपि च। गल्लौ जरद्वल्लकसंनिकाशौ हारिद्ररब्धा(?)सदृशौ पयोधरौ । विशीर्णचुल्लीसदृशं भगोदरं तथापि रण्डास्ति रताभिलाषिणी ॥' इत्यधिकमस्ति.

(प्रकाशमुपसृत्य कर्णौ स्पृष्ट्वा सहासं वामपाणिना ।) अहमभिवादये ।

**दन्तुरा**—मअणमञ्जरी दे पसीददु। एदं भद्दासणम्। उपविसदु उवज्झाओ। (क)

**सभासलिः**—(उपविश्य ।) अये, दूरत एवास्माभिराकर्णिता वसन्तगीतिः। तत्क सा मदनमञ्जरी ।

**कुलव्याधिः**—उवज्झाअ, जइ तुह चरिअं कलहप्पिआ जाणिस्सदि, ता तुम्हेहिं किं कादव्वम् । (ख)

**दन्तुरा**—(सहासम् ।) एदाणं कलहप्पिआ णाम पणइणी । (ग)

**कुलव्याधिः**—(सोल्लासम् ।) अह किम् । (घ)

**दन्तुरा**—मअणमञ्जरि, इदो इदो । (ङ)

**मदनमञ्जरी**—(उपसृत्य ।) अम्ब, को एसो । (च)

**दन्तुरा**—सो एसो सहासलि णाम उवज्झाओ जस्स कलहप्पिआ णाम घरिणी। (छ)

**सभासलिः**—(मदनमञ्जरीमवलोक्य ।) अये, रोषोऽपि लीलावतीनां चित्तमुन्मादयति । तथा हि ।

(क) मदनमञ्जरी ते प्रसीदतु। एतद्भद्रासनम्। उपविशतूपाध्यायः ।

(ख) उपाध्याय, यदि तव चरितं कलहप्रिया ज्ञास्यति, तदा युष्माभिः किं कर्तव्यम् ।

(ग) एतेषां कलहप्रिया नाम प्रणयिनी ।

(घ) अथ किम् ।

(ङ) मदनमञ्जरि, इत इतः ।

(च) अम्ब, क एषः ।

(छ) स एष सभासलिर्नामोपाध्यायो यस्य कलहप्रिया नाम गृहिणी ।

१. 'सहासं' ग-पुस्तके नास्ति. २. 'वामपाणिना' क-ख-पुस्तकयोर्नास्ति. ३. 'सोल्लासम्' क-ग-पुस्तकयोर्नास्ति. ४. 'पइणो (पत्नी)' ख. ५. अस्मात्प्राक् ख-पुस्तके "कुलव्याधिः—उवज्झाअ, पेक्ख, पेक्ख । 'जहणत्थणवीदपआसमओ तणुमण्डखडव्व पलाइगओ । णवपीणपओहरमण्डलिआ जणु बम्मणसंचलपुत्तलिआ ॥'' इत्यधिकमस्ति.

आनन्दकारि मदनज्वरदर्पहारि
　　पीयूषपङ्कपरिहासरसानुकारि ।
प्रेमप्रसारि परमाभ्युदयानुकारि
　　वामभ्रुवामहह किं न मनोविकारि ॥ १६ ॥

**कुलव्याधिः**—अये[1] दन्तुरे, अज्ज उज्जेव्व कलहप्पिआए समं एदाणं दसणादसणि णहाणहि करचरणणिव्बन्धभीसणो महाहवो संवुत्तो । तदो दव्वीखण्डेण, तदो अलादखण्डेण, तदो पीढिआए, तदो हण्डिआए एसो उवज्झाओ हणिअ णीसारिदो । (क)

**दन्तुरा**—(सस्मितम् ।) उवज्झाअ, ता कीस ईदिसीणं तुम्हेहिं संगमो विहिदो । (ख)

**सभासलिः**—नैष्टाग्निश्रोत्रियसुता मच्छरहट्टा ग्रामीणा मासोपवासिनी । किं तु राक्षसीवातिप्रगल्भा वृद्धा च । अतएवाहं पतितकुचस्पर्शभीतः प्रबलतरनिर्वेदादत्रायातः ।

**दन्तुरा**—जुत्तमिदं तुम्हाणं महापण्डिआणम् । (ग)

---

(क) अये दन्तुरे, अद्यैव कलहप्रियया सममेतेषां दशनादशनि नखानखि करचरणनिर्बन्धभीषणो महाहवः संवृत्तः । ततो दर्वीखण्डेण, ततोऽलातखण्डेन, ततः पीठिकया, ततो हण्डिकया एष उपाध्यायो हत्वा निःसारितः ।

(ख) उपाध्याय, तत्किमीदृशीनां युष्माभिः संगमो विहितः ।

(ग) युक्तमिदं युष्माकं महापण्डितानाम् ।

---

१. 'अये दन्तुरे' इति क-ख-पुस्तकयोर्नास्ति. २. 'पढम' ख. ३. 'नष्टा सा श्रोत्रिय-' क-ग. ४. 'राक्षसीव तिष्ठति प्रगल्भा' ख. ५. 'धृष्टा' क, ''वृद्धा चास्पृश्या । यतः । 'अपि स्पर्शेन या कुर्यादुपल पुलकान्वितम् । यौवने वार्धके सैव राक्षसीव भयंकरी ॥' किंच । 'प्रायश्चित्तं न हरतः कामिन्या पतितौ स्तनौ । अत एव तयोः स्पर्शे लोकोऽयं विगतादरः ॥' अपि च । 'पतितानां संसर्गं त्यजन्ति दूरेण निर्मला गुणिनः । इति कथयन्नरतीनां हारः परिहरति कुचयुगलम् ॥'' ग.

**मदनमञ्जरी**—*(सोद्वेगं संस्कृतमाश्रित्य।)*

आयस्यति भवतोऽयं विनयपरस्ताद्दगनुरागः।
वन्ध्यासुतहृदयगता मालेयं गगनकुसुमानाम् ॥ १७ ॥

**सभासलिः**—*(मदनमञ्जरीमवलोक्य।)*

हठाक्रान्तं नीलोत्पलदलविशालालसदृशा-
स्त्रिधा मध्यं बद्धं वलिभिरबलं वीक्ष्य विधिना।
प्रबन्धः कोऽप्यस्याः स्तनकलशयोश्चोरुरचना
नितम्बप्राग्भारादलसगमनः क्लेशदमनः ॥ १८ ॥

अपि च।

हर्षोत्फुल्लकपोलया स्तनभरव्यालोलया बालया
हेमाम्भोरुहवक्त्रया दरदलन्नेत्रोत्पलप्रान्तया।
दृष्टश्चेदनया कुपत्रविषमैः संधानबन्धाकुलैः
किं न स्यान्मदनोऽपि पुङ्खितशरैर्व्यावृत्य लक्ष्यीकृतः ॥ १९ ॥

*(दन्तुरामवलोक्य।)* अये, कुतो जङ्घाव्रणव्याकुलिता भवती।

**दन्तुरा**—संगामविसरेण राउत्तराएण बन्धए सुणओ दिण्णो। तेण हं भक्खिदम्हि। (क)

**सभासलिः**—कुलव्याधे, समाहूयतां जन्तुकेतुनामा महावैद्यः।

**कुलव्याधिः**—*(जन्तुकेतुमाहूय।)* इमाए गहिरणाहीवणाणं विसमो उवआरो। (ख)

**दन्तुरा**—उवज्झाअ, किं मं विडम्बेदि एमो। (ग)

**सभासलिः**—अयमविदितः किं भवत्याः।

(क) संग्रामविसरेण राउत्तराजेण बन्धके शुनको दत्तः। तेनाहं भक्षितास्मि।

(ख) एतस्या गभीरनाभिव्रणानां विषम उपचारः।

(ग) उपाध्याय, किं मां विडम्बयत्येषः।

१. 'विनयमय' ख. २. 'हृदयस्थितमालेव' ख. ३. 'चाङ्गरचने' क, 'अङ्गचलने' ख. ४. 'प्राग्भारः कटकदमनः' क-ग. ५. 'शमनः' ग. ६. 'भङ्गाकुलैः' ख-ग. ७. 'मोडिअम्हि' ख-ग. ८. 'समानीयताम्' क. ९. 'जन्तुकेतुमाहूय' इति क-ख-पुस्तकयोर्नास्ति. १०. 'अविदितोऽयं किं' क-ख.

अविलम्बकृपझम्पः कटुरटिताकुलितदिङ्मुखो मुखरः।
कुत्सितकरणग्रामः कुधियामवधिः कुलव्याधिः ॥ २० ॥

**कुलव्याधिः**—भो उवज्झाअ, एआरिसो को वि विज्जो वाहिबन्धओ। (क)

**सभासलिः**—नाकर्णितानि भवता जन्तुकेतोरनिवारितप्रसराण्युपचारवचनानि। तथा हि।

उत्काशे कण्ठदाहः प्रचुरघृतपयःपानमामज्वरार्ते
रक्ताकृष्टिः कृशानामुदरभयहरा कर्कटी सक्तुमिश्रा।
पथ्या पथ्यातिसारे दृशि सरुजि पुनः क्षारचूर्णप्रयोग-
स्तैस्तैर्मिथ्योपचारैस्तरुणयति यमाडम्बरं जन्तुकेतुः ॥ २१ ॥

**जन्तुकेतुः**—(प्रविश्य।)
व्याधयो मदुपचारलालिता मत्प्रयुक्तममृतं विषं भवेत्।
किं यमेन सरुजां किमौषधैर्जीवहर्तरि पुरःस्थिते मयि ॥ २२ ॥

**दन्तुरा**—महावेज्ज, मअणमञ्जरीए गले मीणकण्टअं लग्गिअं वट्टदि। तत्थ किं करीअदु। (ख)

**जन्तुकेतुः**—(सगर्वम्।) दृष्टप्रत्ययस्तावदुपचारः। पूर्वमुष्ट्रस्य गले

(क) भो उपाध्याय, एतादृशः कोऽपि वैद्यो व्याधिबन्धकः।

(ख) महावैद्य, मदनमञ्जर्या गले मीनकण्टकं लग्नं वर्तते। तत्र किं क्रियते।

१. 'करणः कृपणः' क. २. 'महावाहिबन्धणो' ख. ३. 'न श्रुतानि' ग. ४. 'दृशि रुजि हितकृत्' ख. ५. 'हितः' ग. ६. 'तैस्तैः' ख. ७. '(प्रविश्य स्वगतम्।) 'वैद्योऽहं वैद्यराजोऽहं सर्वव्याधिसमन्वितः। यं यं स्पृशामि हस्तेन क्षणार्धं स न जीवति' ॥ व्याधयो–' ग. ८. अस्मादनन्तरं ख-पुस्तके "श्रूयतामस्मद्गृहस्य निर्व्याधयः। 'श्लीपदे च न मे पीडा गलगण्डो न बाधते। गृहिणी ग्रहणीग्रस्ता ज्वरितं बालकद्वयम् ॥" इत्यधिकमस्ति. ९. 'दन्तुरा—जन्तुकेतुमवलोक्य प्रणम्य' ग. १०. 'ता' क, 'किं तत्थ करीअदु तत्थ ओसहं भण' ख. ११. 'सगर्वम्' क-ख-पुस्तकयोर्नास्ति. १२. 'दृष्टप्रत्ययस्तावदुपचारः' क-ग-पुस्तकयोर्नास्ति.

कर्कटी लग्नासीत्। तत्राऽस्मत्पित्रा कुटुम्बकेतुना निरक्षरेणोष्ट्रस्य मुखं बन्धयित्वा दृढतररज्जुभिराकृष्टम्। ततस्तन्मुखाद्विगलिता कर्कटी। तदेतस्या अपि मुखं बन्धयित्वा किमिति नाकृष्यते।

(ततस्तस्या हसन्त्या मुखाद्विगलितं मीनकण्टकम्।)

(ततः सगर्वम्)

जन्तुकेतुः—अवधार्यतामस्मदुपचारचातुर्यम्।

सभासलिः—जन्तुकेतो, महाप्रयत्नेन क्रियतामस्या उपचारः।

जन्तुकेतुः—अस्मदनुष्ठिताया अस्या गुह्यागारेऽपि भविष्यति विशेषः।

सभासलिः—निवेद्यतां यदुपचारः।

जन्तुकेतुः—श्रूयतां चरकवचनम्।

यस्य कस्य तरोर्मूलं येन केनापि पेषयेत्।
यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति॥ २३॥

सभासलिः—अद्येह हट्टे रोदनकोलाहलः संवृत्तः। तत्तत्र किं भवदुपचारः संजातः।

जन्तुकेतुः—नहि नहि। भवद्भिरेव यदि तत्र स्वस्त्ययनं कृतं स्यात्।

सभासलिः—नहि नहि।

कुलव्याधिः—अज्ज, जइ तुम्हे दुवे वि तत्थ ण गदा, ता किं वज्जेण मारिदो वणिअतणओ। (क)

---

(क) आर्य, यदि युवां द्वावपि तत्र न गतौ, तत्किं वज्रेण मारितो वणिक्तनयः।

---

१. 'सकुटुम्बकेन निरक्षरेण' क, 'निरक्षरेण सकुटुम्बकेन' ख. २. 'मुष्कं' क-ख. ३. 'मुष्कं' क-ख. ४ 'सगर्वमिव' ख-ग. ५. 'आसां' क. ६. 'अनुष्ठितानामासां' क. ७. 'अद्य हट्टमध्ये' ख. ८. 'तत्किं भवतामुपचारस्तत्र संजातः' ख, 'तत्र किं भवतोपचारः कृतः' ग.

**जन्तुकेतुः**—अहो दुर्दैवमस्माकम् । निर्व्याधयः सकलनगरप्राणिनः ।[1] (दीर्घं निःश्वस्य ।) अहो धिग्व्यवहारं बर्बरपुरस्य, यद्वैद्य एव मृतकखट्वामुद्वहति । अत एवास्माभिरुद्वहनभारभयाद्गजवैद्यकमपहाय बालतन्त्रमभ्यस्तम् । बालस्य हि मृतस्य सुकरमुद्वहनम् । किं च ।

श्मश्रुसंचयविध्वंसि जलज्ज्वलनभाजनम् ।
नोपसर्पति चेदग्रे मृतं मुञ्चति किं भिषक् ॥ २४ ॥[3]

**सभासलिः**—अहमप्यभिमतनिर्यमः स्वस्त्ययनार्थं व्रजामि ।

**जन्तुकेतुः**—कीदृशस्ते निर्यमः ।

**सभासलिः**—यत्कैरटकश्राद्धेऽन्यस्य प्रवेशो न दीयते । अयमेवाभिमतो निर्यमः सर्वत्र ।

**दन्तुरा**—महावेज्ज, तिमिराउला मे णअणा ण पेक्खन्ति । ता ओसहं भण । (क)

**जन्तुकेतुः**—

चक्षूरोगे समुत्पन्ने तप्तफालं गुदं न्यसेत् ।
तदा नेत्रोद्भवां पीडां मनसापि न संस्मरेत् ॥ २५ ॥

अपि च ।

अर्कक्षीरं वटक्षीरं स्नुहीक्षीरं तथैव च ।
अञ्जनं तिलमात्रेण पर्वतोऽपि न दृश्यते ॥ २६ ॥

(दन्तुरां प्रति ।) कियद्दूरं पश्यसि ।

(क) महावैद्य, तिमिराकुले मे नयने न पश्यतः । तदौषधं भण ।

१. अस्मादनन्तरम् 'चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥' इत्यधिकमस्ति. २. 'चेदग्रेमृतं मुञ्चति को' क. ३. अस्मादनन्तरम् 'वैद्यः क्रूरो यमः क्रूरो वैद्यः क्रूरो यमादपि । यमो हरत्यसूनेव वैद्यस्तु सवसूनसून् ॥' इत्यधिकमस्ति. ४. 'संधिना' ख-ग. ५. 'अभिमतसंधिः' ख. ६. 'कटश्राद्धे' ख. ७. 'संधिः' क. ८. 'चक्षूरोगे' इत्यारभ्य 'दन्तुरां प्रति' इत्यन्तं क-ग-पुस्तकयोर्नास्ति.

**दन्तुरा**—वेडरुक्खं जाव। (क)

**जन्तुकेतुः**—अत्र वटवृक्षोऽप्यस्ति किम्।

**कुलव्याधिः**—वेज्जो ज्जेव तिमिराउलो। ता बुड्डिअं उवआरेण।(ख)

**जन्तुकेतुः**—(मदनमञ्जरीमवलोक्य।)

स्तनकलशाभ्यामाभ्याममुना गुरुणा नितम्बबिम्बेन।
कस्य न मन्मथदीक्षाविधिना विधिना हृतं चेतः॥ २७॥

(परिवृत्य।) वशीकरणमारणमोहनस्तम्भनोच्चाटनैमौषधमनुसरामि। (इति निष्क्रान्तः।)

(नेपथ्ये।)

नष्टश्रुतिर्व्यक्तभुजङ्गसङ्गः संगीतकानन्दविनोदबन्धुः।
विक्रीतलज्जः स्मरबाणवर्ती जटासुरस्तस्करचक्रवर्ती॥ २८॥

(ततः प्रविशति जटासुरो नाम दिगम्बरः।)

**दिगम्बरः**—अलिहन्त अलिहन्त, अण्णाणरासिणा तवस्सिणा अणवरज्झा मए छेलिआ णिहदा। ता हगे विचालट्ठाणमाअदो। (ग)

(नेपथ्ये।)

किमङ्गरागाभिमुखः कपाली द्विजिह्वदोषाकरधूर्तमूर्तिः।
विक्रीतलज्जो रमयन्भुजङ्गानज्ञानराशिः समुपागतोऽयम्॥२९॥

(प्रविश्य।)

**अज्ञानराशिः**—मया सा पुष्पवाटिकायां चरन्ती छागी निहता। तादि तं विचारयतु सभासलिरुपाध्यायः।

**सभासलिः**—(सविमर्शं विचार्य।) यदा ज्ञानपूर्वं छागीवधः कृतस्तदा मूल्यं दातव्यम्। नो चेन्न किमपि।

---

(क) वटवृक्षं यावत्।

(ख) वैद्य एव तिमिराकुलः। तद्बुड्डितमुपचारेण।

(ग) अर्हन्नर्हन्, अज्ञानराशिना तपस्विनानपराद्धा मम च्छागी निहता। तदहं विचारस्थानमागतः।

---

१. 'अग्गे वडरुक्खं' क. २. 'अग्रे' क. ३. 'अन्धलओ' क. ४. 'नितम्बेन' क-ग. ५. 'भस्माङ्गरागा-' ख. ६. 'विचार्यतां सभासलिना' ख. ७. 'ज्ञातुमर्हति' ख.

**अज्ञानराशिः**—(सरभसम् ।) मया छागीति न निहता, किं तु वत्सिकेति ज्ञातम् ।

**सभासलिः**—तर्हि जितमज्ञानराशिना । तद्गृहाण जयपत्रम् ।

तपस्विनामुना सत्यं जितमज्ञानराशिना ।
जटानां कुलटानां च यत्रैकत्र समागमः ॥ ३० ॥

**अज्ञानराशिः**—(सक्रोधम् ।) अये, मामुपहसत्युपाध्यायः । अहह ब्राह्मण्यं विनापि परमप्रतिष्ठाप्रकर्षस्ते । रे[3] रे,

विशालतिलकारम्भ दम्भक्षोभकलानिधे ।
राजवेश्मसरःकङ्क रङ्क केनोपमीयसे ॥ ३१ ॥

**सभासलिः**—(सकोपम् ।)

कौपीनवानपि जटापटलाकुलोऽपि
　भालस्थलस्खलितभस्मकणारुणाक्षः ।
उन्मादबन्धुरुपनीय गलेऽक्षमाला-
　मुन्मार्ष्टि वारवनिता जघनं जघन्यः ॥ ३२ ॥

**दन्तुरा**—तुम्हेहिं लज्जा कत्थ विक्किणिदा । (क)

**सभासलिः**—अद्यैव हट्टे महाजनपुरतः सुशीलादेव्या सुवर्णदाम्ना क्रीता ।

**अज्ञानराशिः**—(मदनमञ्जरीमवलोक्य ।)

नेत्रानन्दभुवः प्रमोदवसतेरस्याः कुरङ्गीदृश-
　स्तन्वङ्ग्याः स्तनशैलमूलविलसन्मुक्तालतापाशितः ।
विस्तीर्णे जघनस्थलीपरिसरे [illegible] लीलाभर-
　भ्रान्त स्वान्तकुरङ्ग [illegible] [illegible]षुबाणार्दितः ॥ ३३ ॥

(क) युष्माभिर्लज्जा [illegible]

१. 'जयपत्रमिति [illegible] [illegible]यन्तं ख-ग-पुस्तकयोर्नास्ति. ३. [illegible] । क-पुस्तके नास्ति. ५. 'पञ्चेषुण[illegible]

(परिवृत्य ।)

दुर्दैवादवधीरिता रतिपतेरानन्दकन्दस्थली
प्राप्ता कल्पलता कथं कथमपि स्थानान्तरे विस्मृता ।
विज्ञाता न मया जडेन पुलकैरावेदिता विह्वला
बालापाङ्गतरङ्गभङ्गिमकलालीलानिधिः प्रेयसी ॥ ३४ ॥

(प्रविश्य ।)

**मिथ्याराशिः**—भो भो, सअलतवस्सिणीमुहमण्डणाए तुम्हाणं तवस्सिणीए पसववेअणा वट्टदि । ता आगच्छध । (क)

**अज्ञानराशिः**—(अतिरभसाद्भस्म विकिरन् ।) तत्प्रसवकुशला काचिदन्विष्यताम् ।

**सभासलिः**—वयमेव प्रसवकर्मणि निपुणाः ।

(ततः प्रविशति पुत्रहस्ता तपस्विनी ।)

**सभासलिः**—(परिवृत्यावलोक्य च ।) अहो भस्माङ्कुरस्य रमणीयता । किं च ।

आदन्तजननात्सद्य आ चूडान्नैशिकी क्रिया ।
त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥ ३५ ॥

(परिवृत्य ।)

**दिगम्बरः**—दन्तुले, हगे कामाउले मअणमञ्जरीणिमित्तं आगदे । ता गेण्हदु भोदी अप्पमुल्लेण सुवण्णघडिदं अलिहन्तम् । (ख)

(क) भो भोः, सकलतपस्विनीमुखमण्डनाया युष्माकं तपस्विन्या प्रसववेदना वर्तते । तदागच्छत ।

(ख) दन्तुरे, अहं कामा‍ मदनमञ्जरीनिमित्तमागतः । तद्गृह्णातु भवती अल्पमूल्येन सुवर्णघटि

१. 'परिवृत्य जटासुरः' — २. 'नेत्रापाङ्ग' क. ३. 'संगम' ख. ४. 'भो भो' मवंस' ख. ६. 'काप्यन्वेष्यताम्' क. ' ग. ८..अस्मादनन्त- ९. 'कामाउले' इति

**दन्तुरा**—(तपस्विनं प्रति ।) भो भुअङ्गराअ, [1]तुम्हेहिं जडासुरो वसीकरणमन्तं सिक्खविदो । (क)

**अज्ञानराशिः**—मयैव [2]वात्सल्यादुच्चाटनमोहनमारणरण्डावशीकरणमन्त्रा अस्मै प्रदत्ताः ।

**जटासुरः**—तेहिं जेव्व मन्तेहिं हगे धम्मचलणसीलाए कुट्टणीरक्खसीए मुहकंदरे पडिदो । (ख)

**दन्तुरा**—विमणा मअणमञ्जरी । ता जो एत्थ कुरूवो मलपङ्कमिस्सिदो सो णीसारीअदु । (ग)

**जटासुरः**—(सरभसं लगुडमादाय ।) मए जेव्व णीसारिदव्वा सव्वे ।(घ)

**सभासलिः**—इदयं मुष्टिलगुडन्यायः । (पुरो ऽवलोक्य ।) अहो पाण्डित्यम् ।

पुनस्त्रिदण्डः पुनरेकदण्डः पुनः पुनर्भिक्षुकतामुपेतः ।
तपस्वितामेत्य जटासुरोऽयं नग्नोऽभवद्भिक्षुकचक्रवर्ती ॥ ३६ ॥

(पुनरवलोक्य ।) युक्तमुक्तं केनापि ।

---

(क) भो भुजंगराज, युष्माभिर्जटासुरो वशीकरणमन्त्रं शिक्षितः ।

(ख) तैरेव मन्त्रैरहं धर्मचरणशीलायाः कुट्टनीराक्षस्या मुखकंदरे पतितः ।

(ग) विमना मदनमञ्जरी । तद्योऽत्र कुरूपो मलपङ्कमिश्रितः स निःसार्यताम् ।

(घ) मयैव निःसारयितव्याः सर्वे ।

---

१. अ[illegible]त्वाक् "भो दिअम्बर, केत्थ तुम्हेहिं लज्जा वि[illegible] (भो दिगम्बर, कुत्र युष्माभिर्लज्जा विक्रीता' इति च्छाया) । दि[illegible]म्बरः (सावलेपम्)—हट्टाए महाजणपुरदो सुसीलाए साहुवहुआए कीणिदा । ए[illegible] [illegible]स्वाहिणो [illegible]अस्स तुरगओ टङ्कसदेहिं को[illegible] । सआसासो[illegible]कालगा[illegible] [illegible]पुरतः सुशीलया साधु[illegible]क्रीतः । ............ [illegible] [illegible]न धनेन ............ [illegible] क-पुस्तकेऽधिकमस्ति. २. 'मया शिष्यवात्सल्यात्' ख. ३ [illegible] सश्वासम्' ख. ५. 'कोऽयं' क. [illegible] 'भग्नो' ख. ६. 'पुनरवलोक्य' ख.

उभावप्यश्रुतग्रन्थावुभावपि जडात्मकौ ।
अहो मोहस्य माहात्म्यं यदेकः शिष्यतां गतः ॥ ३७ ॥

(प्राचीमवलोक्य ।) अये, शशाङ्ककरनिकरनिवारिततिमिरमनोहरा दिशः । तथा हि ।

एष स्वर्गतरङ्गिणीजलमिलद्दिग्दन्तिदन्तद्युती
रोजद्राजतकुम्भविभ्रमधरः शीतांशुरभ्युद्गतः ।
हंसीयत्यमलाम्बुजीयति लसड्डिण्डीरपिण्डीयति
स्फारस्फाटिककुण्डलीयति दृशामानन्दकन्दीयति ॥ ३८ ॥

(इति निष्क्रान्ताः सर्वे ।)

लज्जाविक्रयो नाम प्रथमोऽङ्कः ।

## द्वितीयोऽङ्कः ।

(ततः प्रविशति विश्वासघात कनाम्ना मित्रेणानुगम्यमानो निःसंतानग्रामीणः सङ्ग्रामवि मरो नाम राउत्तराजः ।)

(सङ्ग्रामविसरः सहर्ष कुट्टन ों वामपाणिना प्रणम्योपविशति ।)

**दन्तुरा**—पुत्तअ, चिरं जीव । (क)

**सङ्ग्रामविसरः**—(मदनमञ्जरीम लोक्य ।)

एतानि तानि हरनेत्रशि खिप्रबन्ध-
दग्धस्मरव्रणविनाशर यनानि ।
केषां न विस्मयकराणि नित म्बिनीनां
विश्वप्रियाणे नयनावि लोकितानि ॥ १ ॥

अहो आश्चर्यम् ।

मुखरं नूपुरयुगलं प्रथयत्यभिमा मायताक्षीणाम् ।
इति निर्मुखयोः स्तनयोर्मध्यं । त्यजति पञ्चशरः ॥ २ ॥

(क) पुत्रक, चिरं जीव ।

१. 'तमोमनोहरा' क ग. २. 'भ्राजत्' ख, 'भ्रश्यत्'
ग. ३. 'हरः' क. ४. ग. ६. 'जयो' ख. ७. क-
पुस्तके अस्मात्प्राक् 'नेपथ्य अत 'ाति' इत्यधिकमस्ति. ८.
'राजपुत्रः' ख. ९. 'राउत्तरायः' ११. 'प्रपञ्च' ग. १२.
'अहो आश्चर्यम्' क-पुस्तके नास्ति . १४. 'कथयति' क.

किं च ।

नूनमुन्मादयन्त्येता नपुंसकमपि स्त्रियः ।
यदश्रान्तकुचोपान्तयानायातपरं मनः ॥ ३ ॥

(प्रविश्य ।)

**विश्वासघातकः**—(सहर्षम् ।)

उवहसइ पम्हलच्छी लच्छीए गहिरजलहिजलवासम् ।
आलिङ्गणपरिचुम्बणरहिअं गोरीएँ सोहग्गम् ॥ ४ ॥ (क)

**सङ्ग्रामविसरः**—(दन्तुरां प्रति ।) मानः, भुजद्वयोपार्जितं यदस्मदी...यं तद्यु-ष्मदीयमेव । किं तु ममाद्य नरपतिपुरतो राजवाहनतुरगप्रार्थन...सिकस्य मद-नमञ्जरीदत्तहृदयस्य सङ्ग्रामावसरे विस्मरः संवृत्तः ।

**दन्तुरा**—जइ सो राआ राअवाहणं पअच्छदि, ...ा राउत्तराअसंगा-मविसरेण किं कादव्वम् । (ख)

**सङ्ग्रामविसरः**—सङ्ग्रामे तदेवारुह्य पलायनं ...विधेयम् ।

**दन्तुरा**—राउत्तराअ, जुत्तमिदं तुम्हाणं ... । (ग)

**मदनमञ्जरी**—(सहर्षम् ।) एदेहिं ज... चरिदेहिं सअलजुवइवल्लहा तुम्हे । (घ)

**सङ्ग्रामविसरः**—(तामालिङ्ग्य ।)

कोऽयं व्याजविधिः पुनः पुनरसौ वक्रा कटाक्षच्छटा
कम्पस्वेदपरिश्रमैरनुपमैरेभिः किमुच्छृङ्खलैः ।

(क) उपहसति पक्ष्मलाक्षी लक्ष्म्या ग...भीरजलधिजलवासम् ।
आलिङ्गनपरिचुम्बनरहितं गौर्याः सौभाग्यम् ॥

(ख) यदि स राजा राज...ति, तदा राउत्तराजसङ्ग्रामविसरे-ण किं कर्तव्यम् ।

(ग) राउत्तराज, युक्तमिद...

(घ) एतैरेव चरितैः सकल...

१. 'किं च' ग-पुस्तके न ... 'युष्माकं' ख. ३. 'चित्तस्य'
ग. ४. 'विरसः' क. ५. ... ...मैः' क, 'कम्पस्वेदपरिक्रमैः'
ख. ७. 'एभिर्विमूर्छद्वलैः'

**विश्वासघातकः**—तस्स गामस्स वराडिआ जूअसंबन्धेण मए जेव्व गहिदा । अण्णं उण आदाउ णिवेदीअदु । (क) (इति पत्रं समर्पयति ।)

**सङ्ग्रामविसरः**—(मुखं प्रसार्य पठति ।)

वातालीमृतचटकैः सूकरविड्भिश्च मृतकवस्त्रैश्च ।
पवनानीतदलैरपि विक्रीतैः किं न धनलाभः ॥ ६ ॥

(वृद्धां जननीमुपनीय कुट्टनीं प्रति ।) अस्मदाखेटकौतुकं शुना विना न भवति । तदम्बैव कतिपयदिनानि यावदस्तु बन्धके । अनया च प्रतिदिनमवहितया सकलं दासीकर्म कर्तव्यम् । (मदनमञ्जरीमवलोक्य सानन्दम् ।)

प्रस्खलतु नीविबन्धः स्विद्यतु जघनं प्रवेपतामङ्गम् ।
तदपि भुजंगमनोज्ञा सरसंपल्लम्पटा कुलटा ॥ ७ ॥

(सोद्वेगम् ।) विज्ञातास्तावद्विश्वासघातकाधिष्ठिता निजग्रामादयः । तत्प्रार्थ्यतामृणार्थं साधुझकटकसारः ।

(प्रविश्य ।)

**झकटकसारः**—संगामविसर, किणिदसुणअस्स जइ कवडिआ ग होन्ति ता मादरं विक्किणिअ कुक्कुरकव[illegible] अच्छ । (ख)

**सङ्ग्रामविसरः**—ऋणार्तस्य मम [illegible] ापणान्युपनयतु भवान् ।

**झकटकसारः**—संगामविस[illegible] अ[illegible] कवडिअए । (ग)

**सङ्ग्रामविसरः**—(सवि[illegible] ारमर्यादा ।

(क) तस्य ग्रामस्य वरा[illegible] हीता । अन्यत्पुनरादाय निवेदयतु ।

(ख) सङ्ग्रामविसर, क्र[illegible] न भवन्ति तदा मातरं विक्रीय कुक्कुरकपर्दकान् ।

(ग) सङ्ग्रामविसर, अस्मन्मर्यादया गृहाण कपर्दकान् ।

१. 'मुखं' ग-पुस्तके, 'मुखं प्रसार्य' ख-पुस्तके च नास्ति. २. 'नु' क. ३. 'अस्माकं' क. ४. 'बन्धके तावदस्तु' ग. ५. 'अन्तः' क. ६. 'मित्रविश्वासघात[illegible]गता' क. ७. 'संगामविसर किणिदसुणअस्स' क-पुस्तके नास्ति. ८. क-ग. ९. 'सोद्वेगम्' क. १०. 'कीदृशी—आश्रित्य' इति क-ग-पुस्तक[illegible]

**झकटकसारः**—(संस्कृतमाश्रित्य।)

द्विगुणग्रहणेच्छायां ताम्बूलं नैष्ठिकीं कलाम्।
भैजन्ते ग्राहकाः पूर्वं राजपुत्र गतागतैः॥ ८॥

**दन्तुरा**—(सोद्वेगम्।) इमिणा लडअमेलएण उवहसिदा मअणमञ्जरी। सव्वे वि वअणसारा भणिदं वि ण पअच्छन्ति। (क)

(नेपथ्ये।)

परधननिविष्टदृष्टिर्मिथ्याशुक्लस्तमोमयो जगति।
सितदशनकिरणधोरणिधौतदिगन्तः परिस्फुरति॥ ९॥

अपि च।

ब्राह्मण्यदर्पपरिपुष्टविरञ्चिलीलः
शंभोरपि व्रतविधावुपहासशीलः।
कृपाम्बुधौतकपिलाम्बरवेषवर्ती
दम्भप्रियः स्फुरति वञ्चकचक्रवर्ती॥ १०॥

(ततः प्रविशति मिथ्याशुक्लः।)

**मिथ्याशुक्लः**—(प[illegible] य च।) आर्ये, न भेतव्यं न भेतव्यम्। स्वाधीनैव लटकमेलक[illegible] हि।

अज्ञानराशिर्व्य[illegible] पाभिशून्यः।
जटासुरोऽयं [illegible] हि कश्चिदन्यः॥ ११॥

(सकोपम्।)

परापत्र[illegible] ष्ठति।
स लोहकार[illegible] र्वति॥ १२॥

---

(क) अनेन लटकमेलकेनोपहसिता मदनमञ्जरी। सर्वेऽपि वचनसा[illegible] भणितमपि न प्रयच्छन्ति।

[illegible] 'भजन्ते स्वादमात्रेण पूगाणं षोडशापणाः' क, 'भक्षिता मोदकाः पूर्वं [illegible]' ग. २. 'सविषादम्' क. ३. 'परिशिष्ट' क-ख. ४. 'अये' क. ५. 'पूर्णः' [illegible]र्त' ग.

आभिधानम्। किं च, वेदान्तवादिनां भवतामप्रामाणिकमद्वैतं प्रामाणिकं वा। प्रमाणमस्ति चेद्द्वैतापत्तिः। अथ प्रमाणं नास्ति चेत्कथमद्वैतोप ॥

**फुङ्कटमिश्रः**—अस्त्येव प्रमाणं किं त्वभिन्नम्।

**मिथ्याशुक्रः**—तदेव प्रमाणं तदेव प्रमेयमिति गम्भीरा वेदान्तचर्चा।

**फुङ्कटमिश्रः**—अलमतिशुष्कचर्वणेन। मदनमञ्जरीस्वस्त्ययनार्थं वयमागताः।

**मिथ्याशुक्रः**—(मदनमञ्जरीमवलोक्य।)

किं नेत्रयोरमृतवर्तिरियं विधातु-
राद्या किमद्भुतशरीरविधानलेखा।
संसारसारमहह त्रिजगत्पवित्रं
तद्रत्नमेतदुपसर्पति पङ्कजाक्षी ॥ १८ ॥

अपि च।

एतस्याः स्तनभारभङ्गुरमुरः पीना नितम्बस्थली
मध्यं मज्जति नाभिगर्तपतितं नान्यं परं मुञ्चति। (?)
धैर्यं धेहि मनःकुरङ्ग पुरतो रोमावलीवागुरा
तत्किं भावि गतागतव्यसनिनः किं वा विधेयं विधेः ॥ १९ ॥

(सहर्षम्।) पुनरवलोक्यतामियम्।

**फुङ्कटमिश्रः**—(तामवलोक्य।)

लावण्यामृतसरसी ललितगतिर्विकचकमलदलनयना।
कस्य न मदनशरासनविधुरमनस्तापमपहरति ॥ २० ॥

---

१. 'किं च' ख-पुस्तके नास्ति. २. 'वेदिनां' ख. ३. 'प्रामाणिकं' ग. ४ 'प्रामाणिकं' ग. ५. 'कुतो वै अद्वैतसिद्धिरिति' ख. ६. 'तु न भिन्नम्' क. ७. 'गम्भीरता वेदान्तवादिनाम्' ख. ८. 'वयस्यालमतिचर्वितचर्वणेन' क, 'अलं शुष्कतर्कवादेन वयं मदनमञ्ज[illegible]कर्णनाय समागताः' ग. ९. 'अमृतसिन्धुः' क-ग. १०. 'कान्ता' क, 'क्षीणा' ग. ११. 'नाल्पं चलं चुम्बति' ख, 'नाभ्यं वलं चुम्बति' ग. १२. 'तत्किं भ्रान्तिगतागत' ख, 'मेयं भाति गतागत' ग. १३. 'विमलतनुः क. १४. 'विकल' ख, 'विह्वलहृत्तापमपनयति' ग.

झकटकर।

स्तैर्बन्धप्रबन्धैः कति कति न कृता जागरा नागरीभि-

र्नीतः कामः प्रतिष्ठां रतिरभसरसप्रार्थनाभिर्नवाभिः।

न्वीयं किं तु नीलोत्पलदलयुगलप्रोज्ज्वलस्निग्धदृष्टि-

र्निर्व्याजैरङ्गहारैरुपचरति चमत्कारमन्तर्गभीरम् ॥ २१ ॥

**मिथ्याशुकः**—अरेरे नरपशो, विषमाः शृङ्गारकथाः। अतिसंनिहितमदनचेष्टानुवादिन उक्तिरेव ते ग्राम्या। तत्तद्विशेषरहितैश्च वचनैर्न किंचिदुक्तं भवति। तथा हि।

यज्जल्पितं किमपि यच्च विलोकितं य-

दाज्ञाप्रदानममकुञ्जनवल्लिबन्धः।

प्रत्यङ्गचुम्बनकलाकलहानुवृत्ति-

रेतत्सुखं तदधिका मदनस्य सृष्टिः ॥ २२ ॥

(इत्यन्योन्यं कलहं कुरुतः। ततो मिथ्याशुकेन गलहस्तं दत्त्वा निःसारितः फुट्टकामिश्रः।)

(ततः प्रविशति चमरसेनविहारग्रामाद्व्यसनाकरो बन्दी।)

**व्यसनाकरः**—(पुरोऽवलोक्य।) हा धिक्, कष्टम्। पृथुजघनया रजकया विना रजन्यां समुत्खातनिधानस्थानमिव विभाति भवनम्। तथाहि।

अनङ्गमङ्गलारम्भकुम्भाविव पयोधरौ।

कस्य नातिहरौ तस्याः करपल्लवसंगतौ ॥ २३ ॥

अपि च।

सप्रेमभ्रमराः प्रमोदमधुराः पीयूषवर्षोत्कराः

सान्द्रानन्दकराः स्मरज्वरहरास्तास्ताः कलाः सुभ्रुवः।

---

१. 'एभिः प्रबन्धैः' ख. २. 'रसरभस' ख. ३. 'दलनयना' क. ४. 'मनुष्यपशो' क. ५. 'चेष्टानुवादेन' क, 'चेष्टानुवादिना' ख. ६. 'तादृशेष' ख-ग. ७. 'वचनैः' क-पुस्तके नास्ति. ८. 'भवति' क-पुस्तके नास्ति. ९. 'यच्चविलोकितं' ख-ग. १०. 'प्रीतिप्रदानं' ख. ११. 'तदधिका मदनप्रवृत्तिः' क. १२. 'कलहायमानौ नृत्यतः' ख. १३. 'निःसारिताः फुट्टकामिश्राः' ग. १४. 'चमरसेनग्राम' क, 'चमरिग्राम' ग. १५. 'बटुः' क, 'कुविन्दः' ख. १६. 'अहो धिक्' क. 'हा धिक् हा धिक्' ग. १७. 'तयोपासितकवानया रजकदुहित्रा' ख. १८. 'रजन्या' क-पुस्तके नास्ति. १९. 'आभाति मे हृदयम्' ख. २०. 'संगतौ' क. २१. 'प्रमादमधुराः' ख.

प्रातर्विह्वलयन्ति नः स्मृतिपथारूढा निगूढा मनः
कृत्याकृत्यविचारनिष्ठुरकथासंबन्धगन्धच्छिदः ॥ २४ ॥

(परिक्रम्य ।)

**दिगम्बरः**—अल्ले भिक्खुआ, दूलं गच्छ । असदिसजादिफंसदूसिदो सि । (क)

**व्यसनाकरः**—धिङ्मूर्ख, जातिरेव नास्ति । तथा च सुगतमतानुगं वचः ।

एतासु पञ्चस्ववभासिनीषु प्रत्यक्षबोधस्फुटमण्डलीषु ।
साधारणं पश्यति हन्त नो यः शृङ्गं शिरस्यात्मन ईक्षते सः ॥ २५ ॥

किं चास्मन्मते क्षणिकाः सर्वे भावाः । न ह्यात्मा स्थायीति । तत्कुत्र रजकीस्पर्शनम् ।

**दिगम्बरः**—ता किं दिण्णो दोस उववण्णोत्थि णो वा । (ख)

**व्यसनाकरः**—विनाशशीला भावा जायन्ते ।

**दिगम्बरः**—अल्ले भिक्खुआ, उप्पत्तिक्खणो विणासक्खणो त्ति पल्स्पलाविलुद्धम् । ता भिण्णो उप्पत्तिक्खणो त्ति भिण्णो विणासक्खणो त्ति । (ग)

**सभासलिः**—(सहासम् ।)

शृणोति श्रुतिहीनोऽपि जातिहीनोऽपि जातिमान् ।
स्वीकृतक्षणभङ्गोऽपि जेतुमन्यं समीहते ॥ २६ ॥

(क) अरेरे भिक्षुक, दूरं गच्छ । असदृशजातिस्पर्शदूषितोऽसि ।

(ख) तत्किं दत्तो दोष उपपन्नोऽस्ति न वा ।

(ग) अरेरे भिक्षुक, उत्पत्तिक्षणो विनाशक्षण इति परस्परविरुद्धम् । तद्भिन्न उत्पत्तिक्षण इति भिन्नो विनाशक्षण इति ।

१. 'प्राप्य ध्यानकथा न च स्मृतिपथा-' क. २. 'श्रुति' ख. ३. निगदामनाः क-ख. ४. 'सौगतपादानुगं वचः' ख. ५. 'पञ्चस्वपि वस्तुधीषु' ख. ६. 'परस्परप्रबोधस्फुटमङ्गुरासु' ख. 'प्रत्यक्षबोध स्फुटमण्डलासु' ग. ७. 'तत्. क्व रजकीस्पर्शः' ख. 'तत्कुतो रजकीकुचस्पर्शः' ग. ८. 'विनाशस्वभावतां याति' ग. ९. 'बहु' ग. १०. 'सहर्षम्' ख.

**व्यसनाकरः**—धिङ्मूर्ख, किमनेन शब्द[1]च्छलेन । अहं प[2]ञ्चाख्यानपठनार्थं दन्तुरया समाहूतः । तत्किमनेन वृथा भिक्षुकलहेन[3] ।

**[4]सभासलिः**—तत्किं तत्र गतो भवान् ।

**व्यसनाकरः**—(अश्रुत्वैव मदनमञ्जरीमवलोक्य ।)

किं[5]मपि किमपि कापि कापि लभ्या सखीभ्यः (?)
पृथुलशिथिलनेत्रप्रान्तकान्ति[6]र्वचोभिः ।
उषसि सुरतसंपत्ताण्डवाडम्बराणि
प्रथयति शिथिलाङ्गी कस्यचित्पुण्यभाजः ॥ २७ ॥

(ततः कलहं कृत्वा दिगम्बरेण[7] निःसारितो व्यसनाकरः ।)

**दिगम्बरः**—(परिवृत्य ।) भो उवज्झाअ महाभाअ, हगे कामाउले । विवाहसद्धालुणी एसा वि कुट्टणी[8] तरुणी व्व पडिहादि । ता मज्झ कदे पदाणेण पसीददु । मअणमञ्जरी उण तुम्ह अणुरत्ता भोदु । (क)

**सभासलिः**—(ततः संकेतस्थाने मदनमञ्जरीमवलोक्य स्वगतम् ।)

आयातामि कथं नमामि चरणौ वामः[9] स्खलत्यूरुतो
मामालिङ्ग्य मृगेक्षणे क्षण[10]मिह व्यालुप्यतां संभ्रमः ।
इत्यासन्नरतेस्तरङ्गितदृशः कम्पाकुलायाः पुन-
[11]स्तस्याः स्यादभिसार एष समयः स्व[12]प्नेऽपि शान्तिः कुतः ॥ २८ ॥

(दिगम्बरं प्रति ।) युक्तमुक्तं भवता । किं तु दन्तुरां स्वीकारयामि तावत् ।

---

(क) भो उपाध्याय महाभाग, अहं कामाकुलः । विवाहश्रद्धालुरेषापि कुट्टनी तरुणीव प्रतिभाति । तन्मम कृते प्रदानेन प्रसीदतु । मदनमञ्जरी पुनर्युष्मदनुरक्ता भवतु ।

---

१. 'शब्दवाक्यच्छलेन' ख. २. 'सुरापानार्थं' ख. ३. 'किममुना शुष्कवादेन' ख, 'भिक्षोः शुष्ककलहेन' ग. ४. 'मिथ्याशुक्रः' ख. ५. 'किमपि ललितभावा कापि सभ्या' ख, 'किमपि किमपि जल्पन्त्येकतः····' ग. ६. 'कान्ता' ख. ७. 'मिथ्याशुक्रेन' ख. ८. 'कुट्टनीं' क-ख. ९. 'दासः स्खलत्यग्रतो' ग. १०. 'क्षणमिव व्याकुप्यतां विभ्रमः' क, 'व्यावर्त्यतां संभ्रमः' ग. ११. 'तेन स्यादपरोऽभिसारसमयः' ख. १२. 'स्वप्नेऽतिकान्तः कुतः' क, 'स्वप्नोऽपि शान्तक्रमः' ग.

(उपसृत्य ।) दन्तुरे, त्वद्गुणाकृष्टोऽयं दिगम्बरस्त्वामभिलषति । त्वं चाद्यापि नवनवतिवर्षदेशीया युवतिः । तथाहि ।

निविडितनूपुरमधुराः कस्य निगूढा न सन्ति ते निधयः ।
रिपुरिव यदि न विसर्पति करकिसलयवलयझंकारः ॥ २९ ॥

तदनुष्ठीयतां युवयोर्विवाहः ।

**दन्तुरा**—(सलज्जम् ।) जं तुम्हाणं संमदं भोदि । (क)

**सभासलिः**—(सविमर्शं विषण्णं दिगम्बरमवलोक्य ।) युक्तमुक्तं व्यासेन—

'वेपथुर्मलिनं वक्त्रं दीना दृग्गद्गदः स्वरः ।
मरणे यानि चिह्नानि तानि चिह्नानि याचके' ॥ ३० ॥

तद्विवाहाय समाहूयतां जङ्गमनामा चतुर्वेदः ।

(प्रविश्य ।)

**जङ्गमः**—अद्य मम कुट्टनीविवाहव्याकृष्टस्य भुजाभ्यां गङ्गां समुत्तीर्य समागतस्य संध्यापि विस्मृता । अहह, आमन्त्रितस्यापि मे संध्यावन्दनासक्तस्य महती वेलातिक्रान्ता । तन्न युक्तम् । तथा चाह भगवान्व्यासः—

'स्वकार्यव्यापृतेनापि धर्मः कार्योऽन्तरान्तरा ।
दाम्ना बद्धोऽपि हि भ्राम्यन्ग्रासग्रासं करोति गौः' ॥ ३१ ॥

(उपसृत्य ।)

**क्षपणकः**—चउव्वेअ, तुम्ह चलणजुअलं पणमामि । (ख)

**चतुर्वेदः**—

दोषाकरमुखीमेनां दन्तुरां प्राप्य चण्डिकाम् ।
भज त्वं शूलिनः कान्तिं श्मशानाश्रमवासिनः ॥ ३२ ॥

---

(क) यद्युष्माकं संमतं भवति ।

(ख) चतुर्वेद, युष्मच्चरणयुगलं प्रणमामि ।

---

१. 'सरभसमुपसृत्य' ग. २. 'निपतन्नूपुर' ख. ३. 'याच्ञादीनं' ख. ४. 'तद्विवाहार्थमानीयतामनयोरुन्मत्तमानसयोः' ग. ५. 'दूगणनामा' ख. ६. 'ततः प्रविशति दूगणः । दूगणः' ख. ७. 'अद्य मया कुट्टनीविवाहे भोज्यभोजनार्थिना बुभुक्षितेन भुजाभ्यां कष्टेन गङ्गामुत्तीर्य समागतेन' ख. ८. 'अत एवोक्तं व्यासेन' ग. ९. 'चञ्चिकाम्' ख-ग.

**सभासलिः**—भो भोः चतुर्वेद, सत्वरमनुष्ठीयतामनयोर्विवाहः।

**चतुर्वेदः**—(सहासम्।)

स्तनौ प्रचलितावस्या विमर्दार्ताविवोन्मुखौ।
विशुष्कस्य नितम्बस्य वार्तां कर्तुमिवोद्यतौ॥ २३॥

तदद्यैव ज्येष्ठानक्षत्रे शनैश्चराधिष्ठिते धनुषि लग्ने युक्तः स्यादनयोर्विवाहः।

**सभासलिः**—तत्रैव वैधव्यं ध्रुवम्।

**चतुर्वेदः**—उपरितनभागे यदा वैधव्यं तदा को दोषः।

**सभासलिः**—साधूक्तम्।

**चतुर्वेदः**—(दिगम्बरमङ्कपुष्पैरलंकृत्य।) तदुपसर्पतु तावदेनां वरवेषधारी करग्रहणाय दिगम्बरः।

(ततः प्रविशति वरवेषधारी दिगम्बरः।)

**चतुर्वेदः**—(स्वस्त्ययनार्थं पुष्पाक्षतान्यादाय।)

जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥ २४॥

**दिगम्बरः**—(कुट्टनीं प्रति शनैः।) तुम्हे किं वेसामाई उत वेसा। जइ वेसा ता गहणकं लेहु। अह जइ वेसामाई ता अभिवादेमि। (क)

**दन्तुरा**—अण्णस्सिं समए भणिस्सदि। (ख)

(दिगम्बरः करग्रहणं कृत्वोपविशति।)

**सभासलिः**—अस्मिन्कन्यादानसमये दक्षिणार्थं सुगन्धताम्बूलार्थं च पदेहडाग्रामो मया दत्तः। मधुपर्कार्थं विमहडाग्रामश्च।

---

(क) यूयं किं वेश्यामाता उत वेश्या। यदि वेश्या तद्ग्रहणकं गृहाण। अथ यदि वेश्यामाता तदभिवादये।

(ख) अन्यस्मिन्समये भणिष्यति।

१. 'विमर्दार्ताविव' ख. २. 'प्रचलितौ' क. ३. 'उत्सुकौ' क. ४. 'मिथ्याशुक्रः—तत्र वैधव्यं जायते' ख. ५. 'ध्रुवं' क-पुस्तके नास्ति. ६. 'उपरिभागे वैधव्यमस्तीति को दोषः' ख. ७. 'सभासलिः—साधूक्तम्' क-ग-पुस्तकयोर्नास्ति. ८. 'अङ्कपुष्पैः' ख-ग-पुस्तकयोर्नास्ति. ९. 'परिक्रामति' ख. १०. 'पुष्पाक्षतमादाय पठति' ख ११. 'दत्तावग्रामविहमडाग्रामौ तुभ्यमहं प्रदत्तवान्' ख.

**चतुर्वेदः**—भो भो उपाध्याय, यावदाभ्यां लीलागारे रतिर्न दीयते तावत्कुतो यौतुककौतुकम् ।

**सभासलिः**—एतयोरत्र कौतुकागारे महाशय्या क्रियताम् । यो यत्र म्रियते तस्य तत्रैव दाहो युक्तः ।

**चतुर्वेदः**—(उभावप्यवलोक्य ।) अपनीतोऽस्य हट्टविलासिनीविमर्देन विगन्धः । तदलं कालविलम्बेन । प्रदीयतां मे वैवाहिकी दक्षिणा ।

(दिगम्बरो हरीतकीयुगलमुपनयति ।)

**चतुर्वेदः**—(सकोपम् ।) अरे रे निर्लज्ज नग्नक लुञ्चितकेश दिगम्बर, अनेकव्रतोपवासनियमपरस्य शूद्रप्रतिग्रहनिवृत्तस्य चतुर्वेदाध्यायिनः शुक्लस्य महाब्राह्मणस्य मम दक्षिणाप्रलोपस्त्वया कर्तव्यः । तदेनामादाय यास्यामि । (इति परस्परं दक्षिणाकलहाकुलौ नृत्यतः ।)

**कुलव्याधिः**—(परिक्रम्य ।)

विहसन्तकअन्तनहच्छेडा अहवा तिमिराणं घडा णिविडा ।
भअवाणसमाणसमुल्लसिआ मिलिआ जमि रक्खसरक्खसिआ ॥ २५ ॥
कणकङ्कणलम्भिअबाहुलदा घणकुन्तलआ मुहभूसणआ ।
वरिसा उण मेहजलाकुलिआ णिविडन्तपओहरमण्डलिआ ॥ २६ ॥ (क)

(इति पुनर्नृत्यतः ।)

(क) विहसत्कृतान्तनखच्छेदा अथवा तिमिराणां घटा निविडा ।
भगवत्समानं समुल्लसिता मिलिता यथा राक्षसराक्षसिकाः ॥
कनककङ्कणलम्भितबाहुलता घनकुन्तलका मुखभूषणकाः ।
वर्षाः पुनर्मेघजलाकुलिता निबिडितपयोधरमण्डलिताः ॥

१. 'यावदस्माकं न दीयते' ख. २. 'क्रियते दाहः' ख. ३. 'विमर्दनेन तयोर्गन्धः' ख, 'वेदिविमर्दनानयोर्गन्धः' ग. ४. 'नग्नक लुञ्चितकेश दिगम्बर' क-ग-पुस्तकयोर्नास्ति. ५. 'न कर्तव्यः' ख. ६. 'गच्छामि' क. ७. 'अन्योन्यं दक्षिणाकलहायमानौ नृत्यतः' क, 'दक्षिणार्थमन्योन्यं कलहायमानौ नृत्यतः' ग. ग-पुस्तके 'नृत्यतः' अस्मादनन्तरं 'भुक्ता हि मया गिरयः स्नातोऽहं वह्निना पिबामि वियत् । हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्यामि ॥' इत्यधिकमस्ति. ८. 'नृत्यति' ख, 'नृत्यन्त उत्पतन्ति' ग.

**सभासलिः**—

चुम्बन्तः सरसीमुखाम्बुजवनं पान्थप्रमोदच्छिदः
प्रोन्मीलन्नवमालिकापरिमलाः श्रीखण्डसंबन्धिनः ।
संभोगश्रमवैरिणः स्मरशरव्यापारविस्तारिणः
कार्णाटीभुजवल्लिबन्धविकलाः सर्पन्ति मन्दानिलाः ॥ ३७ ॥

अपि च ।

भूदेवस्वस्तिवादस्तिरयतु दुरितं नीरुजः सन्तु सन्तः
सन्तु प्रौढारिवीरव्रजविजयकलाशालिनः क्षोणिपालाः ।
आस्तां विद्वत्प्रकाण्डश्रवणपुटचमत्कारि काव्यं कवीना-
मस्तु व्यामोहशान्तिः सृजतु हृदि मुदं निश्चलां चन्द्रचूडः ॥ ३८ ॥

(इति निष्क्रान्ताः सर्वे ।)

दन्तुरापरिणयो नाम द्वितीयोऽङ्कः ।

---

**समाप्तमिदं लटकमेलकं नाम प्रहसनम् ।**

१. 'मल्लिकासुरभिकाः' क. २. 'जीवातवः' ख. ३. 'अपि च' क-ख-पुस्तकयो-र्नास्ति. ४. 'निर्जराः सन्तु तुष्टाः' ख. ५. 'विद्वच्चकोर' ख-ग.